It will be seen that of the commentators whose dates are known more or less approximately the earliest is Cinna-bhaṭṭa, who, we have seen, lived in the second half of the 14th century A. D.. He does not, however, seem to be the earliest commentator. If we compare his commentary with the *Nyāya-pradīpa* we cannot fail to be convinced that one is to a large extent a faithful reproduction of the other. The question arises who borrowed from whom? Now a careful comparison will easily show that the former is fuller and more detailed than the latter. The presumption, therefore, is that the former is later in time than the latter. This agrees with the fact that the long winding complex definitions of certain terms peculiar to the Nyāya and Vaiśeṣika systems, which are an indication of a later age are found almost to a profusion in the commentary of Cinnabhaṭṭa, especially in the second half of it, but are conspicuous by their absence in the *Nyāya-pradīpa.* Probabilities therefore are in favour of the inference that the *Nyāya-pradīpa* is earlier than the gloss of Chinna-bhaṭṭa and must be assigned to 1300 A. D. at the latest. This year may, therefore, be looked upon as the *terminus ad quem* in the date of Keśavamiśra, the author of the Tarkabhāṣā. The *terminus a quo* is furnished by the author himself by his mention of Udayana, who as shown above, lived about the close of the 10th century. Keśavamiśra must, therefore, have flourished somewhere between 1000 and 1300 A. D.

Mr. Surendralala Gosvamin in his edition of the Tarka-bhāṣā mentions a tradition which makes Keśavamiśra a native of the Sarisava village in the Mithilā country and a grandson of [Abhinava] Vācaspati. Keśavamiśra of the Tarkabhāṣā is, according to this tradition, identical with Keśavamiśra the author of *Dvaita-pariśiṣṭa.* In this latter work Keśavamiśra refers to the opinions expressed by his *Parama-guru* in the *Tattvāloka* and *Kṛtya-mahārṇava.* The author of these works is [Abhinava] Vācaspati, who, therefore, was the *Parama-guru* or grandfather of Keśavamiśra. But this tradition has no ground to stand upon, because we know that [Abhinava] Vācaspati's time falls in the latter

half of the 15th century[1], and his grandson Keśavamiśra has, therefore, to be assigned to 1550 A. D. at the earliest. The latter, cannot, therefore, be identical with the author of the Tarkabhāṣā, as one of its commentators, viz., Cinnabhaṭṭa, himself flourished about 1400 A. D.

In the list of the commentaries cited above there is one called *Tarka-dīpikā* by Keśava. This raises a suspicion in the mind that this Keśava may be the same as the author of the Tarkabhāṣā. The case is not unlike that of the *Tarka-saṃgraha* and the *Tarka-dīpikā* both composed by one and the same author, viz., Annaṃbhaṭṭa, of which the first is the text and the second its gloss. It is possible that similarly Keśavamiśara wrote the Tarkabhāṣā and afterwards composed his gloss upon it called *Tarka-dīpikā*. The latter work has been noticed by A. C. Burnell in his *Classified Index to the Sanskrit Manuscripts in the Palace at Tanjore* (p. 118). I regret I had no access to this manuscript, but if it can be obtained for an examination, it may enable us to settle the question. In the prologue we are told that Keśava belonged to the Lokākṣi (Laugākṣi) *gotra* and was a Mādhyaṁdina and that his father was called Ananta-bhaṭṭa.

---

## III.

The present edition of the Tarkabhāṣā is based upon a collation of the following Mss. :

A. This Ms. belongs to the Deccan College collection now deposited at the Bhandarkar Oriental Research Institute and bears No. 755 of 1884–87.

Extent — foll. 30. Lines 10; Letters 38 to a line. Leaves No. 12–14 missing.

Beginning:— ॐ नमः श्रीमहावरदाय ॥

---

1. *Ibid*, pp. 270–71.

End:— संवत् १५८८ वर्षे आषाढ सुदि ७ भौमे त्रिवाडी–पद्मनाथ–पठनार्थं तथा अन्येषां परोपकाराय लिषितमिदं ॥ श्रीरस्तु ॥ शुभं भवतु ॥। छ ॥ ॥ श्रीः ॥ ॥ छ ॥।

This is a very neatly and beautifully written manuscript and seems to have been thoroughly revised as evidenced by the corrections inserted. It is the earliest of the Mss. collated and presents a most correct text. It has therefore been chiefly relied upon in the preparation of the text.

B. This Ms. also belongs to the Deccan College collection now deposited at the Bhandarkar Oriental Research Institute and bears No. 749 of 1887–91.

Extent — foll. 68 ; lines 7 ; letters 24 to a line.

Beginning:— ॥ छ ॥ उँ नमः श्रीपरमात्मने ॥

End:— ॥ संवत् १६५३ वर्षे वैसाष सुदी २ सोम । लिखाईतं भट्टश्रीविश्रामजि । लिष्यते पुरणमलकाईस्थ–माथुरे ॥ ॥ शुभमस्तु ॥

It is written on thick leaves and in bold letters and gives, on the whole, a correct text.

C. This Ms. also belongs to the Deccan College collection now deposited at the Bhandarkar Oriental Research Institute and bears No. 134 of 1871–72.

Extent — foll. 30 ; lines 11 ; 40 letters to a line.

Beginning:— छ ॥ श्रीसर्वज्ञसरस्वतीगुरुभ्यो नमः ॥

Though no date has been given of the Ms, its leaves are old and are in places broken. It contains, on the whole, a correct text.

D. This Ms. also belongs to the Deccan College collection now deposited at the Bhandarkar Oriental Research Institute and bears No. 750 of 1887–91.

Extent — foll. 40 ; lines 9 ; letters 32 to a line.

Beginning:— सिद्धिः श्रीगणेशाय नमः ॥

End:— ॥ छ ॥ शुभमस्तु ॥ ॥ श्रीगोपालाय नमः ॥
॥ छ ॥ छ ॥ छ ॥ छ ॥ श्रीरामो जयति ॥ ॥ संवत् १६६० वर्षे अस्वनि [ आश्विन ] वदी १२ शुक्रवासरे श्रीअर्गपुरग्रामे श्रीमद्-कव [ रशा ] हिराज्ये पुस्तकं लिपीकृतवान् ॥ श्रीचतुर्भुजेन लिषापितं ॥ शुभं ॥ ॥

Leaves 4 and 5 are missing. It is on the whole, correct.

The following Mss. also were consulted in the preparation of the edition :

1. From the Deccan College collection, No. 746 of 1887–91. Extent — foll. 26 ; lines 11 ; letters 36.

The first two leaves are missing.

End:— संवत् १६६३ वर्षे नभसि मासे सिते पक्षे सप्तम्यां तिथौ । उपकेशगच्छे वाचनाचार्य–श्रीभावरत्नानां विनयपण्डित–श्रीधर्मसिंह-स्यान्त्येवासिना जसाह्वयेन लिख्यतेयं तर्कपरिभाषा ॥ श्रीरस्तु ॥

2. Kindly lent by M. M. Pandit Durgaprasad Dvivedi, Principal of the Sanskrit Pāṭha-śālā, Jaipur. It consists of 37 leaves, is written on large leaves and with beautiful character. Text not very correct.

3. Belongs to Pandit Lālchandra of the Adālat Diwani, Jaipur. Bears the date Saṁvat 1783.

4–5. Two Mss. kindly lent to me by the late Mr. Hari Narayan Apte from the Ānandāśrama. One consists of 24 leaves and is an old Ms. The other is comprised of 49 leaves and is a new Ms., consisting not only of the text but also Balabhadra's commentary on it. Both present a fairly correct text.

In the preparation of the text of the commentary the following three Mss, from the Deccan College collection were used :

A. No. 758 of 1884–87.

Extent — foll. 65 ; Lines 15 ; Letters 43.

End:— संपूर्णा श्रीरस्तु ॥ शुभं भवतु ॥

Leaves very much worn. On the whole correct text.

B. No. 752 of 1887–91.

Extent — foll. 68 ; Lines 13 ; Letters 40.

End:— ॥ छ ॥ छः ॥ छः ॥ श्रीः ॥ श्रीः ॥ शुभं भवतुः ॥ कल्याणमस्तुः ॥ साहा–श्रीवछा–भार्या–बाई गुरु दे मु॰साह–सहिसकरणे...... न भंडारे लाष्यायितं मु॰ वर्द्धमान–शांतिदास–परिपालनार्थं ॥ छ ॥ ग्रं॰ २५००

Written in beautiful Jaina character. Leaves modern. Text not very trustworthy.

C. No. 285 of 1882–83.

Extent — foll. 40 ; Lines 17 ; Letters 60.

The first two leaves missing.

Written in small character. Text on the whole correct, and agrees with A. No variants therefore are shown.

---

॥ श्रीः ॥

# अथ श्रीकेशवमिश्रविरचिता

# तर्कभाषा ।

बालोऽपि यो न्यायनये प्रवेशमल्पेन वाञ्छत्यलसः श्रुतेन ।
संक्षिप्य[1] युक्त्यन्विततर्कभाषा विरच्यते तस्य कृते मयैषा ॥ १ ॥

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिध्दान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निः[2]श्रेयसाधिगम इति न्यायस्यादिमं सूत्रम् । अस्यार्थः[3]— प्रमाणा[4]दिषोडशपदार्थतत्त्वज्ञा[5]नान्मोक्षप्राप्तिर्भवतीति । न च प्रमा[6]णादीनां तत्त्वज्ञानं सम्यग्[7] ज्ञानं तावद्भवति या[8]वदेषामुद्देशलक्षणपरीक्षा न क्रियन्ते । यदाह भाष्यकारः—'त्रिविधा[9]स्य शास्त्रस्य प्रवृत्तिः । उद्देशो लक्षणं परीक्षा चेति ।' त[10]त्रोद्देशस्तु नाममात्रेण संकीर्तनम्[11] । तच्चास्मिन्नेव सूत्रे कृतम् । लक्षणं त्वसाधारणधर्मवचनम् । यथा गोः सास्नादिमत्त्वम् । ल[12]क्षितस्य लक्षणमुपपद्यते न वेति विचारः परीक्षा । तेनैते लक्षणपरीक्षे प्रमाणादीनां तत्त्वज्ञानार्थं कर्तव्ये ।

तत्रापि प्रथममुद्दिष्टस्य[13] प्रमाणस्य तावल्लक्षणमुच्यते । प्रमाकरणं प्रमाणम् । त[14]त्र च प्रमाणं लक्ष्यं प्रमाकरणं लक्षणम् । ननु प्रमायाः करणं चेत्

---

1 A has 'संक्षिप्य' and B. C. D. have 'संक्षिप्त.'
2 C. 'निश्रेयसाधिगमः'
3 B. 'अस्यायमर्थः'
4 D. 'प्रमाणादीनां'
5 B. adds 'सम्यक्ज्ञानात्' and has in margin 'इतरभिन्नत्वेन ज्ञानं सम्यक्ज्ञानम्'
6 B. omits 'प्रमाणादिषोडशपदार्थानां'
7 B. 'सम्यक् ज्ञानं'
8 B. 'यावदेवैषां' D. 'यावन्नैषां'
9 C. 'त्रिधास्य' B. & D. 'चास्य'
10 B. C. & D. omit 'तत्र'
11 B. adds in margin 'वस्तु' and C. also.
12 B. & D. 'यथालक्षितस्यैतल्लक्षणं'
13 B. C. 'प्रथममुद्दिष्टस्यैव'
14 B. 'अत्र च' C. 'तत्र प्रमाकरणलक्षणं प्रमाणं लक्ष्यं'. D. 'अत्र प्रमाणं'

प्रमाणं तर्हि[1] तस्य फलं[2] वक्तव्यं करणस्य फलवत्त्वनियमात् । सत्यम् । प्रमैव फलं साध्यमित्यर्थः । यथा छिदाकरणस्य परशोश्छिदैव फलम्[3] । का पुनः प्रमा यस्याः करणं प्रमाणम् । उच्यते । यथार्थानुभवः प्रमा । यथार्थ इत्ययथार्थानां संशयविपर्ययतर्कज्ञानानां निरासः । अनुभव इति स्मृतेर्निरासः । अनुभवो नाम स्मृतिव्यतिरिक्तं ज्ञानम् । किं पुनः करणम् । साधकतमं[4] करणम् । अतिशयेन[5] साधकं साधकतमं प्रकृष्टं कारणमित्यर्थः । ननु साधकं कारणमिति पर्यायस्तदेव न ज्ञायते किं तत्[6] कारणमिति । उच्यते । यस्य कार्यात् पूर्वभावो नियतोऽनन्यथासिद्धश्च तत् कारणम् । यथा तन्तुवेमादिकं पटस्य । यद्यपि पटोत्पत्तौ[7] रासभादेर्दैवादागतस्य पूर्वभावो विद्यते तथापि नासौ नियतः । तन्तुरूपस्य तु[8] नियतः पूर्वभावोऽस्त्येव किं त्वन्यथासिद्धः पटरूपजननोपक्षीणत्वात् । पटं प्रत्यपि कारणत्वे कल्पनागौरवात्[9] । तेनानन्यथासिद्धनियतपूर्वभावित्वं कारणत्वम्[10] । अनन्यथासिद्धनियतपश्चाद्भावित्वं कार्यत्वम् । यत्तु कश्चिदाह—कार्यानुकृतान्वयव्यतिरेकि[11] कारणमिति । तदयुक्तम् । नित्यविभूनां व्योमादीनां कालतो देशतश्च व्यतिरेकासंभवेनाकारणत्वप्रसङ्गात् । तच्च कारणं[12] त्रिविधम् । समवाय्यसमवायिनिमित्तभेदात् । तत्र यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणम् । यथा तन्तवः पटस्य समवायिकारणम् । तन्तुष्वेव[13] पटः समवेतो जायते न[14] तुर्यादिषु । ननु तन्तुसंबन्ध इव तुर्यादिसंबन्धोऽपि पटस्य विद्यते तत् कथं[15] तन्तुष्वेव[16] पटः[17] समवेतो[18] जायते न तुर्यादिषु । सत्यम् । द्विविधः संबन्धः संयोगः समवायश्च ।

---

1 B. omits 'तर्हि'
2 C. 'तत्फलं'
3 B. C. & D. omit 'फलम्'
4 B. 'साधकतमं अतिशयितं च साधकं साधकतमं प्रकृष्टं कारणमित्यर्थः'
5 C & D. 'अतिशयितं'
6 B. 'तत् किं कारणमिति'
7 A. B. C. 'घटोत्पत्तौ'
8 C. & D. omit 'तु'
9 D. 'गौरवं स्यात्'
10 C. adds 'इति सिद्धम्'
11 B. 'व्यतिरेकं'
12 B. 'तत्कारणं'
13 B. C. & D. 'तन्तुष्वेव हि'
14 D. omits 'न तुर्यादिषु'
15 B. 'कथं नियतं'
16 C. adds 'हि'
17 B. omits 'पटः'
18 D. 'समवेतः पटः'

तत्रायुतसिद्धयोः संबन्धः समवायः। अन्ययोस्तु[1] संयोग एव। कौ पुनरयुतसिद्धौ। ययोर्मध्ये एकमविनश्यद्[2]पराश्रितमेवावतिष्ठते तावयुतसिद्धौ। तदुक्तम्[3]—

> 'तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः।
> अनश्यदेकमपराश्रितमेवावतिष्ठते ॥'

यथा अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेष[4]नित्यद्रव्ये चेति। अवयव्यादयो हि यथाक्रममवयवाद्याश्रिता एवावतिष्ठन्तेऽविनश्यन्तः; विनश्यदवस्थास्त्वनाश्रिता एवावतिष्ठन्ते[5]ऽवयव्यादयः[6] यथा तन्तुनाशे सति[7] पटः। यथा वा[8]श्रयनाशे सति गुणः। विनश्यत्ता तु विनाशकारणसामग्रीसांनिध्यम्। तन्तुपटावप्यवयवावयविनौ, तेन तयोः संबन्धः समवायः। अयुतसिद्धत्वात्। पटतुर्योस्तु[9] न समवायोऽयुतसिद्धत्वाभावात्[10]। न हि तुरी पटाश्रिता[11]एवावतिष्ठते नापि पटस्तुर्याश्रितोऽतस्तयोः संबन्धः[12] संयोग एव। तदेवं तन्तु[13]समवेतः पटः। (यत्[14]समवेतं कार्यमुत्पद्यते तत् समवायिकारणम्[15]।) अतस्तन्तव[16] एव पटस्य समवायिकारणं न तु[17] तुर्यादि[18]। पटश्च स्वगतरूपादेः[19]। एवं मृत्पिण्डोऽपि[20] घटस्य समवायिकारणं घटश्च स्वगतरूपादेः समवायिकारणम्[21]। ननु यदैव

---

1 C. omits 'तु'
2 C. omits 'अविनश्यद्'
3 D. adds 'हि'
4 B. 'अन्त्यविशेष-'
5 B., 'अवयव्यादयो हि अवतिष्ठन्ते'
6 D., 'अवयवादयोवतिष्ठन्ते' C. omits 'अवयव्यादयः'
7 C. & D. omit 'सति'
8 B., 'यथा चाश्रय' C. omits 'यथा वा'
9 B. 'तुरीपटयोस्तु'
10 B., C. & D. 'अयुतसिद्ध्यभावात्'
11 C. 'तुर्यपटाश्रितैव'
12 C. omits 'संबन्धः'
13 C. 'तन्तुष्वेव पटः समवेतः'
14 A. & B have in margin 'यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्'
15 C. 'समवायकारणम्'
16 C. 'अतस्तन्तुरेव समवायिकारणं'
17 C. omits 'तु'
18 B. 'तुर्यादिः'
19 B. adds 'समवायिकारणम्' and C. adds 'समवायकारणम्'
20 B. omits 'अपि'
21 B C. omit 'समवायिकारणम्'

घटादयो[1] जायन्ते तदैव तद्गतरूपादयोऽपि[2]। अतः[3] समानकालीनत्वाद् गुणगुणिनोः सव्येतरविषाणवत्[4] कार्यकारणभावो नास्ति[5] पौर्वापर्याभावात्। अतो[6] न समवायिकारणं[7] घटादयस्तद्गतरूपादीनां कारणविशेषत्वात् समवायिकारणस्य[8]। अत्रोच्यते। न गुणगुणिनोः समानकालीनं जन्म किं तु द्रव्यं निर्गुणमेव प्रथममुत्पद्यते पश्चात् तत्समवेता गुणा[9] उत्पद्यन्ते। समानकालोत्पत्तौ[10] गुणगुणिनोः समानसामग्रीकत्वात् भेदो न स्यात् कारणभेदनियतत्वात् कार्यभेदस्य। तस्मात् प्रथमे क्षणे निर्गुण एव घटो गुणेभ्यः पूर्वभावी भवति[11] गुणानां कारणम्[12]। तदा[13] कारणभेदोऽप्यस्ति घटो हि घटं प्रति न कारणमेकस्यैव[14] पौर्वापर्याभावात्। न हि स एव[15] तमेव प्रति पूर्वभावी[16] पश्चाद्भावी चेति[17] स्वगुणान् प्रति पूर्वभावित्वाद्भवति गुणानां कारणम्[18]। नन्वेवं सति[19] प्रथमे क्षणे घटोऽचाक्षुषः स्यादरूपिद्रव्यत्वाद्। वायुवत्। तदैव हि द्रव्यं चाक्षुषं यन्महत्त्वे सत्युद्भूतरूपवत्, अद्रव्यं[20] च स्याद् गुणाश्रयाभावाद्[21] गुणाश्रयो द्रव्यमिति[22] द्रव्यलक्षणयोगात्[23]। सत्यम्। प्रथमे क्षणे परमसूक्ष्मो यदि घटश्चक्षुषा न गृह्यते तदा का नो हानिः। न[24] हि सगुणोत्पत्तिपक्षेऽपि निमेषावसरे घटो गृह्यते। तेन व्यवस्थितमेतान्निर्गुण[25] एव घटः

---

1 B. 'पटादयो'
2 B. adds 'जायन्ते'
3 B. C. & D. 'ततः'
4 C. 'सव्येतरगोविषाणवत्'
5 B. & C. add 'एव'
6 C. 'अत एव'
7 B. 'रूपादीन् प्रति न समवायिकारणत्व पटादीनाम्'
8 D. 'घटादीनां कारणविशेषत्वात्समवायिकारणस्य'
9 B. 'गुणादयः'
10 C. omits 'समानकालोत्पत्तौ गुणगणिनोः समानसामग्रीकत्वाद् भेदो न स्यात् कारणम्'
11 B. adds 'तु'
12 B adds 'इति'
13 C. 'समवायिकारणम्'
14 D. misses 4th & 5th Leaves.
15 B. omits 'एव'
16 C. 'पूर्वभावि'
17 B. & C. omit 'इति'
18 C. 'समवायिकारणम्'
19 B. 'अपि'
20 C. 'अद्रव्यत्वं'
21 B. 'गुणाश्रयत्वाभावात्'
C. 'द्रव्यमिति हि'
22 B. adds 'हि'
23 B. C. 'द्रव्यलक्षणम्'
24 B. omits 'न हि सगुणोत्पत्तिपक्षेऽपि निमेषावसरे घटो गृह्यते'
25 B. 'एव'

प्रथममुत्पद्यते[1] द्वितीयादिक्षणेषु चक्षुषा गृह्यते । न च प्रथमे क्षणे अद्रव्यत्वापत्तिः; समवायिकारणं द्रव्यमिति द्रव्यलक्षणयोगात् । योग्यतया गुणाश्रयत्वाच्च[2] । गुणाश्रयत्वं तु गुणात्यन्ताभावानधिकरणत्वम् । असमवायिकारणं तद्[3]उच्यते यत् समवायिकारणप्रत्या[4]सन्नमवधृतसामर्थ्यमसम[5]वायिकारणम् । यथा तन्तुसंयोगः पटस्यासमवायिकारणं तन्तुसंयोगस्य गुणस्य[6] पटसमवायिकारणेषु तन्तुषु[7] गुणिषु[8] समवेतत्वेन समवायिकारणप्रत्यासन्नत्वादनन्यथासिद्धनियतपूर्वभावित्वेन पटं प्रति कारणत्वाच्च । एवं तन्[9]तुरूपं पटगतरू[10]पस्यासमवायिकारणम् । ननु पटगतरूपस्य पटः समवायिकारणमतस्तद्गत[11]स्यैव कस्यचिद्धर्मस्य[12] पटरूपं प्रत्यसमवायिकारणत्वमु[13]चितम् । समवायिकारणप्रत्यासन्नत्वात् । न तु[14] तन्तुरूपस्य । तस्य[15] समवायिकारणप्रत्यासन्नत्वाभावा[16]त् । मैवम्[17] । सम[18]वायिकारणसमवायिकारणप्रत्यासन्नस्यापि[19] परंपरया समवायिकारणप्रत्यासन्नत्वात् । निमित्तकारणं तदुच्यते यन्न समवायिकारणं नाप्यसमवायिकारणमथ च कारणम् । यथा वेमादिकं पटस्य निमित्तकारणम्[20] । तदेतद्भावानामेव त्रिविधं कारणमिष्यते[21] । अभावस्य तु निमित्तकारणमात्रं तस्य क्वचिदप्यसमवायात् समवायस्य[22] भावद्वयनिमित्तत्वात्[23] । तदेतस्य त्रिविधस्य[24] मध्ये यदेव कथमपि सातिशयं तदेव करणम्[25] । तेन

---

1 B. 'प्रथमसुद्यते'
2 A. has in margin 'गुणाश्रयत्वं तु गुणात्यन्ताभावानधिकरणत्वम् । असमवायिकारणं तु तदुच्यते'
3 C. omits 'तद्'
4 A. पुस्तके लिपिभेदः पत्रद्वये ।
5 B. C. 'तदसमवायिकारणं'
6 B. omits 'गुणस्य'
7 C. 'तन्तुषु गुणेषु'
8 B. omits 'गुणिषु'
9 B. 'तन्तुगतरूपं'
10 C. 'पटगतरूपं'
11 B. & C. 'तेन तद्गतस्यैव',
12 B. and C. omit 'धर्मस्य'
13 B. C. omit 'उचितम्'
14 B., 'न तु तन्तुगतरूपस्य' C. omits 'तु'
15 B. omits 'तस्य'
16 B. & C. 'प्रत्यासन्नत्वात्'
17 B. 'नैवम्'
18 B. and C. add 'तत्'
19 C. adds 'तन्तुरूपस्य'
20 B. omits 'निमित्तकारणम्'
21 B. and C. omit 'इष्यते'
22 B. adds in margin 'च'
23 B. C. 'भावद्वयधर्मत्वात्'
24 B. adds in margin 'कारणस्य' C. 'त्रिविधकारणमध्ये'
25 B. 'करणमिति'

व्यवस्थितमेवं[1] प्रमाकरणं प्रमाणमिति । यत्त्वनधिगतार्थगन्तृ प्रमाणमिति लक्षणम् । तन्न । एकस्मिन्नेव घटे घटोऽयं घटोऽयमिति( इदानीं[2] केतकीगन्ध इत्यत्रातीन्द्रियस्यापि कालस्य ग्रहणान्नित्यमिति ) धारावाहिकज्ञानानां गृहीतग्राहिणामप्रामाण्यप्रसङ्गात् । न चान्यान्यक्षणलव[3]-विशिष्टविषयीकरणादनधिगतार्थगन्तृता[4][5] । प्रत्यक्षेण सूक्ष्मकालभेदानाकलनात् भेदग्रहे हि क्रियादिसंयोगान्तानां चतुर्णां यौगपद्याभिमानो न स्यात् । (क्रिया[6] क्रियातो विभागो विभागात् पूर्वसंयोगनाशस्ततश्चोत्तरसंयोगोत्पत्तिरिति । ) ननु प्रमायाः कारणानि बहूनि सन्ति प्रमातृप्रमेयादीनि तान्यपि किं कारणानि[7] उत नेति । उच्यते । सत्यपि प्रमातरि प्रमेये च[8] प्रमानुत्पत्तेः इन्द्रियसंयोगादौ [ तु[9] ] सत्यविलम्बेन प्रमोत्पत्तेरत इन्द्रियसंयोगादिरेव कारणम् । प्रमायाः[10] साधकत्वाविशेषेऽप्यनेनैवोत्कर्षेणास्य प्रमात्रादिभ्योऽतिशयितत्वादतिशयितं[11] साधकं साधकतमं तदेव करणमित्युक्तम् । अत इन्द्रियसंयोगादिरेव[12] प्रमाकरणत्वात् प्रमाणं न प्रमात्रादि । तानि[13] प्रमाणानि चत्वारि । तथा च न्यायसूत्रम्-प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति[14] ।

किं पुनः[15] प्रत्यक्षम् । साक्षात्कारिप्रमाकरणं[16] प्रत्यक्षम् । साक्षात्कारिणी च प्रमा सैवोच्यते येन्द्रियजा । सा च द्विधा सविकल्पकनिर्वि-

---

1 B. C. 'व्यवस्थितमेतल्लक्षणं'
2 B. omits 'इदानीं' इत्यारभ्य 'नित्यमिति' इति पर्यन्तम्
3 B. 'क्षणविशिष्ट'
4 B., 'विषयिकरणात्' C. omits 'लव' but has in margin
5 B. 'गतार्थाधिगन्तृता'
6 A. has in it margin
B. has in Margin 'क्रिया क्रियातो विभागः विभागात् पूर्वसंयोगनाशः । उत्तरदेशसंयोगोत्पत्तिः'; C. has 'क्रिया क्रियातो विभागः विभागात् पूर्वसंयोगनाशः । तत उत्तरसंयोगोत्पत्तिरिति' and after it adds 'भेदग्रहे हि'
7 B. 'करणानि'
8 A. omits 'च'
9 B. Adds 'तु'
10 B. and C. omit 'प्रमायाः'
11 B. adds 'च'
12 B. 'इन्द्रियार्थसंयोगादिकरणत्वात्'
13 C. adds 'च'
14 C. omits 'इति,' इतिपर्यन्तं पत्रद्वये लिपिभेदः A. पुस्तके.
15 B. 'किं तत् प्रत्यक्षम्'
16 B. 'साक्षात्कारिप्रमायाः करणं'

कल्पकभेदात् । तस्याः करणं त्रिविधम् । कदाचिदिन्द्रियं कदाचिदि-
न्द्रियार्थसंनिकर्षः कदाचिद् ज्ञानम्[1] । कदा पुनरिन्द्रियं करणम् । यदा
निर्विकल्पकरूपा प्रमा फलं तदेन्द्रियं[2] करणम् । तथाह्यात्मा मनसा संयुज्यते
मन इन्द्रियेण इन्द्रियमर्थेन इन्द्रियाणां[3] वस्तुप्राप्य[4]कारित्वनियमात् । ततो-
ऽर्थसंनिकृष्टेनेन्द्रियेण[5] निर्विकल्पकं नामजात्यादियोजनाहीनं वस्तुमात्रा-
वगाहि[6] किंचिदिदमिति ज्ञानं जायते[7] । तस्य ज्ञानस्येन्द्रियं करणं
छिदाया इव परशुः । इन्द्रियार्थसंनिकर्षोऽवान्तरव्यापारः[8] छिदाकरणस्य
परशोरिव दारुसंयोगः । निर्विकल्पकं ज्ञानं फलं परशोरिव छिदा ।
कदा पुनरिन्द्रियार्थसंनिकर्षः करणम् । यदा निर्विकल्पक[9]ज्ञानान्तरं
सविकल्पकं ज्ञानं[10] नामजात्यादियोजनात्मकं डित्थोऽयं ब्राह्मणोऽयं
श्यामोऽयमिति विशेषणविशेष्यावगाहि ज्ञानमुत्पद्यते तदा[11] इन्द्रियार्थ-
संनिकर्षः करणम्[12] । निर्विकल्पकमेवा[13]वान्तरव्यापारः । सविकल्पकं
ज्ञानं फलम् । कदा पुनर्ज्ञानं करणम् । यथोक्त[14]सविकल्पकज्ञाना[15]नन्तरं
हानोपादानोपेक्षाबुद्धयो जायन्ते तदा निर्विकल्पकं ज्ञानं करणम् । सवि-
कल्पक[16]ज्ञानमवान्तरव्यापारः । हानादिबुद्धयः फलम् । ( त[17]ज्जन्यस्त-
ज्जन्यजनकोऽवान्तरव्यापारः । यथा कुठारजन्यः कुठारदारुसंयोगः
कुठारजन्यच्छिदाजनकः । अत्र ) [18]कश्चिदाह—सविकल्पकादीनामपी-
न्द्रियमेव करणं यावन्ति त्वान्तरालिकानि संनिकर्षादीनि तानि सर्वा-

---

1 B. adds 'करणम्'
2 B. omits 'तदेन्द्रियं करणम्'
3 B. adds 'च'
4 B. 'वस्तुप्राप्यप्रकाशकारित्वनियमात्'
5 B. 'तेनेन्द्रियेण'
6 C. 'वस्तुमात्रावगाही'
7 B. 'जन्यते'
8 B. notes in margin 'तज्जन्यत्वे सति तज्जन्यजनकोऽवान्तरव्यापारः'
9 B. 'निर्विकल्पानन्तरं'
10 B. & C. omit 'ज्ञानं'
11 C. adds 'तस्य ज्ञानस्य'
12 C. 'संनिकर्षकरणं'
13 B. & C. omit 'एव' and add 'ज्ञानं'
14 C. 'यदोक्त'
15 B. omits 'ज्ञान' B., 'सविकल्पकं' C. omits 'ज्ञानम्'
16 B. C. 'हानोपादानोपेक्षाबुद्धयः' [:]
17 A. omits 'तज्जन्यस्तज्जन्यजनको' इत्यारभ्य 'अत्र' इतिपर्यन्तम् । B. & C. omit also this line-
18 C. adds 'अत्र'.

ण्य[1]वान्तरव्यापार[2]ः । इन्द्रियार्थयोस्तु[3] यः[4] साक्षात्कारिप्रमाहेतुः स संनिकर्षः[5] षड्विधः[6] एव । तद् यथा— संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः समवेतसमवायो विशेषणविशेष्यभावश्चेति[7] । तत्र[8] यदा चक्षुषा घटविषयं ज्ञानं जन्यते तदा चक्षुरिन्द्रियं घटोऽर्थः । अनयोः संनिकर्षः[9] संयोग एवायुतसिद्ध्यभावात् । एवं मनसान्तरेणेन्द्रियेण यदात्मविषयं ज्ञानं जन्यतेऽहमिति तदा मन इन्द्रियमात्मार्थः । अनयोः संनिकर्षः[10] संयोग एव । कदा[11] पुनः संयुक्तसमवायः संनिकर्षः । यदा चक्षुषा घटगतरूपा[12]दिकं गृह्यते घटे श्यामं रूपमस्तीति[13] तदा चक्षुरिन्द्रियं घटरूपमर्थः[14] । अनयोः संनिकर्षः संयुक्तसमवाय एव । चक्षुःसंयुक्ते घटे रूपस्य समवायात् । एवं मनसात्मसमवेते सुखादौ गृह्यमाणे अयमेव संनिकर्षः । घटगतपरिमाणादिग्रहे[15] चतुष्टयसंनिकर्षोऽप्याधिकं कारणमिष्यते, सत्यपि संयुक्तसमवाये तदभावे दूरे परिमाणाद्यग्रहात्[16] । चतुष्टयसंनिकर्षो यथा । इन्द्रियावयवैरर्थावयवानाम्[17], इन्द्रियावयवै[18]रर्थावयविनः, इन्द्रियावयविना[19]र्थावयविनः, अर्थावयवैरिन्द्रियावयविनः संनिकर्ष[20] इति । यदा पुन[21]श्चक्षुषा घट[22]समवेते रूपादौ रूपत्वादिसामान्यं तदा चक्षुरिन्द्रियं, रूपत्वादिसामान्यमर्थः, अनयोः संनिकर्षः संयुक्तसमवेत-

---

1 B. 'सर्वाण्यपि'
2 A. B. D. 'व्यापाराः'
3 C. omits 'तु यः'
4 B. adds 'संनिकर्षः'
5 B. omits 'संनिकर्षः'
6 C. 'स च षड्विध एव'
7 B. omits 'इति'
8 C. omits. 'तत्र'
9 B. 'संनिकर्षसंयोग एव'
10 B. 'संयोग एव संनिकर्षः'
11 B. omits 'कदा पुनः संयुक्तसमवायः संनिकर्षः' & C. has it in margin.
12 B. 'चक्षुरादिना घटगतरूपं'
13 C. 'तिष्ठतीति'
14 C. 'घटोऽर्थः'
15 C. 'परिमाणादिग्रहणे'
16 B. C. 'परिमाणाद्यग्रहणात्'
17 B., C. 'इन्द्रियावयविनार्थावयविनः'
18 B. C., 'इन्द्रियावयवैरर्थावयाविनः'
19 B. C. 'इन्द्रियावयविनार्थावयवानां संयोग इति'
20 C. 'कदा पुनः संयुक्तसमवेतसमवायः'
21 C. omits 'पुनः'
22 B., 'घटरूपसमवेतरूपत्वादिसामान्यज्ञानं जन्यते' C. 'घटरूपादिसमवेतं रूपत्वादिसामान्यं'

समवाय एव । यतश्चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात्[1] । कदा पुनः समवायः[2] संनिकर्षः । यदा श्रोत्रेन्द्रियेण शब्दो गृह्यते तदा श्रोत्रमिन्द्रियं[3] शब्दोऽर्थः । अनयोः संनिकर्षः समवाय एव । श्रोत्रस्य[4] चाकाशात्मकत्वाच्छब्दस्य[5] चाकाश[6]-गुणत्वाद् गुणगुणिनोश्च समवायात् । कदा[7] पुनः समवेतसमवायः[8] संनिकर्षः । यदा पुनः[9] शब्दसमवेतं शब्दत्वसामान्यं[10] श्रोत्रेन्द्रियेण गृह्यते तदा श्रोत्रमिन्द्रियं शब्दत्वादिसामान्यमर्थः[11] । अनयोः संनिकर्षः समवेतसमवाय एव । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् । कदा पुनर्विशेषणविशेष्यभावश्चे[12]न्द्रियार्थसंनिकर्षो भवति[13] । यदा चक्षुषा[14] संयुक्ते भूतले घटाभावो[15] गृह्यते इह भूतले घटो नास्तीति (तदा[16] विशेषणविशेष्यभावः संबन्धः ।) तदा चक्षुःसंयुक्तस्य भूतलस्य घटाभावो विशेषणं भूतलं[17] विशेष्यम् । यदा[18] मनःसंयुक्ते आत्मनि सुखाद्यभावो गृह्यतेऽहं सुखादिरहित[19] इति तदा मनःसंयुक्तस्यात्मनः सुखाद्यभावो विशेषणम् । यदा[20] श्रोत्रसमवेते गकारे घत्वाभावो गृह्यते तदा श्रोत्रसमवेतस्य गकारस्य[21] घत्वाभावो विशेषणम् । तदेवं संक्षेपतः पञ्चविध[22]संबन्धान्यतमसंबन्धसंबद्धविशेषणविशेष्यभावलक्षणेनेन्द्रियार्थसंनिकर्षेणाभाव इन्द्रियेण गृह्यते ।

---

1 B. 'समवायः' C. रूपत्वसमवायः.
2 C. समवायसंनिकर्षः करणं.
3 C 'श्रोत्रेन्द्रियं'.
4 B & C have in margin 'कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रं'
5 C. omits 'च आकाशात्मकत्वात्'
6 B. & C. omit 'च'
7 B. omits 'कदा पुनः समवेतसमवायः'
8 C. समवेतः
9 C. omits 'पुनः'
10 B. C. 'शब्दत्वादिसामान्यं'
11 C. 'शब्दसामान्यमर्थः'
12 B. omits 'च'
13 B. C. omit 'भवति'
14 B. 'चक्षुःसंयुक्ते'
15 B. 'घटाद्यभावो'
16 A. B. C. omit 'तदा विशेषणविशेष्यभावः संबन्धः'
17 B. omits 'भूतलं विशेष्यं'; C. 'विशेष्यः भूतलं विशेषणं'
18 B. Adds 'च'
19 B. 'सुखरहित इति'
20 C. Adds 'च'
21 C. 'गस्य'
22 B. omits 'पञ्चविधसंबन्धान्यतमसंबन्ध'

एवं समवायोऽपि । चक्षुःसंबद्धस्य तन्तोर्विशेष्यभूतः[1] [2] पटसमवायो गृह्यते । इह तन्तुषु पटसमवाय इति । तदेवं षोढा संनिकर्षो वर्णितः । संग्रहश्च ।

अक्षजा प्रमितिर्द्वेधा सविकल्पाविकल्पजा[3] ।
करणं[4] त्रिविधं तस्याः संनिकर्षस्तु षड्विधः ॥
घटतन्नीलनीलत्वशब्दशब्दत्वजातयः ।
अभावसमवायौ च ग्राह्याः संबन्धषट्कतः ॥

ननु निर्विकल्पकं परमार्थसत्स्वलक्षणविषयाभावाद्[5] भवतु प्रत्यक्षं सविकल्पकं तु शब्दलिङ्गवदनुगताकारावगाहित्वात् सामान्यविषयं कथं प्रत्यक्षमर्थजस्यैव प्रत्यक्षत्वात् । अर्थस्य च[6] परमार्थतः सत एव तज्जन-[7]कत्वात् । स्वलक्षणं तु परमार्थसत् न तु सामान्यं तस्य प्रमाणनिरस्तविधिभावस्यान्यव्यावृत्त्यात्मनस्तुच्छत्वात् । नैवम्[8] । सामान्यस्यापि[9] वस्तुभूतत्वात् । तदेवं[10] व्याख्यातं प्रत्यक्षम्[11] ॥

लिङ्गपरामर्शोऽनुमानम् । येन ह्यनुमीयते तदनुमानम् । लिङ्गपरामर्शेन चानुमीयतेऽतो[12] लिङ्गपरामर्शोनुमानम् । तच्च धूमादिज्ञानम् । अनुमितिं प्रति करणत्वात्[13] । अग्न्यादिज्ञानमनुमितिः । तत्करणं[14] धूमादिज्ञानम् । किं पुनर्लिङ्गं कश्च तस्य परामर्शः । उच्यते । व्याप्तिबलेनार्थगमकं लिङ्गम् । यथा धूमोऽग्नेर्लिङ्गम्[15] । तथाहि यत्र धूमस्तत्राग्निरिति साहचर्यनियमो

---

1 C. 'एव'

2 B. C. 'विशेषणभूतः'

3 'C सविकल्पाविकल्पिका' A. 'विकल्पो निर्विकल्पकः'; B. omits this Stanza.

4 B 'त्रिविधं करणं तस्याः'

5 B C. 'परमार्थतः स्वलक्षणविषयं'

6 C. omits 'च'

7 B. C. omit 'तत्'

8 B. 'नैवम्'

9 B. C. omit 'अपि'

10 C. omits 'तत्'

11 B. adds 'अनुमानमिदानीं व्याख्यायते किं तदनुमानम्'

12 B. C. D. omit 'च'

13 D. breaks 'करणत्वात्' but has in margin 'करणत्वाच्च'

14 D. adds 'हि'

15 C. runs–'लिङ्गपरामर्शोऽनुमानम् । येन ह्यनुमीयते तदनुमानम् । व्याप्तिबलेनार्थगमकं लिङ्गम् । अनुमितिं प्रति करणत्वात् । अग्न्यादिज्ञानमनुमितिः । तत्करणं हि धूमादिज्ञानम् । किं तत्र लिङ्गं कश्च तस्य परामर्शः । उच्यते । लिङ्गपरामर्शेनानुमीयतेऽतो लिङ्गपरामर्शोऽनुमानम् । तच्च धूमादिज्ञानम् । व्याप्तिबलेन यद् यस्य गमकं तत्तस्य लिङ्गं यथा धूमोऽग्नेर्लिङ्गम् ।'

व्याप्तिः[1]। तस्यां गृहीतायामेव[2] धूमोऽग्निं गमयत्यतो[3] व्याप्तिबलेना[4][ग्न्य?]नुमापकत्वाद् धूमोऽग्नेर्लिङ्गम् । तस्य तृतीयं ज्ञानं लिङ्गपरामर्शः । तथाहि प्रथमं तावन्महानसादौ भूयो भूयो धूमं पश्यन् वह्निं पश्यति तेन भूयोदर्शनेन धूमाग्न्योः स्वाभाविकं[5] संबन्धमवधारयति यत्र धूमस्तत्राग्निरिति । यद्यपि[6] यत्र यत्र मैत्रीतनयत्वं तत्र तत्र श्यामत्वमिति[7] भूयोदर्शनं समानं तथापि मैत्रीतनयत्वश्यामत्वयोर्न स्वाभाविकः[8] संबन्धः, किंत्वौपाधिक[9] एव, शाकाद्यन्न[10]परिणामस्योपाधेर्विद्यमानत्वात् । तथाहि[11] श्यामत्वे मैत्रीतनयत्वं न प्रयोजकं किं च[12] शाकाद्यन्न[13][14]परिणतिभेद एव प्रयोजकः[15]। प्रयोजकश्चोपाधिरित्युच्यते । न च धूमाग्न्योः संबन्धे कश्चिदुपाधिरस्ति । अस्ति[16] चेद् योग्यो वाऽयोग्यो वा । अयोग्यस्य शङ्कितुमशक्यत्वात् योग्यस्य चानुपलभ्यमानत्वाद्[17] यत्रोपाधिरस्ति[18] तत्रोपलभ्यते । यथाग्नेर्धूमसंबन्ध आर्द्रेन्धनसंयोगः । यथा[19] हिंसात्वस्या[20]धर्म[21]साधनत्वेन संबन्धे[22] निषिद्धत्वमुपाधिः । मैत्रीतनयत्वस्य[23] श्यामत्वेन[24] संबन्धे शाकाद्यन्न[25]परिणतिभेद उपाधिः[26]। न चेह धूमस्याग्निसाहचर्ये[27]

---

1 B. 'अतिव्याप्तिः' (?)
2 B. adds 'न तु अगृहीतायाम्'
3 B. अतिव्याप्तिबलेन.
4 B. C. D अग्न्यनुमापकत्वात्; A has it in margin.
5 B. स्वाभाविकं ज्ञानं संभवति.
6 C. ननु यद्यपि.
7 C. D. 'श्यामत्वमपीति समानम्.'
8 B. 'स्वाभाविकसंबन्धः'
9 किं तूपाधिकएव.
10 D. 'शाकाद्याहार'
11 D. omits 'तथाहि'
12 B. C. D. 'किं तु'
13 B. 'शाकाद्याहार.'
14 D. omits 'आदि'
15 D. omits प्रयोजकः
16 C. omits 'अस्ति चेद् योग्योऽयोग्यो वा'
17 A. has in margin योग्यस्योपाधेरनुपलभ्यमानत्वात्'; B.C.D. have 'योग्यस्य चानुपलभ्यमानत्वात्'
18 C. D. omit 'अस्ति'
19 C. D. omit 'यथा'
20 D. 'हिंसात्वस्य च'
21 B. 'चाधर्मस्य साधनत्वेन सह' C. 'वा धर्मेण सह संबन्धे'
22 D. adds 'साध्ये'
23 C. D. 'मैत्रीतनयत्वस्य च श्यामत्वेन सह'
24 B. 'मैत्रीतनयत्वश्यामत्वसंबन्धे'
25 B. 'शाकाद्याहारपरिणतिभेदः' D. omits 'आदि'
26 A has in margin 'उपाधिः; C. omits 'उपाधिः'
27 B. 'धूमाग्निसंबन्धे'

कश्चिदुपाधिरस्ति । यद्यभविष्यत् तदाऽद्रक्ष्यत्[1] । ततो[2] दर्शनाभावा-न्नास्तीति[3] तर्कसहकारिणानुपलम्भसनाथेन प्रत्यक्षेणैवोपाध्यभावोऽवधार्यते[4] । तथा[5] चोपाध्यभावग्रहणजनितसंस्कारसहकृतेन[6] साहचर्यग्राहिणा प्रत्यक्षेणैव धूमाग्न्योर्व्याप्तिरवधार्यते । तेन धूमाग्न्योः स्वाभाविक एव[7] संबन्धो न त्वौपाधिकः । स्वाभाविकश्च[8] संबन्धो व्याप्तिरुच्यते[9] । तदनेन न्यायेन धूमाग्न्योर्व्याप्तौ पूर्वं[10] गृह्यमाणायां महानसे यद्धूमज्ञानं तत् प्रथमम् । पर्वतादौ पक्षे यद्धूमज्ञानं तद् द्वितीयम् । ततः पूर्वगृहीतां[11] धूमाग्न्योर्व्याप्तिं स्मृत्वा तत्र[12] पर्वते पुनर्धूमं परामृशति अस्त्यत्र पर्वतेऽग्निना व्याप्तो धूम इति तदिदं धूमज्ञानं तृतीयम् । तच्चा[13]वश्यमभ्युपेतव्यम्[14]अन्यथा यत्र[15] यत्र धूमस्तत्र[16] तत्राग्निरित्येव स्यादिह तु कथम[17]ग्निना भवितव्यं तस्मादिहापि धूमोऽस्तीति ज्ञान[18]मन्वेषितव्यम् । अयमेव लिङ्गपरामर्शोऽनुमितिं[19] प्रति करणत्वाच्चानुमानम् । तस्माद[20]स्त्यत्र पर्वतेऽग्निरित्यनुमितिज्ञान[21]मुत्पद्यते । ननु[22] प्रथमं यन्महानसे[23] धूमज्ञानं तत्कथं[24] नाग्न्यनुमापकम् । सत्यम् । व्याप्तेरगृहीतत्वात् । गृहीतायामेव व्याप्तावनुमित्युदयात् । अथ व्याप्तिनिश्चयोत्तरकालं महानस एवाग्निरनुमीयताम् । मैवम् । अग्नेर्दृष्टत्वेन संदेहाभावात् । संदिग्धश्चा[25]र्थोऽनुमीयते । यथोक्तं भाष्यकृता—

---

1 A. B. C. 'अद्रक्ष्यत' (?)
2 B. omits 'ततो'
3 B. 'इत्यादितर्कसहचारिणा'
4 B. 'गृह्यते'
5 B. 'तथा हि च'; C. D. 'तथा हि'
6 C. adds 'भूयोदर्शनतत्संस्कारसहकृतेन'; D. adds 'भूयोदर्शनजसंस्कारसहकृतेन.'
7 B. omits 'एव'
8 C. D. 'स्वाभाविकस्तु'
9 B. 'व्याप्तिरित्युच्यते'
10 B. C. D. omit 'पूर्वम्'
11 B. 'पूर्वगृहीतायाम्'
12 B. C. D. 'तत्रैव'
13 B. C. D. 'एतच्च'
14 B. C. D. 'अभ्युपेयं'
15 B. C. D. 'यत्र धूमः'
16 B. C. D. 'तत्राग्निः'
17 D. omits 'कथं' & adds 'न'
18 C. 'ज्ञानमन्वेषणीयम्'
19 C. D. 'अनुमितिकरणत्वात्'
20 C. 'तस्मादत्रास्ति'
21 B. 'अनुमितिरुत्पद्यते'
22 C. D. 'ननु कथं यत् प्रथमं'
23 B. D. 'महानसे यद्धूमज्ञानं'
24 B. C. D. 'तन्नाग्न्यनुमापकं'
25 D. omits 'च'

'नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्ततेऽपि तु संदिग्धेऽर्थे[1]'। अथ पर्वतगतमात्रस्य पुंसो यद्धूमज्ञानं तत्कथं नाग्नेरनुमापकम्[2]। अस्ति चात्राग्निसंदेहः साधकबाधकप्रमाणाभावेन[3] संशयस्य न्यायप्राप्तत्वात्। सत्यम्। अगृहीतव्याप्तेरिव गृहीतविस्मृतव्याप्तेरपि पुंसोऽनुमानोदयेन व्याप्तिस्मृतेरप्यनुमितिहेतुत्वात्। धूमदर्शनाच्च[4] व्याप्तिं स्मरति यो यो धूमवान् स सोऽग्निमान्[5] यथा महानस इति[6]। तेन धूमदर्शने जाते व्याप्तिस्मृतौ[7] भूतायां यद्धूमज्ञानं तत्तृतीयम्। धूमवांश्चायमिति। तदेवाग्निमनुमापयति[8] नान्यत्। तदेव लिङ्गपरामर्शः। तेन व्यवस्थितमेतल्लक्षणं[9] लिङ्गपरामर्शोऽनुमानमिति॥

तच्चानुमानं द्विविधं स्वार्थं परार्थं चेति। स्वार्थं[10] स्वप्रतिपत्तिहेतुः। तथाहि[11] स्वयमेव महानसादौ विशिष्टेन प्रत्यक्षेण धूमाग्न्योर्व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः[12] पर्वतवर्तिनीमविच्छिन्नमूलामभ्रंलिहां धूमलेखां[13] पश्यन्धूमदर्शनोद्भूतसंस्कारो[14] व्याप्तिं स्मरति यत्र धूमस्तत्राग्निरिति। ततो[15]ऽत्रापि धूमोऽस्तीति प्रतिपद्यते[16] तस्मादत्र पर्वतेऽग्निरस्तीति[17] स्वयमेवं[18] प्रतिपद्यते तत्स्वार्थानुमानम्[19]। यत्तु[20] कश्चिदं धूमादग्नि-

1 C. omits 'अर्थे'
2 B. C. D. 'नाग्निमनुमापयति'
3 B. 'साधकप्रमाणाभावे नैव'; C. 'साधकप्रमाणाभावे'
4 A. 'धूमदर्शनाच्चोद्बुद्धसंस्कारो'
5 B. 'आग्निमानिति'
6 B. omits 'इति'
7 B. 'व्याप्तिस्मृतौ जातायां' C. 'स्मृतौ च जातायाम्'
8 C. 'तदेवमग्निमनुमापयति'
9 B. C. 'तेन व्यवस्थितमेतल्लिङ्गपरामर्शोऽनुमानमिति लक्षणम्'
10 C. D. 'स्वप्रतिपत्तिहेतुः स्वार्थम्'
11 C. 'यथा हि'
12 C. 'संदिहानः स'
13 B. 'धूमरेखाम्'
14 B. 'धूमदर्शनाच्चोद्भूतसंस्कारो' A. in margin 'धूमदर्शनाच्चोद्बुद्धसंस्कारो'
15 C. D. omit 'ततः'
16 C. 'प्रतिपद्य'
17 B. 'वह्निरस्तीति'; A. has in margin, तस्मादत्र पर्वतेऽग्निरप्यस्तीति स्वयमेवं प्रतिपद्यते'
18 B. omits 'स्वयमेवं'; C. D. 'स्वयमेव'
19 C. adds 'अथ परार्थानुमानम्'
20 B. 'यत्तु स्वयं धूमादग्निमनुमाय'; A. 'यत्तु काश्चिद् धूमादग्निमनुमाय' but has in margin, 'स्वयं'

मनुमाय परं बोधयितुं पञ्चावयवं[1] वाक्यं प्रयुङ्क्ते तत् परार्थानुमानम् । तद् यथा । पर्वतोऽयम्[2]अग्निमान्[3] । धूमवत्त्वात् । यो[4] धूमवान् सोऽग्निमान्[5] । यथा महानसः । तथा चायं तस्मात्तथेति । अनेन वाक्येन प्रतिपादितात् पञ्चावयवोपपन्नाल्लिङ्गात्[7] परोऽप्यग्निं प्रतिपद्यते । तेनैतत् परार्थानुमानम् । अत्र[8] पर्वतेऽग्निमत्त्वं[9] साध्यम् । धूमवत्त्वं[10] हेतुः । स चान्वयव्यतिरेकी । अन्वयेन व्यतिरेकेण च[11] व्याप्तेः[12] । तथाहि यत्र[13] धूमवत्त्वं तत्राग्निमत्त्वं यथा महानस इत्यन्वयव्याप्तिः । महानसे धूमाग्न्योरन्वयसद्भावदर्शनात्[14] । एवं यत्राग्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद[15] इति व्यतिरेकेण[16] व्याप्तिः । महाह्रदेऽग्निधूमव्यतिरेकस्य[17] सद्भावदर्शनात् । व्यतिरेकव्याप्तेरयं[18] क्रमः । अन्वयव्याप्तौ यद् व्याप्यं तदभावोऽत्र व्यापकोऽन्वयव्याप्तौ यच्च[19] व्यापकं तदभावोऽत्र व्याप्य इति । तदुक्तम्[20]—

> 'व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
> तयोरभावयोस्तस्माद्[21]विपरीतः प्रतीयते ॥
> [22]अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते ।
> साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनान्वयः[23] ॥'
> व्याप्यस्य[24] वचनं पूर्वं व्यापकस्य ततः परम् ।
> एवं स्फुटीकृता व्याप्तिः स्फुटीभवति तत्त्वतः ॥

1 C. 'पञ्चावयवानुमानवाक्यं'; D. 'अनुमानवाक्यं'
2 B. omits 'अयम्'
3 D. 'वह्निमान्'
4 B. C. D. 'यो यो'
5 B. C. D. 'स सो'
6 B. 'वह्निमान्'
7 C. 'पञ्चरूपोपपन्नात्'
8 B. 'तत्र'
9 B. C. D. 'पर्वतस्याग्निमत्वं'
10 B. 'धूमत्वं'
11 B. C. 'चास्य'
12 B. 'व्याप्तेर्विद्यमानत्वात्'
13 B. C. 'यत्र धूमस्तत्राग्निः'
14 B. 'सद्भावस्य'
15 D. 'महाह्रदादौ'
16 B. C. D. 'व्यतिरेकव्याप्तिः'
17 B. C. 'धूमाग्न्योर्व्यतिरेकसद्भावस्य दर्शनात्'; D. 'धूमाग्न्योर्व्यतिरेकसद्भावदर्शनात्'
18 B. 'स्त्वयंक्रमः'
19 B. 'यत्तु व्यापकं तदभावोऽत्र व्याप्य-इति'
20 B. has it in margin.
21 D. 'तद्वत्'
22 D. omits the stanza 'अन्वये साधन etc.'
23 C. 'साधनात्ययः'
24 D. has this stanza in margin.

तदेवं धूमवत्त्वे हेतावन्वयेन व्यतिरेकेण च व्याप्तिरस्ति । यत्तु वाक्ये केवलान्वयव्याप्तिरेव प्रदर्श्यते[1] तदेकेनापि चरितार्थत्वात् । अत्राप्यन्वयस्यावक्रत्वात्[2] प्रदर्शनम् । ऋजुमार्गेण सिद्ध्यतोऽर्थस्य वक्रेण साधनायोगात् । न तु व्यतिरेकव्याप्तेरभावात्[3] । तदेवं धूमवत्त्वं[4] हेतुरन्वयव्यतिरेकी । एवमन्येऽप्यनित्यत्वादौ साध्ये कृतकत्वादयो हेतवो[5]ऽन्वय[6]व्यतिरेकिणो द्रष्टव्याः । कश्चिद् हेतुः केवलव्यतिरेकी । तद् यथा—सात्मकत्वे[7] साध्ये प्राणादिमत्त्वं हेतुः । यथा जीवच्छरीरं सात्मकम् । प्राणादिमत्त्वात् । यत् सात्मकं न भवति तत् प्राणादिमन्न भवति यथा[8] घटः । [9]नेदं जीवच्छरीरं तथा, तस्मान्न तथेति । अत्र[10] हि[11] जीवच्छरीरस्य सात्मकं[12] साध्यं प्राणादिमत्त्वं हेतुः । स[13] च केवलव्यतिरेकी । अन्वयव्याप्तेरभावात् । तथाहि – यत् प्राणादिमत् तत् सात्मकं यथामुक इति दृष्टान्तो नास्ति[14] । जीवच्छरीरं सर्वं पक्ष एव । लक्षणमपि केवलव्यतिरेकी हेतुः । यथा पृथिवीलक्षणं गन्धवत्त्वम् । विवादपदं[15] पृथिवीति[16] व्यवहर्तव्यं गन्धवत्त्वाद् । यन्न पृथिवीति[17] व्यवह्रियते तन्न गन्धवद् । यथा आपः । प्रमाणलक्षणं वा यथा[18] प्रमाकरणत्वम्[19] । तथाहि — प्रत्यक्षादिकं[20] प्रमाणमिति व्यवहर्तव्यं प्रमाकरणत्वात् । यत् प्रमाणमिति

1 D. 'प्रदर्शयते' (?)
2 B. C. 'तत्रान्वयस्य'; D. 'तत्राप्यन्वयस्य'
3 B. 'तथाभावात्'
4 B. 'धूमत्वं'
5 C. D. omit हेतवः but D. has it in margin
6 D. 'अप्यन्वय'
7 B. has in margin 'सात्मकत्वे साध्ये प्राणादिमत्त्वं हेतुः'
8 B. 'यथा पटः'; 'C. यथायं घटः'
9 B. D. 'नचेदं'
10 B. 'अत्र जीवच्छरीरं पक्षस्य सात्मकत्वं साध्यं'
11 C. omits 'हि'
12 D. 'सात्मकत्वं'
13 B. 'स केवलं व्यतिरेकी'
14 C. D. 'नास्तीति'
15 B. C. 'विवादास्पदं'
16 C. omits 'व्यवहर्तव्यम्'; D. omit 'इति व्यवहर्तव्यम्'
17 C. D. omit 'इति व्यवह्रियते'
18 D omits 'यथा'
19 C. 'प्रमाकरणम्'
20 B. C. D. 'प्रत्यक्षादि प्रमाणमिति'

न व्यवह्रियते न तत् प्रमाकरणं यथा प्रत्यक्षाभासादि। न पुन[1]रत्र यत् प्रमाकरणं तत्प्रमाणमिति व्यवहर्तव्यं यथामुक इत्यन्वय[2]दृष्टान्तोऽस्ति प्रमाणमात्रस्य पक्षीकृतत्वात्[3]। अत्र व्यवहारः साध्यो न तु प्रमाणत्वं तस्य प्रमाकरणत्वाद् हेतोरभेदेन साध्याभेददोषप्रसङ्गात्। तदेवं केवलव्यतिरेकिणो दर्शिताः॥

कश्चिदन्यो हेतुः केवलान्वयी। यथा—विशेषोऽभिधेयः। प्रमेयत्वात्। यत् प्रमेयं तदभिधेयम्। यथा घटः। तथा चायं तस्मात् तथेति[4]। अत्र[5] विशेषस्याभिधेयत्वं साध्यं प्रमेयत्वं हेतुः। स च केवलान्वय्येव[6]। यदभिधेयं न भवति तत् प्रमेयमपि न भवति यथामुक इति व्यतिरेक[7]दृष्टान्ताभावात्। सर्वत्र हि[8] प्रामाणिक एवार्थो दृष्टान्तः स[9] च सर्वोऽपि प्रमेयत्वाभिधेयश्चेति। एतेषां[10] चान्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकि[11]हेतूनां त्रयाणां मध्ये यो हेतुरन्वयव्यतिरेकी स पञ्चरूपोपपन्न एव स्वसाध्यं साधयितुं क्षमते न केनापि[12] रूपेण हीनः। तानि पञ्च[13] रूपाणि पक्ष[14]धर्मत्वम्, सपक्षे सत्त्वम्, विपक्षाद् व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति। एतानि[15] पञ्च रूपाणि धूमवत्त्वादन्वय[16]व्यतिरेकिणि हेतौ विद्यन्ते। तथा हि—धूमवत्त्वं पक्षस्य पर्वतस्य[17]

---

1 A. has in margin 'न पुनरत्र' इत्यस्याग्रे—'तथेह तस्मान्न तथेति केवलव्यतिरेकी अन्वयव्याप्तेरभावात्। तथाहि

2 D. omits 'अन्वय'

3 B., 'पक्षीकरणात्'; D. 'पक्षीकरणत्वात्'

4 B. omits इति'

5 B. 'तत्र'

6 B. omits 'एव'

7 B. 'व्यतिरेकी दृष्टान्ताभावात्'

8 D. omits 'हि'

9 C. 'स च प्रमेयश्चाभिधेयश्चेति' D. 'स प्रमेयश्चाभिधेयश्चेति'

10 D. 'एषां'

11 C. & B. 'चान्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकी चेति हेतूनां' but omit 'च'

12 B., 'न एकेनापि'; C 'न त्वेकेनापि'; D. 'न तु केनापि'; A. has in margin 'न त्वेकेनापि'

13 C., 'एतानि'; 'D. तानि तु'

14 A. adds in margin 'यथा'

15 B. C. D. 'एतानि तु'

16 A has in margin 'धूमवत्त्वादान्वयव्यतिरिकिणि,' B. 'धूमवत्त्वादौ अन्वयव्यतिरेकिणि' D. 'धूमवत्त्वान्वयव्यतिरेकिणि'

17 B. omits 'पर्वतस्य'

धर्मः । पर्वते तस्य विद्यमानत्वात् । एवं सपक्षे सत्त्वं सपक्षे[1] महानसे विद्यत इत्यर्थः । विपक्षान्महाह्रदाद्[2] व्यावृत्तिस्तत्र नास्तीत्यर्थः । एव-[3]मबाधितविषयं[4] धूमवत्त्वम् । तथा हि—धूमवत्त्वस्य हेतोर्विषयः साध्यो[5] धर्म-स्तच्चाग्निमत्त्वं केनापि प्रमाणेन न[6] बाधितं न खण्डितमित्यर्थः । एव-मसन् प्रतिपक्षो यस्येत्यसत्प्रतिपक्षं धूमवत्त्वम्[7] । तथा हि—साध्यविप-रीतसाधकं हेत्वन्तरं प्रतिपक्ष इत्युच्यते स च धूमवत्त्वे हेतौ नास्त्येवानु-पलम्भात् । तदेवं पञ्चैव[8] रूपाणि[9] धूमवत्त्वे हेतौ विद्यन्ते । तदेवं[10] धूम-वत्त्वमग्निमत्त्वस्य[11] गमकम् । तेनैवं धूमवत्त्वमग्निमत्त्वस्य साधकम् । अग्नेः पक्षधर्मत्वं हेतोः पक्षधर्मताबलात् सिद्ध्यति । तथाहि—अनुमानस्य द्वे अङ्गे व्याप्तिः पक्षधर्मता चेति[12] । तत्र व्याप्त्या साध्यसामान्यस्य[13] सिद्धिः[14] । पक्षधर्मताबलात् साध्यस्य पक्षसंबन्धित्वं[15] विशेषः सिद्ध्यति । पक्षधर्मेण धूमवत्त्वेन वह्निरपि पर्वतसंबद्ध एवानुमीयते । अन्यथा साध्यसामान्यस्य व्याप्तिग्राहकादेव[16] सिद्धेः कृतमनुमानेन[17] । यस्त्वन्योऽ-प्यन्वयव्यतिरेकी हेतुः स सर्वः[18] पञ्चरूपोपपन्न एव सन्[19] हेतुः । अन्यथा हेत्वाभासः[20], अहेतुरिति यावत् । केवलान्वयी[21] चतूरूपोपपन्न[22] एव स्वसाध्यं साधयति । तस्य हि[23] विपक्षाद्व्यावृत्तिर्नास्ति विपक्षाभावात् । केवलव्यति-

---

1 B. omits 'सपक्षे'
2 B.C.D. 'एवं विपक्षान्महाह्रदात'
3 C. 'अत एव'
4 B. 'अबाधितविषयत्वं'
5 D. 'साध्यधर्मः'
6 B. omits 'न बाधितं'
7 B. 'धूमवत्त्वं हेतुः'
8 B. 'पञ्चधूमवत्त्वे रूपाणि'
9 D. omits एव.
10 B.'तेनैव धूमवत्त्वमग्निमत्त्वस्य गमकं साधकम्' D., तेनैतद्धूमवत्त्वमग्नि-मत्त्वस्य गमकमग्निव(म ?)त्त्वसाध-कम्'
11 C. 'अग्निमत्त्वस्य साधकम्'
12 B. C. D. omit 'इति'
13 B. 'साध्यस्य'
14 D. 'सिद्धिहेतोः'
15 C.'पक्षधर्मत्वविशेषः' D., 'पक्षसंब-न्धित्वविशेषः'
16 B. 'व्याप्तिग्रहणादेव'
17 A. has in margin 'अलम्'
18 C. 'सर्वोऽपि'
19 B. C. 'सद्धेतुः'
20 D. 'हेतुः'
21 D. adds 'एवं'
22 B.'चतु (तू ?) रु (रू?) पयुक्त एव स्व-साध्यं' C., 'चतूरूपयुक्त एव साध्यं' D. चतूरूपयुक्त [ : ? ] साध्यं'
23 B. C. D. omits 'हि' & D. adds 'केवलान्वयिनो'

रेकी चतूरूपोपयुक्तः[1]। तस्य[2] सपक्षे सत्त्वं नास्ति सपक्षाभावात्। के पुनः पक्षसपक्षविपक्षाः। उच्यन्ते। संदिग्धसाध्यधर्मा धर्मी पक्षः। यथा धूमानुमाने पर्वतः पक्षः[3]। निश्चितसाध्यधर्मा[4] धर्मी सपक्षः। यथा तत्रैव[5] धूमानुमाने[6] महानसः[7]। विपक्षस्तु निश्चितसाध्याभाववान् धर्मी[8]। यथा तत्रैव[9] महाह्रद[10] इति[11]। तदेवमन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिणस्त्रयोऽपि[12][13] दर्शिताः। अतोऽन्ये हेत्वाभासाः।

ते चासिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमभेदात् पञ्चैव। तत्रासिद्धस्त्रिविधः[14]—आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्च। आश्रयासिद्धो यथा—गगनारविन्दं सुरभ्यरविन्दत्वात् सरोजारविन्दवत्। अत्र हि गगनारविन्दमाश्रयः स तु नास्त्येव। स्वरूपासिद्धो यथा—शब्दोऽनित्यश्चाक्षुषत्वाद्[15][16] घटवत्। अत्र चाक्षुषत्वं हेतुः। स च शब्दे नास्त्येव श्रावणत्वात्[17]। व्याप्यत्वासिद्धस्तु द्विधा[18]। एको व्याप्तिग्राहकप्रमाणाभावमात्रात्[19][20]। अपरं[21] उपाधिसद्भावात्। तत्र[22] प्रथमो यथा—तत्र[23] यत्

---

1 B. 'चतूरूप एव तस्य सपक्षे सत्वं;' C. 'चतूरूप एव तस्य हि;' D. 'चतूरूपः'

2 D. adds 'हि'

3 C. 'स च पक्षः' D. omits 'पक्षः'

4 D. 'सपक्षस्तु निश्चितसाध्यधर्मा'

5 D. 'अत्र'

6 C. omits 'धूमानुमाने'

7 D. 'महानसम्'

8 C. omits 'धर्मी'

9 D. 'अत्र'

10 B. adds 'धूमानुमाने'

11 C. omits 'इति'

12 B. omits 'त्रयोऽपि'

13 D. omits 'अपि'

14 A. adds in margin 'अनैकान्तिकानध्यवसित' 'लिङ्गत्वेनैनिश्चितो हेतुरसिद्धः' & B. adds in margin 'तत्रानिश्चितपक्षवृत्तिरसिद्धः स च त्रिविधः'

15 B. adds 'इति'

16 B. has in margin नित्यः (?); D. 'यथा नित्यः शब्दः'

17 B. adds in margin 'शब्दस्य'

18 C. D. 'द्विविधः'

19 B. 'व्याप्तिग्राहकप्रमाणाभावात्'

20 C. D. 'मात्रत्वात्'

21 B. 'अपरस्तूपाधिसद्भावात्', C. 'अपरश्चोपाधिसद्भावात्'

22 B. 'अत्र'

23 B. C. D. omit 'तत्र'

सत् तत् क्षणिकम् । यथा घनः । संश्च[1] शब्दादिः[2] । सोपाधिकतया[3] सत्त्वस्य[4] व्याप्यत्वासिद्धावुच्यमानायां[5] क्षणिकत्वमित्यभ्युपगतं[6] स्यात् । द्वितीयो यथा—क्रत्वन्तर्वर्तिनी[7] हिंसा अधर्मसाधनं[8] हिंसात्वात् । क्रतुबाह्यहिंसावत् । तत्र[9] ह्यधर्मत्वे[10] हिंसात्वं न प्रयोजकं किं तु निषिद्धत्वमेव । प्रयोजकमुपाधिरिति यावत् । तथाहि—साध्यव्यापकत्वे सति साधनाव्यापक उपाधिरित्युपाधिलक्षणम् । तच्चास्ति[11] निषिद्धत्वे । निषिद्धत्वं[12] हि[13] साध्यस्याधर्मत्वस्य[14] व्यापकम् । यतो[15] यत्र यत्राधर्मत्वं[16] तत्र तत्रावश्यं निषिद्धत्वमपि[17] । एवं साधनं हिंसात्वं न व्याप्नोति निषिद्धत्वम्[18] । न हि यत्र यत्र हिंसात्वं तत्र तत्रावश्यं निषिद्धत्वम्[19] । यागीयपशुहिंसायां निषिद्धत्वाभावात् । तदेवं[20] निषिद्धत्वस्योपाधेः सद्भावात् अन्यप्रयुक्तं[21] व्याप्त्युपजीवि[22] हिंसात्वं व्याप्यत्वासिद्धमेव । साध्याविपर्यय-

---

1 B. adds 'न च सत्त्वक्षणिकत्वयोर्व्या (र्व्या?) प्तिग्राहकं प्रमाणमस्ति'

2 B. C. 'शब्दादि'; A. has in margin 'विवादास्पदीभूतः शब्दादिः'

3 B. adds 'हेतौ'

4 B. C. D. 'त्वस्य'

5 C. 'सिद्धौ बुद्ध्यमानायां'

6 B., 'अन्यप्रयुक्तं युक्तमित्युपगतं' C. 'प्रयुक्तमभ्युपगतं स्यात्'

7 C. 'क्रतुवर्तिनी'

8 C. 'अधर्मः'

9 B. C. D. 'अत्र'

10 B. 'अधर्मसाधनत्वे'

11 B. 'तच्चास्मिन् निषिद्धत्वे वर्तते'

12 C. omits 'निषिद्धत्वं हि' इत्यारभ्य निषिद्धत्वमपि' इति पर्यन्तम् but C. has 'निषिद्धत्वं हि हिंसा-[ सा ] धनं हिंसात्वं न व्याप्नोति निषिद्धता न हि यत्र यत्र हिंसात्वं तत्र तत्रावश्यं निषिद्धत्वम् । एवं हि साधनं हिंसात्वं न व्याप्नोति निषिद्धता ।'

13 B. adds 'तथाहि'; C. omits 'हि'

14 B. 'अधर्मसाधनत्वस्य' D. 'धर्मस्य'

15 B. omits 'यतो'

16 B. 'अधर्मसाधनत्वं'

17 D. omits 'अपि'

18 B. 'निषिद्धता क्रतुबाह्यहिंसायामधर्मत्वनिषिद्धत्वयोरुभयोर्विद्यमानत्वात् ।

19 B. 'निषिद्धमिति यागे'; A. has it in margin.

20 A. & B. have in margin तदेवं निषिद्धत्वस्योपाधेः सद्भावात्; D. omits it

21 D. adds 'साधनधर्मः सर्वत्र व्याप्यः । साध्यधर्मो व्यापकः'

22 B. C. D. 'अन्यप्रयुक्तप्राप्त्युपजीवि' A. has in margin 'साधनाव्यापकतापक्षे दृष्टान्ते साध्यनिर्णयः' कर्तव्यः सततं सद्भिरिति न्यायविदां मतम्'

व्याप्तेस्तु[1][2] विरुद्धः । स[3] यथा—शब्दो नित्यः कृतकत्वादाकाशवत्[4] । कृतकत्वं हि साध्यनित्यत्वविपरीतानित्यत्वेन व्याप्तम् । यतो यत्[5] कृतकं तद[6]नित्यमेव । न नित्यमित्यतो विरुद्धं कृतकत्वम्[7] । सव्याभि-चारोऽनैकान्तिकः । स द्विविधः । साधारणो[8]ऽसाधारणश्चेति । तत्र पक्ष-सपक्षविपक्षवृत्तिः साधारणः[9] । स[10] यथा । नित्यः[11] शब्दः प्रमेयत्वाद् व्योम-वत् । अत्र हि प्रमेयत्वं हेतुः स[12] तु नित्यानित्यवृत्तिः[13] । सपक्षाद्[14] विपक्षाद् व्यावृत्तो यः[15] सपक्ष[16] एव वर्तते सोऽसाधारणनैकान्तिकः । स यथा[17]— भूर्नित्या[18] गन्धवत्त्वात् । गन्धवत्त्वं हि सपक्षान्नित्याद् विपक्षाद[19]नित्याच्च व्यावृत्तं किं[20] भूमात्रवृत्ति[21] । प्रकरणसमः[22] स एव यस्य हेतोः साध्यविप-रीतसाधकान्तरं[23] विद्यते । यथा शब्दो[24]ऽनित्यो नित्यधर्मरहितत्वात्[25] शब्दो नित्योऽनित्यधर्मरहितत्वात्[26] । अयमेव[27] नामान्तरेण[28] सत्प्रतिपक्ष इति चोच्यते[29] । पक्षे प्रमाणान्तरावधृतसाध्याभावो हेतुर्बाधितविषयः काला-त्ययापदिष्ट इति चोच्यते यथाग्निरनुष्णः कृतकत्वाज्जलवत् । अत्र हि[30]

---

1 B. 'व्यापकस्तु'; C. 'व्याप्तस्तु'
2 D. omits 'तु'
3 C. omits 'स'
4 B. 'घटवत्'
5 B. 'यद् यद्'
6 B. 'तत्तत्'
7 B. 'कृतकम्'
8 B. D. साधारणानैकान्तिकोऽ साधा-रणानैकान्तिकश्चेति' C. 'साधारणा-नैकान्तिकश्च'.
9 C. D. 'साधारणानैकान्तिको यथा शब्दो नित्यः'
10 B. omits 'स'.
11 B. D. 'शब्दो नित्यः'.
12 C. D. 'तत्तु'.
13 C. 'नित्यानित्यद्रव्यवृत्तिः । त्ति' D. 'नित्यानित्यवृत्ति'
14 B. 'सपक्षविपक्षव्यावृत्तः पक्षे वर्तमा-नोऽ साधारणानैकान्तिकः'
15 C. 'यः पक्षे वर्तते'
16 D. omits 'स'
17 B. omits 'स'
18 B. C 'भूमिर्नित्या'.
19 B. C. 'विपक्षाश्चानित्याद् व्यावृत्तं'.
20 'D. omits 'किं'.
21 B. D. 'भूमि'.
22 B. C. 'समस्तु'.
23 B. C. D. 'साधकं हेत्वन्तरं'.
24 A has in margin— 'नित्यत्वे साध्येऽनित्यानां विपक्षता । नित्यानां सपक्षता । अनित्यत्वे साध्ये नित्यानां विपक्षता । अनित्यानां सपक्षता ।'
25 C. & D. add 'इति'
26 B. adds 'इति'
27 B. A. adds 'हि'
28 B. C. & D. omits 'नामान्तरेण
29 B. & D. omits 'च'; B. adds 'इत्युक्ते'
30 C. omits 'हि'

कृतकत्वस्य हेतोः साध्यमनुष्णत्वं तदभावः प्रत्यक्षेणैवावधारितः। स्पार्शनप्रत्यक्षेणोपलम्भात्[1]। इति हेत्वाभासाः[2]। व्याख्यातमनुमानम्[3]।

अतिदेशवाक्यार्थस्मरणसहकृतं[4] गोसादृश्यविशिष्टपिण्डज्ञानमुपमानम्। तथा[5] हि गवयम्[6]जानन्नपि नागरिको[7] यथा गौस्तथा गवय इति वाक्यं[8] कुतश्चिदारण्यकपुरुषाच्छ्रुत्वा[9] वनं गतो वाक्यार्थं स्मरन् यदा गोसादृश्यविशिष्टं पिण्डं[10] पश्यति तदा तद्वाक्यार्थस्मरणसहकृतं[11] गोसादृश्यविशिष्टपिण्डज्ञानमुपमानमुपमितिकरणत्वात्[12]। गोसादृश्यविशिष्टपिण्ड[13]ज्ञानानन्तरम्[14]अयमसौ[15] गवयशब्दवाच्यः पिण्ड[16] इति संज्ञासंज्ञिसंबन्धप्रतीतिरुपमितिः[17]। सैव फलम्। इदं[18] तु प्रत्यक्षानुमानासाध्यप्रमासाधकत्वात् प्रमाणान्तरमुपमानमस्ति। इति[19] व्याख्यातमुपमानम्॥

आप्तवाक्यं शब्दः। आप्तस्तु यथाभूतस्यार्थस्योपदेष्टा पुरुषः। वाक्यं त्वा[20]काङ्क्षायोग्यतासंनिधिमतां पदानां समूहः। अतो गौरश्वः पुरुषो हस्तीति पदानि[21] न वाक्यम्। परस्पराकाङ्क्षाविरहात्। [[22] अग्निना सिञ्चेदित्यपि न वाक्यं योग्यताविरहात्।] न ह्य[23]ग्निसेकयोः पर-

---

1 B. 'स्पर्शनप्रत्यक्षेणोष्णत्वोपलम्भात्' C. D. 'स्पर्शन प्रत्यक्षेणैवोष्ण। त्वोपलम्भात्'
2 B. C. & D. omit 'इति हेत्वाभासाः'
3 D. adds 'एवम्'
4 D. 'सहकृतगोसादृश्य'
5 B. C. D. 'यथा गवय'
6 From 'गव—' A lost 3 pages.
7 B. & C. omit 'नागरिको'
8 B. C. & D. omit 'वाक्यं'
9 D. 'आरण्यपुरुषात्'
10 B. 'गोसादृश्यविशिष्टपिण्डं'
11 D. 'सहकृतगोसादृश्य'
12 उपमितिं करणत्वा C. D. 'उपमितिकरणत्वात्'
13 D. omits 'पिण्ड'.
14 B. 'दर्शनानन्तरं'.
15 C. अयम्'.
16 B. 'वाच्यपिण्ड'.
17 B. & D. omit 'उपमितिः'.
18 C. & D. omit इदं तु' इत्यारभ्य 'अस्ति' इत्यन्तम्.
19 B. & C. omit 'इति' and D. has 'एवम्'.
20 C. omits 'तु'
21 D. omits 'पदानि'
22 B. C. & D. add 'अग्निना सिञ्चेदित्यपि न वाक्यं योग्यताविरहात् and B. & D. omit here 'अपि
23 D. omits 'हि'

स्परान्वययोग्यतास्ति । तथाहि अग्निनेति तृतीया । सेकरूपं[1] कार्यं प्रति करणत्वमग्नेः प्रतिपादितम् । न चाग्निः सेके[2] करणीभवितुं योग्यः । तेन कार्यकरण[3]भावलक्षणसंबन्धे[4]ऽग्निसेकयोरयोग्यत्वा[5]द[6]तोऽग्निना सिञ्चेदिति न वाक्यम् । एवमेकैकशः प्रहरे प्रहरेऽसहो[7]च्चरितानि गामानयेत्यादिपदानि न वाक्यम् । सत्यामपि परस्पराकाङ्क्षायां[8] सत्यामपि[9] [10] परस्परान्वययोग्यतायां[11] परस्परसांनिध्याभावात् । यानि तु साकाङ्क्षाणि योग्यतावन्ति[12] सांनिहितानि पदानि तान्येव वाक्यम् । यथा[13] ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि । यथा[14] च नदीतीरे पञ्च फलानि सन्तीति[15] यथा[16] च तान्येव गामानयेत्यादिपदान्यविलम्बितोच्चरितानि[17] । नन्वत्रापि[18] न पदानि साकाङ्क्षाणि[19] किं त्वर्थाः[20] फलादीनामाधेयानां तीराद्याधाराकाङ्क्षितत्वात् । न च[21] विचार्यमाणे[22]ऽर्था अपि साकाङ्क्षाः । आकाङ्क्षाया इच्छात्मकत्वेन चेतनधर्मत्वात् । सत्यम् । अर्थास्तावत् स्वपदश्रोतर्य[23]न्योन्यविषयाकाङ्क्षाजनकत्वेन[24] साकाङ्क्षा इत्युच्यते[25] । तद्द्वारेण तत्प्रतिपाद-

---

1 D. 'सेकरूपकार्यं'

2 C. 'सेककरणं'

3 C. & D. 'कारणभाव'

4 B. has at margin 'संबन्धेनो (न?)'।

5 C. 'अयोग्यत्वेन'

6 B. & D. omit 'अतो'

7 C., 'असहोच्चारितानि' D. 'उच्चारितानि'

8 D. 'परस्परान्वयाकाङ्क्षायां'

9 C. omits 'सत्यामपि'

10 D. adds 'च'

11 C. adds here 'च'

12 B. C. 'योग्यानि' D. 'योग्यसांनिहितानि'

13 D. 'स्वर्गकामो ज्योतिष्टोमेन'

14 B. 'अथवा' C. D. 'यथा वा'

15 B. omits 'इति'

16 B. D. 'अथवा' C. 'यथा वा'

17 B., 'अविलम्बेनोच्चारितानि C. अविलम्बोच्चारितानि' D. 'उच्चारितानि'

18 B. 'नन्वत्रापि पदानि न' C. D. 'न ह्यत्रापि'

19 D. 'साकाङ्क्षानि (णि?)'

20 B. adds 'साकाङ्क्षाः'

21 C. has twice 'न च—चेत् न धर्मत्वात्'

22 C. D. 'विचार्यमाणा'

23 D. has at margin 'स्वपदश्रोतुः'

24 C. omits 'जनकत्वेनसाकाङ्क्षा इति'

25 B. & D. omit 'इति'

कानि पदान्यपि[1] साकाङ्क्षाणीत्युपचर्यन्ते[2] । यद्वा पदान्येवार्थान्[3] प्रतिपाद्यार्थान्तरविषयाकाङ्क्षाजनकानीत्युपचारात्[4][5] साकाङ्क्षाणि । एवमर्थाः साकाङ्क्षाः[6] परस्परान्वययोग्यास्तद्द्वारेण[7] पदान्यपि परस्परान्वय[8]योग्यानीत्युच्यन्ते[9] । संनिहितत्वं तु पदानामेकेनैव पुंसाविलम्बेनोच्चरितत्वम्[10] । तच्च साक्षादेव पदेषु संभवति नार्थद्वारा । तेनायमर्थः संपन्नः । अर्थप्रतिपादनद्वारा श्रोतुः[11] पदान्तरविषयामर्थान्तरविषयां वाकाङ्क्षां जनयतां प्रतीयमानपरस्परान्वययोग्यार्थप्रतिपादकानां संनिहितानां[12] पदानां समूहो वाक्यम् । पदं च वर्णसमूहः । समूहश्चात्रैकज्ञानविषयीभावः । एवं[13] च वर्णानां क्रमवतामाशुतरविनाशित्वेनैकदानेकवर्णानुभवासंभवात् पूर्वपूर्ववर्णाननुभूयान्त्यवर्णश्रवणकाले पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतेनान्त्यवर्णसंबन्धेन[14] पदव्युत्पादनसमयग्रहानुगृहीतेन श्रोत्रेणैकदैव[15] सदसदनेकवर्णावगाहिनी[16] पदप्रतीतिर्जन्यते[17] सहकारिदार्ढ्यात्[18] प्रत्यभिज्ञानवत्[19] । प्रत्यभिज्ञानप्रत्यक्षे ह्यतीतापि पूर्वावस्था स्फुरत्येव । ततः पूर्वपूर्वपदानुभवजनितसंस्कारसहकृतेनान्त्यपदविषयेण[20] श्रोत्रेन्द्रियेण[21][22] पदार्थप्रत्ययानुगृहीतेनानेकपदावगाहिनी वाक्यप्रतीतिः

1 B. omits ' अपि '
2 B. ' उच्यन्ते '
3 B. ' स्वार्थं '; C. ' पदान्येवार्थं '
4 B. जनकत्वेन साकाङ्क्षाणीत्युपचारात् '; C. ' जनकत्वेनोपचारात् पदानि साकाङ्क्षाणि '; D. ' जनकत्वेन '
5 D. omits ' इति '
6 D. omits ' साकाङ्क्षाः ' ।
7 B. C. D. ' तद्द्वारा '
8 C. D. omit ' परस्परान्वय '
9 C. D. omit ' इति '
10 B. C. D. ' अविलम्बेनोच्चारितत्वं '
11 D. adds ' एव '
12 C. omits ' संनिहितानां '
13 B. D. एवं च तत्र वर्णानां '; C. ' एवं च तत्र क्रमव [ तां ] वर्णानां '
14 D. ' वर्णसंबद्धेन '
15 B. ' श्रोत्रेन्द्रियेण '
16 B. ' वर्णावगाहिनि ' (?)
17 D. ' जायते '
18 B. C. D. ' सामर्थ्यात् '
19 C. प्रत्यभिज्ञावत् '
20 D. ' पूर्वपदार्थानुभव '
21 D. ' विषययोग्यश्रोत्रेन्द्रियेण '
22 B. omits ' श्रोत्रेन्द्रियेण '; C. ' श्रोत्रेण '

क्रियते । तदिदं वाक्यमाप्तपुरुषेण प्रयुक्तं सच्छब्दनामकं प्रमाणम् । फलं त्वस्य वाक्यार्थज्ञानम्[1] । तच्चैतच्छब्दलक्षणं[2] प्रमाणं लोके वेदे च समानम्[3] । लोके त्वयं विशेषो यः कश्चिदेव[4]ाप्तो भवति न सर्वः । अतः किंचिदेव लौकिकं वाक्यं प्रमाणं यदाप्तवक्तृकम्[5] । वेदे तु परमाप्तश्रीमहेश्वरेण कृतं सर्वमेव वाक्यं प्रमाणं सर्वस्यैवाप्तवाक्यत्वात् ॥ वर्णितानि[6] चत्वारि प्रमाणानि । एतेभ्यो[7]ऽन्यन्न प्रमाणम् । प्रमाणस्य सतोऽत्रैवान्तर्भावात्[8] ॥

नन्वर्थापत्तिरपि पृथक् प्रमाणमस्ति । अनुपपद्यमानार्थदर्शनात्[9] तदुपपादकी[10]भूतार्थान्तरकल्पनमर्थापत्तिः । तथाहि पीनो देवदत्तो दिवा न भुङ्क्ते इति[11] दृष्टे[12] श्रुते वा रात्रिभोजनं कल्प्यते दिवाऽभुञ्जानस्य पीनत्वं रात्रिभोजनमन्तरेण[13] नोपपद्यते, अतः पीनत्वान्यथानुपपत्तिप्रसूतार्थापत्तिरेव रात्रिभोजने प्रमाणम् । तच्च[14] प्रत्यक्षादिभ्यो भिन्नं रात्रिभोजनस्य प्रत्यक्षाद्यविषयत्वात् । नैतत् । रात्रिभोजनस्यानुमानविषयत्वात् । तथा ह्ययं देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति[15] पीनत्वात्, यस्तु न[16] रात्रौ भुङ्क्ते नासौ दिवाभुञ्जानत्वे सति पीनो यथा दिवारात्रावभुञ्जानोऽपीनो[17] न चायं तथा तस्मान्न[18] तथेति केवलव्यतिरेकानुमानेनैव रात्रिभोजनस्य प्रतीयमानत्वात् किमर्थम[19]र्थापत्तिः[20] कल्पनीया ॥

---

1 'C. वाक्यार्थविज्ञानम्'
2 B., 'तच्चैतस्य शब्दप्रमाणलक्षणं'; C. 'न तच्छब्दप्रमाणलक्षणं'; D. 'तच्चैतच्छब्दप्रमाण'
3 B. C. D. 'साधारणम्'
4 C. omits 'एव'
5 B. C. D. 'आप्तकर्तृकम्'; B. adds 'तदेव'
6 B. adds at margin 'इति'
7 B. D. 'तेभ्यो'; C. 'एभ्यो'
8 C. 'अत्रैवान्तर्भावः'
9 C. D. omit 'अनुपपद्यमानार्थ' इत्यारभ्य 'अर्थापत्तिः' इति पर्यन्तम्।
10 B. 'तदुत्पादकी'
11 D. 'इत्यत्र'
12 B. दृष्टे वा श्रुते'
13 B. 'रात्रिभोजनमन्तरेण पनित्वं'
14 D. omits 'च'
15 B. omits 'सति'
16 B. C. 'यस्तु रात्रौ न भुङ्क्ते'
17 B. 'न पीनः। तथा न चायं तस्मान्न तथेति'
18 D. omits 'न'
19 B. 'किमर्थापत्तेः कल्पनया'
20 D. adds 'पृथक्त्वेन'

नन्वभावाख्यमपि[1] पृथक् प्रमाणमस्ति[2] । तच्चा[3]भावग्रहणायाङ्गीकर[4]-णीयम् । तथाहि घटाद्यनुपलब्ध्या घटाद्यभावो निश्चीयते अनुपलब्धि-श्चोपलब्धेरभाव इत्यभावप्रमाणेन घटाद्यभावो गृह्यते । नैतत् । यद्यत्र घटोभविष्यत् तर्हि[5] भूतलमिवाद्रक्ष्यदित्यादितर्कसहकारिणानुपलम्भ-सनाथेन प्रत्यक्षेणैवाभावग्रहणात्[6] । नन्विन्द्रियाणि संबद्धार्थग्राहकाणि[7] तथाहि-इन्द्रियाणि वस्तु प्राप्य प्रकाशकारीणि[8] ज्ञानकारणत्वा[9]दालोकवत् । यद्वा चक्षुःश्रोत्रे वस्तु प्राप्य प्रकाशकारिणी[10] बहि[11]रिन्द्रियत्वात्त्वगादिवत् । त्वगादीनां तु[12] प्राप्यकारित्वमुभयवादि[13]सिद्धमेव । न चेन्द्रियाभावयोः संब-न्धोऽस्ति । संयोगसमवायौ हि संबन्धौ न च[14] तौ तयोः स्तः । द्रव्ययो[15]रेव संयोग इति नियमादभावस्य च[16] द्रव्यत्वाभावात् । अयुतसिद्ध[17]त्वाभावान्न समवायोऽपि । विशेषणविशेष्यभावश्च[18] संबन्ध एव न संभवति[19] भिन्नो-भयाश्रितैकत्वाभावात् । संबन्धो[20] हि संबन्धिभ्यां भिन्नो भवत्युभय[21]संबन्ध्या-श्रितश्चैकश्च यथा भेरीदण्डयोः[22] संयोगः । स हि भेरीदण्डाभ्यां भिन्नस्तदु-भया[23]श्रितश्चैकश्च न च विशेषणविशेष्यभावस्तथा । तथाहि दण्डपुरुष[24]-योर्विशेषणविशेष्यभावो न[25] ताभ्यां[26] भिद्यते । न हि दण्डस्य विशेषणत्व-

---

1 C. ' नन्वभावाख्यमपि प्रमाणान्तर-मभावग्रहणायाङ्गिकरणियम् '

2 D. omits ' अस्ति '

3 D. omits ' तच्च '

4 B. ' तदभावग्रहणे स्त्रीकारणीयम् '

5 B. omits ' तर्हि '; D. has ' तदा '

6 D. adds ' किमभावप्रमाणेन '

7 C. ' ग्राहकानि '

8 B. ' प्रकाशकानि प्रत्यक्षज्ञानकर-णत्वात् '

9 C. D. omit ' ज्ञानकारणत्वाद् ' इत्यारभ्य ' बहिः ' इति पर्यन्तम् ।

10 B. adds ' भवतः ।

11 B. omits ' बहिः '

12 B. adds ' वस्तु '

13 C. D. omit ' वादि '

14 B. ' तौ न तयोः स्तः '; C. omits ' न च ' इत्यारभ्य ' द्रव्यत्वाभावात् ' इतिपर्यन्तम् ।

15 B. omits ' द्रव्ययोरेव ' इत्यारभ्य ' समवायोऽपि ' इति पर्यन्तम् । but has it at margin.

16 D. omits ' च '

17 D. ' अयुतसिद्धयभावात् '

18 D. omits ' च '

19 B. D. ' भवति '

20 C. स हि संबन्धिभ्यो '

21 D. ' तदाश्रितश्चैकश्च '

22 B. C. D. ' भेरीदण्डसंयोगः ।

23 C. D. ' तदाश्रितश्चैकश्च '

24 C. ' न दण्डपुरुषयोः ।

25 D. ताभ्यां न भिद्यते '

26 B. ' त्वाभ्यां '

मर्थान्तरं नापि[1] पुरुषस्य विशेष्यत्वमर्थान्तरमपि तु[2] स्वरूपमेव । अभाव-
स्यापि विशेषणत्वाद् विशेष्यत्वाच्च[3] । न चात्र कस्यचित् पदार्थस्य
द्रव्याद्यन्यतमस्य संभवः[4] । तस्मादभावस्य स्वोपरक्तबुद्धिजनकत्वं[5] यत्
स्वरूपं तदेव विशेषणत्वं[6] न तु तदर्थान्तरम्[7] । एवं[8] व्यापकत्वकारण-
त्वादयोऽप्यूह्याः । स्वप्रतिबद्धबुद्धिजनकत्वं[10] स्वरूपमेव हि व्यापकत्व-
मग्न्यादीनाम्[11] । कारणत्वमपि कार्यानुकृतान्वयव्यतिरेकि[12] स्वरूपमेव हि[13]
तन्त्वादीनां न त्वर्थान्तरमभावस्यापि व्यापकत्वात्[14] कारणत्वाच्च[15] । न
ह्यभावे सामान्यादिसंभवः । तदेवं विशेषणविशेष्यभावो न विशेषण-
विशेष्यरूपाभ्यां[16] भिन्नो नाप्युभयाश्रितो विशेषणे[17] विशेषणभावमात्रस्य
सत्त्वाद् विशेष्यभावस्याभावाद् विशेष्ये च[18] विशेष्यभावमात्रस्य सद्भा-
वाद् विशेषणभावस्याभावात् । नाप्येको विशेषणं च[19] विशेष्यं च तयो-
र्भाव इति[20] द्वन्द्वात् परः श्रूयमाणो भावशब्दः प्रत्येकमभिसंबध्यते[21] ।
तथा च विशेषणभावो विशेष्यभावश्चेत्यापन्नं द्वावेतावेकश्च संबन्धः ।
तस्माद्[22] विशेषणविशेष्यभावो न संबन्धः । एवं व्याप्यव्यापकभावादयोऽपि ।
संबन्धशब्दप्रयोगस्तूभयानिरूपणीयत्वसाधर्म्येणोपचारात् । तथा चासं-

---

1 C. D. omit 'नापि पुरुषस्य विशेष्यत्वमर्थान्तरम्'; B. has it at margin

2 B. adds 'नीलादेस्तथा विशेषणत्वमपि उत्पलादे[ः] स्वरूपमेव'।

3 B. C. D. omit 'विशेष्यत्वाच्च'

4 A. has lost 3 pages 'संभवः । त' इति पर्यन्तम् ।

5 B. 'जनकं'

6 C. 'विशेषणं'

7 B. 'न त्वर्थान्तरम्' व्यापककारणादयोऽप्यूह्याः

8 C. omits 'एवं' इत्यारभ्य 'नत्वर्थान्तरम्' इति पर्यन्तम् ।

9 B. adds at margin 'व्याप्य & कार्य'

10 B. 'जनकं'; D. 'जनकत्वस्वरूपमेव'

11 B. adds at margin 'धूमादीनाम्'; D. adds 'धूमादिकं प्रति'

12 D. 'व्यतिरेकं'

13 B. omits 'हि'

14 B. 'कारणत्वात् व्यापकत्वाच्च'

15 C. D. 'कारणत्वाच्च'

16 C. D. have at margin 'स्वरूपाभ्यां'

17 C. omits 'विशेषणे' इत्यारभ्य 'सद्भावात्' इति पर्यन्तम् ।

18 B. omits 'च'

19 D. omits 'च'

20 C. omits 'इति'

21 B. 'प्रत्येकमपि'

22 D. 'अतो'

बद्धस्याभावस्येन्द्रियेण ग्रहणं न संभवति । सत्यम् । भावावच्छिन्नत्वाद् व्याप्तेर्भावं प्रकाशयदिन्द्रियं प्राप्तमेव प्रकाशयति न त्वभावम् । अभावं प्रकाशयदिन्द्रियं विशेषणविशेष्यभावमुखेनैवेति सिद्धान्तः । असंबद्धाभावग्रहेऽतिप्रसङ्गदोषस्तु विशेषणतयैव निरस्तः समश्च परमते ।

**यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।**
**नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥**

इदमिदानीं निरूप्यते । जलादिज्ञाने जाते तस्य प्रामाण्यमवधार्य कश्चिज्जलादौ प्रवर्तते । कश्चित्तु संदेहादेव प्रवृत्तः प्रवृत्त्युत्तरकालं जलादिप्रतिलम्भे सति प्रामाण्यमवधारयतीति वस्तुगतिः । अत्र कश्चिदाह—प्रागेव प्रामाण्यमवधार्य पुरुषः प्रवर्तते स्वत एव प्रामाण्यावधारणात् । अस्यार्थः—येनैव ज्ञानं गृह्यते तद्गतं प्रामाण्यमपि न तु ज्ञानग्राहकादन्यद् ज्ञानधर्मस्य प्रामाण्यस्य ग्राहकम् । तेन ज्ञानग्राहकातिरिक्तानपेक्षत्वमेव स्वतस्त्वं प्रामाण्यस्य ज्ञानं च प्रवृत्तेः पूर्वमेव गृहीतं कथमन्यथा प्रामाण्याप्रामाण्यसंदेहोऽपि स्यात् । अनवगते धर्मिणि संदेहानुदयात् । तस्मात् प्रवृत्तेः पूर्वमेव ज्ञाततान्यथानुपपत्तिप्रसूतयार्थापत्त्या ज्ञाने गृहीते

---

1 B. ' चासंबन्धस्य '
2 C. ' प्रकाशयदेवेन्द्रियं '
3 B. C. D. add ' अपि '
4 B.,'विशेषणविशेष्ये ( ष्य ) मुखेनैव'; C. विशेषणमुखेनैवेति '; D. ' संबद्धविशेषणमुखेनैव '
5 B. ' असंबन्धा '
6 B. adds ' अपि ' & at margin adds ' परिहारः '
7 A. has this stanza at margin & C. omits it.
8 D. omits ' तु '
9 D. ' प्रवृत्त्युत्तरकाले '
10 C. D. omit ' आदि '
11 B. ' प्रामाण्य 'at margin
12 D. is injured here.
13 D is injured here.
14 C. ' येन '
15 B. C. D. ' तेनैव तत्प्रामाण्यमपि ' but C. adds ' इति '
16 D. injured.
17 C. ' प्रामाण्यज्ञानस्य '
18 C. adds ' पूर्वमेवार्थापत्त्या गृह्यते तेमेव ( नैव? ) तत्प्रामाण्यमपि न तु ज्ञानग्राहकादन्यद् ज्ञानधर्मस्य प्रामाण्यस्य ग्राहकम् । कथमन्यथा '
19 D. adds ' तु '
20 B. D. omits ' अनधिगते '; C. ' अनवगते धर्मिणि संदेहानुदयात् '; A has at margin ' अनवगते धर्मिणि संदेहानुदयात् '

पुरुषेण ज्ञानगतं प्रामाण्यमप्यर्थापत्त्यैव[1] गृह्यते ततः पुरुषः प्रवर्तते । ननु[2] ( तु ? ) प्रथमं ज्ञानमात्रं गृह्यते ततः प्रवृत्त्युत्तरकालं फलदर्शनेन[3] ज्ञानस्य प्रामाण्यमवधार्यत इति[4] । तत्रोच्यते[5]—ज्ञाततान्यथानुपपत्तिप्रसूतयार्थापत्त्या ज्ञानं गृह्यत इत्युक्तं[6] तदेव वयं न मृष्यामहे । तया प्रामाण्यग्रहस्तु दूरत एव । तथाहि—इदं किल परस्याभिमतम् । घटादिविषये ज्ञाने जाते मया ज्ञातोऽयं घट इति घटस्य ज्ञान ( त[7] ? ) त्वं प्रतिसंधीयते । तेन[8] ज्ञाने जाते सति ज्ञातता नाम कश्चिद्धर्मो जात इत्यनुमीयते । तस्य[9] च ज्ञानात् पूर्वमजातत्वात्[10] ज्ञाने जाते च जातत्वादन्वयव्यतिरेकाभ्यां ज्ञानेन जन्यत इत्यवधार्यते । एवं च[11] ज्ञानजन्योऽसौ ज्ञातता नाम[12] धर्मो ज्ञानमन्तरेण[13] नोपपद्यते[14] कारणाभावे कार्यानुदयात् । तेनार्थापत्त्या स्वकारणं ज्ञानं[15] ज्ञाततयाक्षिप्यत इति । न चैतद् युक्तम् । ज्ञानविषयत्वातिरिक्तयो[16]र्ज्ञाततायाः अभावात् । ननु ज्ञानजनितज्ञाततधारत्वमेव हि घटादेर्ज्ञानविषयत्वम् । तथाहि—न तावत् तादात्म्येन विषयता[17] घटज्ञानयोस्तादात्म्यानभ्युपगमात् । तदुत्पत्त्या तु विषयत्व इन्द्रियादेरपि[18] विषयत्वापत्तिरिन्द्रियादेरपि[19] तस्य ज्ञानस्योत्पत्तेः । तेनैतद[20]नुमीयते ज्ञानेन घटे किंचिज्जन्यते[21] येन घट एव तस्य ज्ञानस्य विषयो नान्यदिति[22] ततो[23]

1 C. D. ‘ ज्ञानगतप्रामाण्यं ’
2 B. D. ‘ न तु ’
3 B. ‘ जलदर्शनेन ’; D. ‘ फलदर्शने ’
4 C. omits ‘ इति ’
5 B. C. D. ‘ अत्रोच्यते ’
6 B. इति यदुक्तम्; D. C. ‘इति यदुक्तं तदेव च वयं न सहामहे ’
7 D. ‘ ज्ञातत्वं ’
8 C. omits ‘ तेन ’ इत्यारभ्य ‘ अनुमीयते ’ इतिपर्यन्तम् ।
9 B. C. D. ‘ स च ’
10 D. adds ‘ तु ’
11 C. omits ‘ च ’
12 B. omits ‘ नाम ’
13 B. ‘ ज्ञानमन्तरेणोपपद्यते ’ ( ? )
14 C. ‘ नोपपद्येत ’
15 D. omits ‘ ज्ञानं ’
16 B. C. ‘ ज्ञानविषयतातिरिक्तायाः ’; D. ‘ अतिरिक्तायाः ’
17 B. has at margin ‘ विषयविषयिता ’
18 B. C. D. omit ‘ अपि ’
19 C. D. ‘ इन्द्रियादपि ’
20 B. C. D. ‘ तेनेदम् ’
21 B. ‘ जनित ’
22 B. C. D. ‘ नान्य इति ’
23 B. C. D. ‘ अतो ’

विषयत्वान्यथानुपपत्त्यैव ज्ञाततासिद्धिर्न प्रत्यक्षमात्रेण । मैवम्[1] । स्वभावादेव विषयविषयितोपपत्तेः[2] । अर्थज्ञानयोरेतादृशो एव स्वाभाविको[3] विशेषः येनानयोर्विषयविषयिभावः । इतरथा[4]तीतानागतयोर्विषयत्वं न स्यात् । ज्ञानेन[5] तत्र ज्ञाततजननासंभवात् । असति धर्मिणि धर्मजननायोगात् । किं च ज्ञाततायाः अपि ज्ञानविषयत्वात् तत्रापि ज्ञातता[6]प्रसङ्गः । तथा चानवस्था । अथ ज्ञाततान्तरमन्तरे[7]णापि स्वभावादेव विषयत्वं ज्ञाततायाः, एवं चेद् घटादावपि किं ज्ञाततयेति[8] । अस्तु वा ज्ञातता तथापि तन्मात्रेण ज्ञानं गम्यते[9] ज्ञाततविशेषेण प्रमाणज्ञानाव्यभिचारिणा ज्ञान[10]प्रामाण्यमिति कुत एव[11] ज्ञानग्राहकग्राह्यता प्रामाण्यस्य । अथ केनचिज्ज्ञाततविशेषेण प्रमाणज्ञानाव्यभिचारिणा ज्ञानप्रामाण्ये सहैव गृह्येते । एवं चेदप्रामाण्येऽपि शक्यमिदं वक्तुं केनचिज्ज्ञाततविशेषेणाप्रमाणज्ञानाव्यभिचारिणा ज्ञानाप्रामाण्ये सहैव गृह्येते इत्यप्रामाण्यमपि स्वत एव गृह्यते[12] । अथैवम[13]प्रामाण्यं परतस्तथा[14] प्रामाण्यमपि परत एव गृह्यताम्[15] । ज्ञानग्राहकादन्यत इ[16]त्यर्थः । ज्ञानं हि मानसप्रत्यक्षेण[17] गृह्यते प्रामाण्यं पुनरनुमानेन । तथा हि जलज्ञानानन्तरं जलार्थिनः प्रवृत्तिः । सापि[18] द्विधा । फलवत्यफला[19] च । तत्र फलवती या[20]

1 D. 'नैवम्'
2 B. D. 'विषयत्वोपपत्तेः'; B. C. 'विषयतोपपत्तेः' at margin 'विषयविषयित्वोपपत्तेः'
3 B. 'स्वभावविशेषो'
4 B. 'अन्यथा'
5 C. 'ज्ञानस्य'
6 B. C. omit 'ज्ञातता' but B. has it at margin.
7 B. omits 'अन्तरम्' but has it at margin.
8 C. omits 'इति'
9 D. adds 'अन्येन'
10 B. C. D. omit 'ज्ञान'
11 C., एवैत [ द् ? ] D. 'एक'
12 D. 'गृह्येत'
13 B. D. add 'अपि'
14 B. C. omits 'तथा'; D. omits 'तथा प्रामाण्यमपि' इत्यारभ्य 'मानसप्रत्यक्षेण गृह्यते' इति पर्यन्तम्
15 B. 'गृह्यते'
16 C. 'एवेत्यर्थः'
17 B. adds 'एव'
18 B. C. omit 'सापि'; D. omits 'अपि'
19 C. D. 'अफलवती च'
20 C. D. omit 'या'

प्रवृत्तिः सा[1] समर्था[2] तया ज्ञानस्य प्रामाण्यमनुमीयते[3]। प्रयोगश्च। विवादाध्यासितं जलज्ञानं प्रमाणं समर्थप्रवृत्तिजनकत्वाद् यत्तु न[4] प्रमाणं न तत् समर्थां प्रवृत्तिं जनयति यथा प्रमाणाभास इति केवल[5]व्यतिरेकी। अत्र च[6] फलवत्प्रवृत्तिजनकं यज्जलज्ञानं तत् पक्षः। तस्य प्रामाण्यं साध्यम्। यथार्थत्वमित्यर्थः[7]। न तु प्रमा [कर ?] णत्वं[8] स्मृत्यां[9] व्यभिचारापत्तेः। हेतुस्तु समर्थप्रवृत्तिजनकत्वं फलवत्प्रवृत्तिजनकत्वमिति यावत्[10]। अनेन तु[11] केवल[12]व्यतिरेकानुमानेनाभ्यासदशापन्नस्य प्रामाण्येऽवबोधिते[13] तद्दृष्टान्तेन प्रवृत्तेः पूर्वमपि तज्जातीयत्वेन लिङ्गेनान्वय[14]व्यतिरेकानुमानेना[15]न्यज्ञानस्यानभ्यासदशापन्नस्य प्रामाण्यमनुमीयत इति[16]। तस्मात्[17] परत एव प्रामाण्यं न ज्ञानग्राहकेणैव गृह्यत[18] इति।

**चत्वार्येवं[19] प्रमाणानि युक्तिलेशोक्तिपूर्वकम्।**
**केशवो बालबोधाय यथाशास्त्रमवर्णयत्[20] ॥**

इति[21] प्रमाणपदार्थः समाप्तः ॥

---

1 C. omits 'सा'
2 A 'समार्थतया' (?)
3 D. 'याथार्थ्यम'; A has at margin 'प्रामाण्यमनुमीयते'
4 A. D. omit 'न'; B. 'न च प्रमाणं तन्न'
5 B. omits 'केवल'
6 A has at margin 'च'; B. omits 'च'
7 B. C. D. यथार्थमित्यर्थः
8 A has in margin 'प्रमाकरणत्वम्'; C. D. 'प्रमाकरणत्वं'
9 D. 'स्मृत्या'
10 C. omits 'फलवत्प्रवृत्तिजनकत्वमिति यावत्'
11 C. omits 'तु'
12 C. 'केवलं'
13 C. 'च बोधिते'
14 B. 'अन्वयव्यतिरेकिणान्यस्य ज्ञानस्याभासदशापन्नस्य'; D. 'अन्वयव्यतिरेकिणा'
15 C. 'अनुमानेनास्य'; D. omits 'अनुमानेन'
16 B. C. omit 'इति'
17 C. omits 'तस्मात्'; A has it at margin
18 D. omits 'गृह्यत इति'
19 C. 'चत्वार्यपि'
20 B. C. add 'इति'
21 C. omits 'इति प्रमाणपदार्थः समाप्तः'; D. omits 'प्रमाणपदार्थः समाप्तः'

इति[1] प्रमाणान्युक्तानि प्रमेयाण्युच्यन्ते[2]। आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः प्रमेयमिति सूत्रम्। तत्रात्मत्वसामान्यवानात्मा। स च देहेन्द्रियादिव्यतिरिक्तः प्रतिशरीरं भिन्नो नित्यो[3] विभुश्च। स च मानसप्रत्यक्षः। विप्रतिपत्तौ[4] बुद्ध्यादिगुणालिङ्गकः। तथाहि—बुद्ध्यादयस्तावद्गुणाः। अनित्यत्वे सत्येकेन्द्रियमात्र[5]ग्राह्यत्वाद् रूपवत्। गुणश्च गुण्याश्रित एव। तत्र[6] बुद्ध्यादयो गुणा न भूतानां मानसप्रत्यक्षत्वात्। ये[7] हि भूतानां गुणास्ते[8] मनसा न[9] गृह्यन्ते यथा रूपादयः। नापि दिक्कालमनसां गुणा विशेषगुणत्वात्। ये हि दिगादिगुणाः संख्यादयो न ते विशेषगुणा[10]स्ते हि सर्वद्रव्यसाधारण[11]गुणा एव। बुद्ध्यादयस्तु विशेषगुणाः। गुणत्वे सत्यकेन्द्रियग्राह्यत्वाद् रूपवदतो न दिगादिगुणाः। तस्मादेभ्योऽष्टभ्यो[12]ऽतिरिक्तो बुद्ध्यादीनां गुणी[13] एषितव्यः[14] स एवात्मा। प्रयोगश्च। बुद्ध्यादयः पृथिव्याद्यष्टद्रव्या[15]तिरिक्तद्रव्याश्रिताः पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति गुणत्वात्। यो हि[16] न[17] पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः[18] स पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति गुणो न भवति यथा रूपादिः[19]। इति[20] केवलव्यतिरेकी। अन्वयव्यतिरेकी वा[21]। यथा हि[22] बुद्ध्यादयः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्या-

---

1 B. C. D. omit 'इति'
2 C. D. 'प्रमेयान्युच्यन्ते'; B. 'अथ प्रमेयाण्युच्यन्ते'
3 B. C. D. 'विभुर्नित्यश्च'
4 B. C. add 'न'
5 B. C. D. omit 'मात्र'
6 C. omits 'तत्र'
7 D. adds 'न'
8 B., 'ते न मनसा'; C. 'न ते मनसा'
9 D. omits 'न'
10 C. omits 'ते हि' इत्यारभ्य 'विशेषगुणाः' इति पर्यन्तम्।
11 B. 'साधारणा गुणा'
12 B. 'तेभ्योऽष्टभ्यो'; C. omits 'अष्टभ्यो'
13 D. गुणानामाश्रयो द्रष्टव्यः'
14 B. C. 'भवितव्यः'
15 C. omits 'अष्टद्रव्य'
16 B. D. यस्तु; C. omits 'यो हि'
17 D. omits 'न'
18 B., 'द्रव्याश्रितो न भवति नासौ पृथिव्याद्यष्टद्रव्यानाश्रितत्वे गुणो भवति'; D. 'द्रव्याश्रितो न भवति नासौ पृथिव्याद्यष्टद्रव्यानाश्रितो गुणो यथा'
19 D. 'रूपादीनि'
20 D. omits 'इति'
21 D. 'च'
22 B. D. 'तथा हि'

श्रिताः पृ[1]थिव्याद्यष्ट[2]द्रव्यानाश्रितत्वे[3] सति गुणत्वात् । यो यदनाश्रितो [4]गुणः स तदतिरिक्ताश्रितो भ[5]वति । यथा पृथिव्याद्यनाश्रितः शब्दः पृ[6]थिव्याद्यतिरिक्ताकाशाश्रय इति । त[7]थाहि शब्दादयः पृथिव्याद्यष्टद्रव्यातिरिक्ताकाशाद्याश्रिता इति । तदेवं पृथिव्याद्यष्टद्रव्यातिरिक्तं नवमं द्रव्यमात्मा सिद्धः । स च[8] सर्व[9]कार्योपलम्भाद्विभुः[10] । परममहत्परिमाण[11]वानित्यर्थः । विभुत्वाच्च[12] नित्योऽसौ व्योमवत् । सुखादीनां[13] वैचित्र्यात् प्रतिशरीरं भिन्नः ।

तस्य भोगायतनं [14]शरीरम्[15] । सुख[16]दुःखान्यतरानुभवो भोगः । स च[17] यदवच्छिन्न[18] आत्मनि जायते तद्भोगाय[19]तनम् । तदेव शरीरम् । चेष्टाश्रयो वा शरीरम् । चेष्टा[20] तु हिताहितप्राप्तिपरिहारार्था क्रिया न तु[21] स्पन्दनमात्रम् ।

शरीरसंयुक्तं[22] ज्ञानकरणमतीन्द्रियमिन्द्रियम् । अतीन्द्रियमित्यु[23]च्यमाने काला[24]देरिन्द्रियत्वप्रसङ्गोऽत उक्तं [25]ज्ञानकरणमिति । [26]तथापि

---

1 D. ' पृथिव्याद्य ( द्य ? ) नाश्रितत्वे सति गुणत्वात् '
2 B. omits ' अष्टद्रव्य '
3 A. ' अनाश्रिते सति '
4 B. at margin ' यदनाश्रितगुणः '
5 C. omits ' भवति '
6 C. ' तदरिक्ताकाशाश्रितः ': D. पृथिव्याद्यतिरिक्ताकाशाश्रित इति
7 B. omits ' तथा हि ' इत्यारभ्य ' इति ' पर्यन्तम् ; C. omits ' तथाहि ' इत्यारभ्य ' नवमं द्रव्यं ' इति पर्यन्तम् '; C has ' तथा चैवं पृथिव्याद्यतिरिक्त आत्मा सिद्धः '
8 B. has ' तु ' & at margin ' च '
9 C. D. ' सर्वत्र '
10 B. adds ' सर्वत्रोपलभ्यमानकार्यत्वात् '
11 D. ' परिमान ( ण ? ) वान '
12 C. omits ' च ' & असौ '
13 D. ' सुखादिवैचित्र्यात् '
14 D. adds at margin ' स्वसमवेत '
15 D. adds ' अन्त्यावयवि '
16 B. ' सुखदुःखान्यतरसाक्षात्कारः ; C. D. ' सुखदुःखानुभवो '
17 B. omits ' स च '
18 D. ' यदवच्छिन्नात्मनि '
19 C. omits ' तद्भोगायतनं '
20 D. adds ' सा या '
21 D omits ' तु '
22 B. ' शरीरसंयुक्तज्ञानकरण '
23 D. adds ' इन्द्रियम् ' ; B. adds the same at margin
24 B. ' आकाशादेरपि ' D. ; ' आकाशादेः '
25 C. ' शरीरसंयुक्तमिति '
26 C. omits ' तथापि ' इत्यारभ्य ' प्रसङ्गः ' इति पर्यन्तम् ; D. omits ' तथापि ' इत्यारभ्य ' करणमिति ' इति पर्यन्तम् and has at margin ' तथापीन्द्रियार्थसंनिकर्षेऽतिप्रसङ्गः अत उक्तं शरीरसंयुक्तमिति शरीरसंयुक्तं ज्ञानकरणमिति '; B. omits ' ज्ञानकरणमिन्द्रियमित्युच्यमाने '

ज्ञानकरणमनीन्द्रियमिन्द्रियमित्युच्यमाने इन्द्रियार्थसंनिकर्षे प्रसङ्गः, अत उक्तं शरीरसंयुक्तमिति। शरीरसंयुक्तं ज्ञानकरणमित्युच्यमाने आलोकादेरपि[1]इन्द्रियत्वप्रसङ्गो[2]ऽत उक्तमतीन्द्रियमिति[3]। तानि चेन्द्रियाणि षट्। घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि[4]। तत्र गन्धोपलब्धिसाधनमिन्द्रियं[5] घ्राणम्। नासाग्रवर्ति। तच्च पार्थिवं गन्धवत्त्वात्[7]। गन्धवत्त्वं च[6] गन्धग्राहकं घ्राणम्। अतो गन्धवद्[8] यदिन्द्रियं रूपादिषु पञ्चसु मध्ये यं गुणं गृह्णाति तदिन्द्रियं तद्गुणसंयुक्तम्[9]। यथा चक्षू रूपग्राहकं रूपवत्[10]। रसोपलब्धिसाधनमिन्द्रियं रसनम्। जिह्वाग्रवर्ति। तच्चाप्यं रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वाल्लालावत्। रूपोपलब्धिसाधनमिन्द्रियं चक्षुः[11]। कृष्णताराग्रवर्ति[12]। तच्च तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वात् प्रदीपवत्। स्पर्शोपलब्धिसाधनमिन्द्रियं त्वक्। सर्वशरीरव्यापि। त्वक्स्थम्[13]। तच्च वायवीयं रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वादङ्गसङ्गिसलिलशैत्याभिव्यञ्जकत्वाद्[14] व्यजनवातवत्। शब्दोपलब्धिसाधनमिन्द्रियं श्रोत्रम्। तच्च कर्णशष्कुल्यवच्छिन्नमाकाशमेव न द्रव्यान्तरं शब्दगुणत्वात्। तदपि शब्दस्यैव[15] ग्राहकत्वात् शब्दवत्[16]। यदिन्द्रियं रूपादिषु पञ्चसु मध्ये यद्गुणग्राहकं तत्[17] तद्गुण-[18]

---

1 B. C. D. omit 'अपि'
2 D. 'इन्द्रियप्रसङ्गः'
3 C. omits 'इति'
4 C. D. 'श्रोत्रत्वग्मनांसि'
5 A has in margin 'साक्षात्कार'
6 A has at margin 'च'
7 B. 'गन्धोपलब्धिसाधनत्वात्'; C. D. 'गन्धग्राहकत्वात्'
8 B. D. omit 'अतो गन्धवत्'
9 B. C. 'तद्गुणयुक्तम्'; D. 'तद्गुणवत्'
10 B. C. D. add here 'गन्धग्राहकं च घ्राणम्, अतो गन्धवत्'
11 B. adds at margin 'तच्च'
12 D. 'कृष्णाताराग्रवृत्ति'
13 B. C. D. 'त्वक्स्थानं तत्तु'
14 B. C. 'व्यञ्जकव्यजनवातवत्'; B. adds at margin 'अभिव्यञ्जकव्यजनवातवत्'; D. 'व्यञ्ज (न) पवनवत्'
15 B. C. D. 'शब्दग्राहकत्वात्'
16 B. C. D. omit 'शब्दवत्'
17 B. 'तदिन्द्रियं तद्गुणयुक्तम्'
18 D. 'तद्गुणसंबद्धम्'

युक्तमेव[1] भवति यथा चक्षू[2] रूपग्राहकं[3] रूपवत्[4] । शब्दग्राहकं च[5] श्रोत्रमतः शब्दगुणकम्[6] । सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्चाणुपरिमाणम् ।[7] ननु चक्षुरादीन्द्रियसद्भावे किं प्रमाणम् । उच्यते । अनुमानमेव । तथाहि[8] रूपाद्युपलब्धयः करणसाध्याः क्रियात्वात् । छिदावत्[9] ।

अर्थाः षट्[10] पदार्थाः । ते च[11] द्रव्यगुणकर्मसामान्यविशेषसमवायाः । प्रमाणादयो यद्यप्यत्रैवान्तर्भवन्ति तथापि प्रयोजनवशाद्भेदेन कीर्तिताः[12] । तत्र समवायिकारणं[13] द्रव्यं गुणाश्रयो[14] वा । तानि च द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव । तत्र पृथिवीत्वसामान्यवती पृथिवी । [15]काठिन्यकोमलत्वादिना[16] [ना ?] वयवसंयोगविशेषयुक्ता[17] घ्राणशरीरमृत्[18]पाषाणवृक्षादिरूपा । [19]गन्धरूपरसस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्कारवती । सा[20] नित्या चा[21]नित्या च । नित्या परमाणुरूपा । अनित्या कार्यरूपा । द्विविधायाः[22] पृथिव्याः[23] रूप-

---

1 D. omits ' एव भवति '
2 B. C. ' चक्षुरादि '
3 B. adds at margin ' रूपादिग्राहकं यतः '
4 B. C. omit ' रूपवत् '
5 B. omits ' च '
6 B. ' शब्दगुणम् '
7 C. D. omit ' सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्चाणुपरिमाणम् '; B. has the same in the margin
8 C. D. omit ' तथाहि '
9 B. D. ' छिदिक्रियावत् '
10 C. omits ' षट् पदार्थाः '
11 C. D. omit ' ते च '; B. has it at margin.
12 B. ' कीर्तनं ' and at margin adds ' सं '
13 C. omits ' कारणम् '
14 B. C. D. omit ' गुणाश्रयो वा '; B. omits ' च '
15 A has at margin ' घटेतरावृत्तित्वे सति घटमात्रवृत्तित्वं घटत्वम् । एवं सर्वत्र सामान्यं हि तदितरावृत्तित्वे सति तन्मात्रवृत्तित्वम् '
16 B. D. have ' नानावयव '; C. has ' कोमलादिनानावयव '
17 D. ' संयोगविशेषणयुक्ता '; B. at margin has विशेषण '
18 B. ' मृत्पिण्डपाषाणवज्रवृक्षादिरूपा '; D. ' मृत्पिण्डपाषाणवृक्षादिरूपा '
19 C. has figures 1–14; B. has ' रूपरसगन्धस्पर्श '
20 C. adds ' च '; D. adds ' द्विविधा '; B. has ' सा च द्वेधा '
21 B. D. omit ' च '
22 B. ' द्विविधायां पृथिव्यां '
23 D. add, ' अपि '

रसगन्धस्पर्शा अनित्याः पाकजाश्च । पाकस्तु तेजःसंयोगः । तेन पृथिव्यां[1] पूर्वरूपादयो नश्यन्त्यन्ये जन्यन्त इति पाकजाः ।

अप्त्वसामान्ययुक्ता आपः । रसनेन्द्रियशरीरं[2] (र ?) सरित्समुद्रहिमकरकादिरूपाः । गन्धवर्जं[3] स्नेहयुक्तपूर्वोक्तगुणवत्यः[4] । नित्या[5] अनित्याश्च । नित्यानां हि[6] रूपादयो[8] नित्या एव । अनित्यानां[7] रूपादयोऽनित्या एव ।

तेजस्त्वसामान्यवत् तेजः । चक्षुःशरीर[9]सुवर्ण[10]सवितृवह्निविद्युदादिप्रभेदम्[11] । दिव्यं भौममुदर्य[12]माकरं (रंजं?)[13] चेति । रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारवत् । तेजो[14] नित्यमनित्यं च पूर्ववत् । तच्चतुर्विधम् । उद्भूतरूपस्पर्शमनुद्भूतरूपस्पर्शम[15]नुद्भूतरूपोद्भूतस्पर्शमुद्भूतरूपमनुद्भूतस्पर्शं[16] चेति[17] । तत्रोद्भूतरूपस्पर्शं[18] यथा—पिण्डितं तेजो वह्न्यादिकम् । सुवर्णं[19] तूद्भूताभिभूतरूपस्पर्शं नानुद्भूतरूपस्पर्शम्[20] । अनुद्भूतरूपत्वेऽचाक्षुषं[21] स्यादनुद्भूतस्पर्शत्वे न त्वचा गृह्येत[22] । अभिभवस्तु[23] बलवत्सजातीयेन

---

1 D. पृथिव्याम्
2 B. C. 'शरीर'; D. omits 'शरीरम्'
3 C. गन्धवर्जस्नेहगुणायुक्ताः'; B. D. गन्धवर्जस्नेहयुक्तपूर्वोक्तगुणवत्यः
4 C. adds '14'
5 B. 'नित्यानित्याश्च इति पूर्ववत्'
6 B. C. D. omit 'हि'
7 C. D. omit 'अनित्यानां रूपादयोऽनित्याएव'
8 B. omits 'रूपादयः'
9 C. omits 'शरीर'
10 B. D. 'सवितृसुवर्ण'
11 B. 'प्रभेदी'
12 D. 'औदर्यम्'
13 D. 'आकरजं चेति'
14 B. C. D. omit 'तेजः'
15 B. 'उद्भूतरूपस्पर्शमनुद्भूतरूपस्पर्शम्, उद्भूतस्पर्शमनुद्भूतरूपम् उद्भूतरूपमनुद्भूतस्पर्शम्'; C. omits all this matter.
16 D. 'अनुद्भूतरूपमुद्भूतस्पर्शं'
17 D. omits 'चेति'
18 B. C. D. omit 'तत्र'
19 C. 'सुवर्णं स्तु (?)'
20 B. omits 'नानुद्भूतरूपस्पर्शम्'
21 C. 'चाक्षुषं न स्यात्'
22 B. 'त्वगिन्द्रियेण न गृह्येत'; C. 'स्पर्शनेन न गृह्येत'; D. 'त्वचा न गृह्येत'
23 B. 'अनुपलम्भस्त्वभिभवात्'; D. adds at margin 'क्वचिदनुपलम्भस्त्वभिभवात्'

पार्थिवरूपेण[1] स्पर्शेण च कृतः । अनुद्भूतरूपस्पर्शं तेजो यथा—चक्षुरिन्द्रियम् । अनुद्भूतरूपोद्भूतस्पर्शं[2] यथा—तप्तवारिस्थं तेजः । उद्भूतरूपमनुद्भूतस्पर्शं यथा—प्रदीपप्रभामण्डलम् ।

वायुत्वाभिसंबन्धवान्[3] वायुः । त्वगिन्द्रिय[4]शरीरवातप्राणादिभेदभिन्नः स्पर्शसंख्यापरिमाणपृथक्[5]संयोगविभागपरत्वापरत्ववेगवान्[6] । स च स्पर्शानुमेयः । तथाहि—योऽयं वायौ वात्य[7]नुष्णाशीतः[8] स्पर्श उपलभ्यते[9] स[10] गुणत्वाद् गुणिनम्[11]अन्तरेणानुपपद्यमानो गुणिनमनुमापयति । गुणी[12] च वायुरेव । पृथिव्यां[13]द्यनुपलब्धेः । पृथिवी[14]वायुव्यतिरेकेणानुष्णशीतस्पर्शाभावात् । स च[15] द्विविधो नित्यानित्यभेदात् । नित्यः परमाणु[16]रूपोऽनित्यः[17] कार्यरूपः[18] ।

तत्र[19] पृथिव्यादीनां चतुर्णां कार्याणामुत्पत्ति[20]विनाशप्रकारः कथ्यते । द्वयोः परमाण्वोः क्रियया संयोगे सति द्व्यणुकमुत्पद्यते । तस्य[21] परमाणू समवायिकारणम् । तत्संयोगोऽसमवायिकारणम् । अदृष्टादि निमित्तकारणम् । तत्र[22] त्रयाणां द्व्यणुकानां क्रियया संयोगे सति त्र्यणुकमुत्पद्यते । तस्य द्व्यणुकानि समवायिकारणम् । शेषं पूर्ववत् । एवं[23] चतुरणुकं[24] त्र्यणुकै-

---

1 C. ' पार्थिवस्पर्शेन च कृता (?); D. ' स्पर्शेन '
2 B. ' उद्भूतस्पर्शमनुद्भूतरूपं '; D. adds at margin ' रूपमुद्भूतस्पर्शं '
3 C. ' संबन्धाद्वायुः '
4 B. C. 'त्वगिन्द्रियप्राणावातादिभेदः'; D. ' त्वगिन्द्रियप्राणावातादिप्रभेदः '
5 B. C. D. ' पृथक्त्व '
6 C. has figures.
7 B. adds ' सति '
8 B. C. D. ' अनुष्णाशीतस्पर्श '
9 A. adds at margin ' त्व '
10 C. adds ' च '
11 C. D. omit ' गुणिनमन्तरेणानुपपद्यमानो '
12 B. ' स च गुणी '
13 D. ' पृथिव्या अनुप '
14 C. पृथिव्यादौ '
15 D. omits ' च '
16 D. ' परमानु (?) '
17 B. C. D. add ' वायु '
18 C. ' कार्यरूपा (?) '
19 B. ' तत्रैव '
20 B. ' उत्पत्तिविनाशः '; C. ' उत्पत्तिक्रमः '; D ' उत्पत्तिविनाशक्रमः '
21 B. adds ' द्व्यनुकस्य '
22 B. C. D. ' ततः '
23 C. omits ' एवम '
24 B. D. ' त्र्यणुकैश्चतुर्भिश्चतुरणुकम '; C. ' त्र्यणुकैश्चतुरणुकम '

श्चतुर्भिः चतुरणुकैश्चापरं[1] स्थूलतरम् तैरपरं[2][3] स्थूलतमम् । एवं क्रमेण महती पृथिवी[4] महत्यश्चापो[5] महत् तेजो महांश्च वायुरुत्पद्यते । कार्यगता[6] रूपादयः स्वाश्रयसमवायिकारणगतेभ्यो रूपादिभ्यो जायन्ते कारण-गुणा हि कार्यगुणानारभन्त इति न्यायादित्येवमुत्पत्तिः[7] । ततो रूपादि-मतः[8] कार्यद्रव्यस्य घटादेरवयवे कपालादौ नोदनादभिघाताद्वा क्रियां[9] तया विभागस्तेनावयव्यारम्भकस्या[10]समवायिकारणीभूतस्य[11] संयोगस्य नाशः क्रियते । ततः कार्यद्रव्यस्यावयविनो घटादेर्नाशः । एतेनासमवायि-[12]कारणनाशे द्रव्यनाशो[13] दर्शितः । क्वचित् समवायिकारणनाशे द्रव्य-नाशः[14] । तथा[15] पूर्वोक्त[16]पृथिव्यादेः संहारे संजिहीर्षा महेश्वरस्य संजिहीर्षा जायते[17] ततो[18]ऽणुषु क्रिया तया विभागस्[19]तस्मात्[20] संयोगनाशे[21] द्व्यणुकेषु नष्टे-[22]ष्वाश्रयनाशात् त्र्यणुकादि[23]नाशक्रमेण पृथिव्यादिनाशः । तथा[24] च[25] तन्तु-नाशे[26] पटनाशः । तद्गतानां च[27] रूपादीनां[28]माश्रयनाशेनैव[29] नाशः । अन्यत्र तु[30] सत्येवाश्रये[31] विरोधिगुणप्रादुर्भावेन[32] (ण?) विनाशः । यथा वा[33] पाकेन घटादे रूपादिनाश इति ।

---

1 B. 'चतुरणुकैरपरैः स्थूलतरं तैः परं स्थूलतमम्'; C. 'तैरपरम्'; D. 'ततोऽपरं'
2 C. omits 'तैरपरं स्थूलतमम्'
3 D. omits 'अपरम्'
4 C. 'महापृथिवी'
5 C. D. 'महत्यापः'
6 C. 'कार्यगतरूपादयः'
7 C.; D. omit 'इत्येवमुत्पत्तिः'
8 B. 'इत्थं समुत्पन्नस्य रूपादिमतः'; D. 'इत्थमुत्पत्तिमतः'; C. 'इत्थ-मुत्पन्नस्य'
9 B. adds 'उत्पद्यते'
10 B. 'अवयवारम्भस्य'
11 B. C. D. 'कारणभूतस्य'
12 B. 'एवम्'
13 B. D. 'नाशिन'
14 B. D. 'नाशिन'
15 B. D. 'यथा पूर्वोक्त स्यैव'
16 C. 'पूर्वोक्तस्य'
17 D. omits 'जायते'
18 C. D. 'अतो'
19 B. C. D. 'विभागात्'
20 B. C. D. omit 'तस्मात्' 'नाशः'
21 B. adds 'संयोगनाशाद्'
22 B. omits 'नष्टेषु'
23 B. C. 'त्र्यणुकादिनाशः'
24 B. 'यथा'; D. 'यथा वा'
25 B. omits 'च'
26 C. 'तन्तुदाहेन'
27 B. D. omit 'च'
28 D. adds 'च'
29 B. 'स्वाश्रयनाशे सति'; D. 'स्वाश्रयनाशेनैव'
30 C. omits 'तु'
31 B. 'स्वाश्रये'
32 C. 'प्रादुर्भावेन'
33 B. D. omit 'वा'

किं पुनः परमाणुसद्भावे प्रमाणम् । उच्यते । यदिदं जालसूर्यमरीचिस्थं[1] सर्वतः सूक्ष्मतमं[2] रजः[3] उपलभ्यते तत् स्वल्पपरिमाणद्रव्यारब्धं कार्यद्रव्यत्वाद् घटवत् । तच्च द्रव्यं कार्यमेव महद्द्रव्यारम्भकस्य[4] कार्यत्वनियमात् । तदेवं[5] द्व्यणुकाख्यं[6] द्रव्यान्तरं सिद्धम् । तदपि स्वल्पपरिमाण[7]समवायिकारणा[8] [र?]ब्धं कार्यद्रव्यत्वाद् घटवत्[9] । एवं[10] यस्तु द्व्यणुकारम्भकः स एव परमाणुः स चानारब्ध एवेति । ननु[11] कार्यद्रव्यारम्भकस्य कार्यत्वाव्यभिचारात्[12] कथमनारब्धत्वम्[13] । उच्यते । न[14] । अनन्तकार्यपरंपरा[15]दोषप्रसङ्गात् । तथा च[16] सत्यनन्तद्रव्यारब्धत्वा[17]विशेषेण सुमेरु[18]सर्षपयोरपि[19] तुल्यपरिमाणत्वप्रसङ्गात्[20] । तस्मादनारब्ध एव परमाणुः । द्व्यणुकं तु द्वाभ्यामेव परमाणुभ्यामारभ्यते एकस्यानारम्भकत्वात् । त्र्यादिकल्पनायां प्रमाणाभावात्[21] । द्व्यणुकारब्धं द्रव्यं[22] त्रिभिरेव द्व्यणुकैरारभ्यते[23] एकस्यानारम्भकत्वात् । द्वाभ्यामारम्भे कार्यगतमहत्त्वानुपपत्तिप्रसङ्गात् । कार्ये हि महत्त्वं कारणमहत्त्वात्कारणबहुत्वाद्वा । तत्र प्रथमस्यासंभवाच्चरममेषितव्यम् । न च[24] चतुरादिकल्पनायां प्रमाणमस्ति त्रिभिरेव महत्त्वारम्भोपपत्तिरिति[25] ।

शब्दगुणमाकाशम् । [26]संख्यापरिमाणपृथक्त्वसंयोगविभागवदेकं विभु[27]

---

1 B. 'रजः सर्वतः सूक्ष्मतरम्'
2 C. 'सूक्ष्मतरमुपलभ्यत'
3 C. omits 'रज'
4 C. 'महद्द्रव्यारम्भके'
5 C. 'तदेव'
6 B. adds at margin 'कार्यम्'
7 C D. omit 'परिमाण'
8 D. 'समवायिकारणाख्यं'; D. has at margin 'प्रारब्धं'
9 C. 'घटवदेव'
10 B. C. D. omit 'एवं'
11 C. omits 'ननु'
12 C. 'कार्यद्रव्यत्वाव्यभिचारात्'
13 B. 'अनारब्धः'
14 B. omits 'न'
15 B. कल्पनापरंपरा'
16 B. omits 'च'
17 B. 'कार्यद्रव्य'
18 D. 'मेरु'
19 D. omits 'अपि'
20 C. 'तुल्यपरिमाणत्वापत्तिः'
21 B. adds 'त्र्यणुकं तु'
22 D. adds 'च'
23 B. 'प्रारभ्यते'
24 C. omits 'च'
25 B. C. D. 'महत्वारम्भोपपत्तेरिति'
26 D. adds 'शब्द'
27 D. 'विभु नित्यं' (?)

नित्यं शब्दलिङ्गकं च । [1]शब्दलिङ्गत्वमस्य कथम् । पारिशेष्यात्[2] । तथाहि--शब्दस्तावद् विशेषगुणः । सामान्यवत्त्वे सत्य[3]स्मदादिबाह्यैके-न्द्रियग्राह्यक[4] (?) त्वाद् रूपादिवत्[5] । गुणश्च[6] गुण्याश्रित एव । न चास्य पृथिव्यादिचतुष्टयमात्मा वा[7] गुणी भवितुमर्हति श्रोत्रग्राह्यत्वाच्छब्दस्य । ये[8] पृथिव्यादि[9]गुणा न ते श्रोत्रेण गृह्यन्ते[10] यथा रूपादयः । शब्दस्तु[11] श्रोत्रेण[12] गृह्यते [13]अतो न तेषां गुणः । दिक्कालमनसां च[14] न[15] गुणो विशेषगुणत्वात्[16] । [17]एभ्योऽतिरिक्तः शब्दस्य गुणी अनुमीयते । स एवाकाश इति । स चैको भेदे प्रमाणाभावादेक[18]स्योपपत्तेः । एकत्वेन [19]चाकाशत्वं नाम सामान्य-माकाशे न[20] विद्यते सामान्यस्यानेकवृत्तित्वात्[21] । विभु चाकाशम् । परममहत्परिमाणवदित्यर्थः । सर्वत्र तत्कार्योपलब्धेः । अत एव एव विभुत्वान्नित्यमिति ।

कालोऽपि[22] दिग्[23]विपरीतपरत्वापरत्वानुमेयः । संख्यापरिमाणपृथक्त्व-संयोगविभागवान् । एको नित्यो विभुश्च । [24]कथमस्य दिग्विपरीत[25]परत्वापरत्वा[26]-नुमेयत्वम् । उच्यते । संनिहिते वृद्धे सांनिधानादपरत्वार्हे विपरीतं परत्वं

---

1 C. D. 'शब्दलिङ्गं च'; B. adds 'ननु'

2 B. has 'परिशेषात' but corrects it to 'पारिशेष्यात'

3 C. omits 'अस्मदादि'

4 C. 'ग्राह्यत्वात'

5 D. 'रूपवत्'

6 D. omits 'च'

7 D. omits 'वा'; C. has 'च'

8 B. C. D. add 'हि'

9 B. पृथिव्यादिचतुर्णां गुणास्ते श्रोत्रेण न गृह्यन्ते'

10 C. 'गृह्यते ?'

11 D. omits 'तु'

12 C. omits 'श्रोत्रेण'

13 B. D. omit 'अतो न तेषां गुणः'

14 D. adds 'न'; B. adds 'न च

15 D. omits 'न'

16 C. 'विशेषगुणत्वादत एभ्यो'

17 A. has in margin 'अत एव'; B. 'अत पृथिव्यादिभ्योऽतिरिक्तः'; D. 'अत एभ्यः'

18 B. C. 'एकत्वेन चोपपत्तेः'; D. 'एकत्वेनोपपत्तेः'

19 D. 'नाकाशत्वं'

20 D. omits 'न' here

21 B. 'वृत्तित्वनियमात'

22 B. C. D. omit 'अपि'

23 C. omits 'दिग्'

24 B. adds at margin 'ननु'

25 C. omits 'दिग्'

26 D. omits 'अपरत्व'

प्रतीयते[1]। [2]व्यवहिते यूनि व्यवधानात्[3] परत्वार्हे विपरीतमपरत्वं प्रतीयते[5]। तदिदं दिग्विपरीतं[6] परत्वमपरत्वं[7] च कार्यं तत्कारणस्य[8] दिगादेरसंभवात् काल-मेव कारणमनुमापयति। स चैकोऽपि वर्तमानातीतभविष्य[9]क्रियोपाधिवशात् वर्तमानादिव्यपदेशं लभते पुरुष इव। यथाहि[10] पच्यादिक्रियोपाधिवशात् पाचकयाचका[11]दिव्यपदेशं लभते। नित्यविभुत्वे[12] चास्य पूर्ववत्।

[13]कालविपरीतपरत्वापरत्वानुमेया दिगेका नित्या विभ्वी च। संख्यापरि-माणपृथक्त्वसंयोगविभागगुणवती पूर्वादिप्रत्ययैरनुमेया तेषामन्य[14]निमित्त-संभवात्[15]। पूर्वस्मिन् पश्चिमे वा वस्तु[16]नस्तादवस्थ्यात्। सा[17] चैका[18] विभुः (भ्वी?) सवितुः[19] [?] स्तत्तद्देशसंयोगोपाधिवशात् प्राच्यादिसंज्ञां लभते।

आत्मत्वाभिसंबन्ध[20]वानात्मा। सुखदुः[21]खादिवैचित्र्यान्नानाभूत एव। स चोक्त एव[22]। तस्य गुणाः संख्यादयः पञ्च। बुद्ध्यादयो नव[23]। नित्य-विभुत्वे चास्य[24] पूर्ववत्।

मनस्त्वाभिसंबन्धवन्[25]मनः। अणु[26]संयोगिमनो[27]ऽन्तरिन्द्रियम्[28]। सुखा-

1 D. 'व्यवह्रियते'
2 D. adds 'प्रतीयते हि'
3 B. 'असंनिधानात्'
4 B. 'तद्विपरीतं'
5 C. D. omit 'प्रतीयते'; C. has twice परत्वं प्रतीयते व्यवहिते यूनि व्यवधानात्×परत्वार्हे विपरीतमपरत्वमपरत्वं कार्यम्' (?)
6 C. 'विदिग् (क्) द्विता and 'द्विपरीतं'; D. 'द्विकृताविपरीतं'
7 D. 'परत्वापरत्वं च'
8 D. कारणत्वस्य'
9 B. C. D. 'भविष्यत्'
10 B. D. omit 'यथाहि'
11 D. omits 'याचक'; C. has 'याजकादि'
12 B. 'नित्यत्वं विभुत्वं'; C. D. 'नित्यत्वविभुत्वे'
13 B. C. D. omit 'कालविपरीत-परत्वापरत्वानुमेया'
14 B. 'अन्यन्निमित्तासंभवात्'
15 D. 'असंभवात्'
16 B. has 'वस्तुनि' but corrects it to 'वस्तुनः'
17 B. 'सा चैकापि सवितुः'
18 D. adds 'अपि'
19 D. omits 'विभु (भ्वी)' सवितुः C. has 'विभ्वी चेत्यातो गुणव-चनादिति ङापो विकल्पः'
20 C. D. 'संबन्धात्'
21 D. omits 'आदि'
22 B. omits 'एव'
23 B. 'नवैव'
24 C. D. omit 'चास्य'
25 C. 'संबन्धात्'
26 C. 'अनुत्वयोगिमनो'
27 B. D. omit 'मनः'
28 B. 'अ (आ?) न्तरेन्द्रियम्'; D. 'आन्तरेन्द्रियम्'

द्युपलम्भकरणम्[1]। नित्यं[2] च[3] संख्याद्यष्टगुणवत्[4]। यत्संयोगेन[5] बाह्येन्द्रिय-मर्थग्राहकम्[6]। अत एव सर्वोपलब्धिसाधनम्[7]। तच्चाप्रत्यक्षमपि[8] त्वनुमान-गम्यम्[9]। तथाहि[10]—सुखाद्युपलब्धयश्चक्षुराद्यतिरिक्तकरणसाध्याः। अत-(स?)[11] त्स्वपि चक्षुरादिषु जायमानत्वात्। छिदावत्[12]। यच्च करणं[13] तन्मनः[14]। तच्चाणुपरिमाणम् ॥

द्रव्याण्युक्तानि[15]। गुणा उच्यन्ते ॥ सामान्यवानसमवायिकारण-मस्पन्दात्मा गुणः। स च द्रव्याश्रितः[16]। रूपरसगन्धस्पर्शसंख्यापरिमाण-पृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेष-प्रयत्नधर्माधर्मसंस्काराश्चतु[17]र्विंशतिरेव[18]।

तत्र रूपं चक्षुरिन्द्रियमात्रग्राह्यो[19] विशेषगुणः। पृथिव्यादित्रय[20]वृत्ति[21]। तत्र[22] शुक्लाद्यनेकप्रकारं पाकजं[23] पृथिव्याम्[24]। तच्चानित्यं पृथिवीमात्र-गतम्[25]। आप्यं तैजसं परमाण्वोर्नित्यं कार्येष्वनित्यम्। शुक्लं[26]भास्वरं[27]-मपाकजं तेजसि। तदेवा[28]भास्वरमप्सु।

---

1 D. 'उपलब्धि'
2 C. D. 'नित्यं संख्यादिपञ्चगुणवत्'
3 B. D. omit 'च'
4 D. adds 'परत्वापरत्ववेगवच्च'
5 D. omits 'यत्'
6 C. 'बाह्येन्द्रियसंयोगेन बाह्येन्द्रि-यार्थग्राहकम्'
7 D. 'बाह्येन्द्रियार्थग्राहकम्'
8 C. 'तन्न प्रत्यक्षम्'; D. has at margin 'तच्च न प्रत्यक्षम्'
9 B. omits 'अपि तु'
10 B. omits 'तथाहि'
11 C. 'असत्स्वपि'
12 A has in margin 'छिदावत्'; B. adds 'यथा छिदिक्रियावत्'
13 B. adds at margin 'सुखाद्यु-पलब्धि'
14 B. omits 'तत्'
15 D. 'द्रव्यान्युक्त्वा गुणा उच्यन्ते'
16 C. 'तत्कतद्रव्यमाश्रितः'
17 D. 'संस्कारभेदाच्चतुर्विंशतिविधः'
18 C. चतुर्विंशतिधा'
19 D. omits 'इन्द्रिय'; C. 'चक्षुरि-न्द्रियग्राह्यो'
20 B. adds 'रूपं'
21 C. 'वृत्तिः'
22 B. D. 'तच्च'
23 B. adds 'च'
24 C. 'पृथिव्याः'
25 B. C. D. omit 'तच्चानित्यं पृथ्वीमात्रगतम्। आप्यं तैजसं परमा-ण्वोर्नित्यं कार्येष्वनित्यम्'
26 C. 'शुक्लं'
27 A has in margin 'परप्रकाशकं'
28 C. 'तदेवमभास्वरम्'

रसो रसनेन्द्रियग्राह्यो विशेष[1]गुणः। पृथिवीजलवृत्तिः। तत्र पृथिव्यां मधुरादिषट्प्रकारः पाकजश्च। अप्सु मधुरोऽपाकजः। स[2] द्विविधो नित्यानित्यात्मा[3]। नित्यः परमाणुभू[4]तास्वप्सु। का[5]र्यास्वप्स्वनित्य इति।

ग[6]न्धो घ्राणग्राह्य[7]गुणः। पृथिवीमात्रवृत्तिः। सुरभिरसुरभिश्च[8]। जलादौ[9] तु[10] गन्धप्रतिभानं[11] संयुक्तसमवायेन द्रष्टव्यम्।

स्प[12]र्शस्त्वगिन्द्रियग्राह्यगुणः। पृथिव्यादिचतुष्टयवृत्तिः। स च[13] त्रिविधः। शीतोष्णानुष्णाशीतभेदात्। शीतः पयसि। उष्णस्तेजसि। अनुष्णाशीतः पृथ्वीवाय्वोः। पृ[14]थिव्यां पाकजः। स एवापाकजो वायौ। पृथिवीमात्रे ह्यनित्यः। आप्यतैजसवायवीयपरमाणुषु नित्यः। आप्यादिकार्येष्वनित्यः। ए[15]ते रूपादयश्चत्वारो महत्त्वैकार्थसमवेतत्वे सत्युद्भूत[16]रूपा एव प्रत्यक्षाः।

संख्या एक[17]त्वादिव्यवहारहेतुः सामान्यगुणः। एकत्वा[18]दिपरार्द्ध[19]पर्यन्ता। तत्रैकत्वं द्विविधं नित्यानित्यभेदात्। नित्यगतं तु[20] नित्यं कार्यगतं त्व[21]नित्यम्। स्वा[22]श्रयसमवायिकारणै[23]कत्वजन्यं च[24]। द्वित्वाद्या-

1 D. omits 'विशेष'
2 B. D. omit 'स द्विविधः'; C has 'स द्विविधो'
3 B. omits नित्यानित्यात्मा'
4 D. 'रूपासु'
5 B. 'अनित्यः कार्यभूतास्वप्सु'; C. कार्यरूपास्वनित्य इति'; D. 'कार्यभूतास्वनित्य इति'
6 B. 'घ्राणग्राह्यो विशेषगुणो गन्धः'
7 C. 'घ्राणग्राह्यो विशेषगुणः'; D. 'घ्राणग्राह्यो गुणः'
8 B. adds 'इति'
9 D. adds 'स च सर्वत्रानित्य एव'
10 B. C. omit तु
11 C. गन्धप्रतिभानं तु
12 B. C. 'त्वगिन्द्रियग्राह्यो विशेषगुणः'; D. 'स्पर्शगुणस्त्वगिन्द्रियग्राह्यः'
13 B. omit 'च'
14 B. C. D. omit 'पृथिव्यां पाकजः स एवापाकजो वायौ पृथिवीमात्रे ह्यनित्यः। आप्यतैजसवायवीयपरमाणुषु नित्यः। आप्यादिकार्येष्वनित्यः।
15 D. adds 'च'
16 B. D. 'उद्भूता एव'
17 B. C. 'एकादि'
18 D. 'एकादि'
19 A. 'परार्द्ध्य'
20 B. omits 'तु'
21 B. D. omit 'तु'
22 D. adds 'तच्च'
23 B. 'कारणगतैकत्वजन्यं'; D. 'कारणगतैक'
24 B. D. omit 'च'

(द्य ?) नित्यमेव । तच्च द्वयोः पिण्डयोरिदमेकमिदमेकमित्यपेक्षाबुद्ध्या जन्यते । तत्र पिण्डौ समवायिकारणे । पिण्डयोरेकत्वे असमवायिकारणम्[1] । अपेक्षाबुद्धिर्निमित्तम्[2] । अपेक्षाबुद्धिविनाशादेव[3][4] द्वित्वविनाशः[5] । एवं त्रित्वाद्युत्पत्तिः ।

परिमाणं मानव्यवहारकारणम्[6] । तच्चतुर्विधम् । अणु महद् दीर्घं[7] ह्रस्वं चेति । तत्र कार्यगतं[8] परिमाणं संख्यापरिमाणप्रचययोनि । तद् यथा । द्व्यणुकपरिमाणमीश्वरापेक्षाबुद्धिजन्यपरमाणुद्वित्वजनितत्वात्[9] संख्यायोनि संख्याकारकमित्यर्थः[10] । त्र्यणुकपरिमाणं च[11] स्वाश्रयसमवायिकारणगत-बहुत्वसंख्यायोनि । चतुरणुकादीनां[12] तु स्वाश्रयसमवायिकारणपरिमाण-[13]जन्यम् । तूलपिण्डपरिमाणं[14] तु[15] स्वाश्रयसमवायिकारणावयवानां प्रशिथिलसंयोगजम्[16] । परमाणुपरिमाणं[17] परममहत्परिमाणं चाकाशादिगतं नित्यमेव ।

पृथक्त्वं पृथग्व्यवहारहेतुः[18] । तच्च[19] द्विविधम् । एकपृथक्त्वं द्वि-पृथक्त्वं[20] च[21] । तत्राद्यं नित्याश्रितं नित्यमनित्याश्रितमनित्यम् । द्वि-पृथक्त्वादिकमनित्यमेव ।

---

1 B. C. 'असमवायिकारणे'
2 C. omits 'अपेक्षाबुद्धिर्निमित्तम्'; B. adds at margin 'कारणम्'
3 C. D. 'अपेक्षाबुद्धिनाशादेव'
4 B. omits 'एव'
5 B. 'द्वि (द्वि ?) त्वाद्विनाशः'
6 B. C. मानव्यवहारासाधारण'
7 C. 'दीर्घह्रस्वं'
8 B. C. 'कार्यपरिमाणं'; B. adds in margin 'गत'; D. 'कार्य-गतपरिमाणं'
9 C. 'बुद्धिज'; C. omits 'जन्य'
10 B. C. D. 'संख्याकारणमित्यर्थः'
11 B. 'अपि'
12 B. C. D. 'चतुरणुकादिपरिमाणं तु'
13 B. 'कारणगतमहत्परिमाणजन्यं तु'
14 C. 'तूलपरिमाणं तु'
15 B. adds 'प्रचययोनि । प्रचयस्तु'
16 B., 'प्रशिथिलसंयोगः'; C. 'संयोग-जम्'
17 C. adds 'तु'
18 B. D. 'पृथव्यवहारकारणं'; B. adds at margin 'असाधारण'
19 C. D. omit 'तच्च' इत्यारभ्य 'अनित्यमेव' इति पर्यन्तम् ।
20 B. द्विपृथक्त्वादिकं'
21 B. omits 'च'

संयोगः संयुक्तव्यवहारहेतुः[1]। स[2] द्व्याश्रयो[3] व्याप्यवृत्तिश्च। स[4] त्रिविधः। अन्यतरकर्मज उभयकर्मजः संयोगजश्चेति[5]। तत्रान्यतरकर्मजो यथा क्रियावता[6] श्येनेन सह निष्क्रियस्य[7] स्थाणोः संयोगः। विभूनां[8] मूर्तैश्च[9] संयोगः। उभयकर्मजो[10] यथा—सक्रिययोर्मल्लयोः[11] संयोगः। संयोगजसंयोगो[12] यथा—कारणाकारणसंयोगात्[13] कार्याकार्यसंयोगः। यथा हस्ततन्तुसंयोगेन[14] कार्यतन्तुसंयोगः[15]।

विभागो विभक्तप्रत्ययहेतुः[16]। संयोगपूर्वको द्व्याश्रयः[17] स च त्रिविधः—अन्यतरकर्मज उभयकर्मजो विभागजश्चेति[18]। तत्र प्रथमो यथा—[19]श्येनक्रियया शैलश्येन[20]विभागः। द्वितीयो यथा— मल्लयोर्विभागः[21]। तृतीयो यथा—हस्ततरु[22]विभागात् [23]कार्यतरुविभागः।

परत्वापरत्वे परापरव्यवहारकारणे[24]। ते तु द्विविधे दिक्कृते कालकृते च। तत्र दिक्कृतयोरुत्पत्तिः कथ्यते। [25]एकस्यां दिश्यवस्थितयोः पिण्डयोरिदम्[26]अस्मात् संनिकृष्टम्[27]इति [28]बुद्ध्यानुगृहीतेन दिक्पिण्डसंयोगेना-

---

1 C. 'संयुक्त'
2 C. omits 'स'
3 B. 'स च द्व्याश्रितः'
4 B. adds 'च'
5 C. D. omit 'इति'
6 B. 'यथा क्रियावता निष्क्रियस्य स्थाणोः श्येनेन सह संयोगः'
7 C. 'निःक्रियस्य'
8 B. 'अत्र हि श्येनस्य क्रियासमवायिकारणं विभूनां मूर्तैर्वा'
9 C. 'मूर्तैः संयोगो वा'; D. 'विभूनां च मूर्तैरिति'
10 C. adds अस्य श्येनेऽसमवायिकारणारम्भः'; D adds 'अस्य हि श्येनक्रियासमवायिकारणम्'
11 B. D. add 'मेषयोर्वा'
12 B. 'संयोगजः'; D. 'संयोगजश्च'
13 C 'कारणसंयोगात्'
14 B.'हस्ततरुसंयोगेन कायतरुसंयोगः; B. adds 'अनित्यश्च संयोगः'; D. 'हस्ततरुसंयोगे'
15 D. कायतरुसंयोगः'
16 B. 'विभक्तव्यवहारहेतुः'
17 C. 'उभयाश्रितः' 'द्व्याश्रया (?)'
18 C. D. omit 'इति'
19 B. adds at margin 'शैलस्थ'; D. adds 'शैले शैलो द्रुतक्रियया'
20 B. 'शैलश्येनयोः'
21 A. C. 'मेषयोर्विभागः'; B. D. 'मल्लयोर्मेषयोर्वा'
22 C. D. 'हस्ततन्तु'
23 C. D. 'कायतन्तु'
24 B. 'असाधारणकारणे'
25 C. 'दिशि व्यवस्थितयोः'
26 D. 'अथम्'
27 C. 'संनिकृष्टः'
28 B. 'अपेक्षाबुद्ध्या'

परत्वं संनिकृष्टे जन्यते । विप्रकृष्टबुद्ध्या[1] तु[2] परत्वं विप्रकृष्टे जन्यते । संनिकर्षस्तु[3] पिण्डस्य द्रष्टुः शरीरापेक्षया संयुक्त[4]संयोगाल्पीयस्त्वम् । विप्रकर्षस्तु[5] संयोग[6]भूयस्त्वम् । कालकृतयोस्तु[7] परत्वापरत्वयोरुत्पत्तिः कथ्यते । अनियतदिग्व्यवस्थितयोर्[8]युवस्थविरपिण्डयोरयमस्मादल्पतरकालेन संबद्ध इत्य[9]पेक्षाबुद्ध्यानुगृहीतेन कालपिण्डसंयोगेन यून्यपरत्वम्[10]। अयमस्मात् प्रचुरकालेन[11] संबद्ध इति धिया स्थविरे परत्वम् ।

गुरुत्वमाद्यपतनासमवायि कारणम्[12] । अदृष्टत्वे[13] सति पृथिवीजलवृत्ति । यथोक्तम्--'संयोगवेग[14]प्रयत्नाभावे सति[15] गुरुत्वात् पतनम्' इति ।

द्रवत्वमाद्यस्यन्दना[16]समवायिकारणम् । भूतेजोजलवृत्ति । भूतेजसोर्घृतादि[17]सुवर्णयोरग्निसंयोगेन[18] द्रवत्वात् । तयोर्[19]नैमित्तिकं[20] द्रवत्वम् । जले[21] नैसर्गिकम् ।

स्नेहश्चिक्कणता । जलमात्रवृत्तिः । कारणगुण[22]पूर्वको गुरुत्वादिवद् । यावद्द्रव्यभावी ।

शब्दः श्रोत्रग्राह्य[23] आकाशस्य विशेषगुणः । ननु कथमस्य श्रोत्रेण[24]

---

1 D. 'बुद्ध्यनुगृहीतेन' B. 'विप्रकृष्टमिति बुद्ध्या'; C. omits 'विप्रकृष्टबुद्ध्या' 'इत्यारभ्य' 'जन्यते' इति पर्यन्तम्।

2 B. omits 'तु'

3 B. C. 'संनिकृष्टत्वे'; D. 'संनिकृष्टत्वं तु'

4 C. omits 'संयुक्त'

5 B. 'तद्भूयस्त्वं विप्रकृष्टत्वं'; D. 'विप्रकृष्टत्वं तु'

6 D. 'संयुक्तसंयोगभूयस्त्वम्'

7 B. omits 'तु'

8 B. D. 'दिगवस्थितयोः'; C. 'दिगन्तव्यवस्थितयोः

9 C. omits 'इत्यपेक्षाबुद्ध्या' 'इत्यारभ्य 'संबद्ध' इति पर्यन्तम् ।

10 B. adds 'जन्यते'

11 B. 'प्रचुरतरकालसंबद्ध इति बुद्ध्या'; D. 'प्रचुरकालसंबद्ध इति धिया'

12 B. at margin 'गुरुत्वम्' and adds 'वातपाषाणसंयोगाभावे गुरुत्वात पतनम् ।

13 B. C. D. omit अदृष्टत्वे सति.

14 C. omits 'सति'
D. 'वृन्तफलसंयोगाभावे सति'

15 C. omits 'सति'

16 D. 'आद्यस्पन्दनासमवायिकारणम्'

17 D. omits 'आदि'

18 'अग्निसंयोगात (द्र?) द्रवत्व नैमित्तिकम् ।'

19 C. D. omit 'तयोः'

20 B. 'द्रवत्वं नैमित्तिकं'

21 C. 'जले तु नैसर्गिकमेव'

22 C. 'कारणपूर्वो'; B. omits 'कारणगुणपूर्वको'

23 B. 'ग्राह्यो गुणः स च आकाशविशेषगुणः'

24 D. 'श्रोत्रग्रहणम्'

ग्रहणम्। यतो[1] भेर्यादिदेशे शब्दो जायते श्रोत्रं तु[2] पुरुषदेशेऽस्ति। भेरीदेशे[3] जातः शब्दो वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन[4] वा संनिहितं[5] शब्दान्तरमारभते। स च शब्दः शब्दान्तरमिति क्रमेण श्रोत्रदेशे जातोऽन्त्यः[6] (न्त्यः?) शब्दः श्रोत्रेण गृह्यते न त्वाद्यो[7] नापि मध्यमः[8]। एवं वंशे पाट्यमाने दलद्वयविभागदेशे जातः शब्दः शब्दान्तरारम्भ[9]क्रमेण श्रोत्रदेशेऽन्त्यं[10] शब्दं जनयति सोऽन्त्यः शब्दः श्रोत्रेण गृह्यते नाद्यमध्यमौ[11]। भेरीशब्दो मया श्रुत इति धीर्भ्रान्तैव[12]। भेरीशब्दोत्पत्तौ भेर्याकाशसंयोगोऽसमवायिकारणम्। भेरीदण्डसंयोगो निमित्तम्[13]। वंशपाटनाच्चटचटाशब्दोत्पत्तौ[14] वंशदलाकाशविभागोऽसमवायिकारणम्। दलद्वयविभागो निमित्तम्। तेनाद्यः[15] शब्दः[16] संयोगजो विभागजो वा अन्त्यमध्यम[17]शब्दास्तु शब्दासमवायिकारणका अनुकूलवात[18] [निमित्त]काः। तथा चोक्तम्—'संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिः' इति। आद्यादीनां सर्व[19]शब्दानामाकाशमेव[20]ैकं समवायिकारणम्। कर्मबुद्धिवत्[21]त्रिक्षणमात्रा[22]वस्थायित्वं[23] च। तत्राद्य[24]मध्य[25]शब्दाः कार्यशब्दनाश्याः। अन्त्यस्तूपान्त्ये[26] (न्ते) न उपान्तस्त्वन्तेन सुन्दोपसुन्दन्यायेन विनश्येते[27]।

---

1 D. omits 'यतः' C. 'यावता';
2 B. D. 'च'
3 B. 'भेर्यादिदेशे'
4 C. D. 'कदम्बगोलकन्यायेन' A. omits 'कदम्बमुकुलन्यायेन'
5 B. C. 'स्वसंनिहितं'
6 B. 'जातोन्त्यशब्दः'; C. D. 'जातोऽन्त्यः'
7 D. omits 'तु'
8 C. 'मध्यः'
9 C. omits 'आरम्भ'
10 C. D. 'अन्त्यं'
11 B. 'नाद्यो न मध्यमः' C. 'नाद्यो नापि मध्यश्च'
12 B. D. 'धीरत्र भ्रान्तैव' C. 'धीरत्र भ्रान्त्यैव'
13 B. 'निमित्तकारणम्'
14 D. adds 'आकाशं समवायिकारणम्'; C. omits 'वंशपाटनात्' इत्यारभ्य 'निमित्तम्' इति पर्यन्तम्। B. 'वंशपाटने'
15 B. C. D. 'इत्थमाद्यः'
16 D. omits 'शब्दः'
17 C. 'अन्त्यमध्यशब्दास्तु'
18 C. D. 'अनुकूलवातनिमित्तकाः' B at margin 'अनुकूलवातनिमित्तकारणकाः'
19 D. 'सर्वशब्दानामेवाकाशं कारणं'
20 C. omits 'एव'
21 B. 'कर्मबुद्धिवदस्य'
22 B. omits 'मात्र'; C. 'त्रिक्षणावस्थायित्वं च'
23 D. omits 'च'
24 B. 'अत्र'
25 B. 'मध्यम'
26 B. 'उपान्त्येन'
27 C. D. 'नश्येते'

इदं चायु[1]क्तम्। उपा[2]न्ते (न्त्ये ?) द्वित्रिक्ष[3]णस्थायिनान्त्यस्य[4] द्वितीय[5]क्षणानुगामिना तृतीय[6]क्षणे चासतान्त्यनाशजननासंभवात्। तस्मादुपान्त्यनाशादेवान्त्यनाश इति। विनाशित्वं च शब्दस्यानुमानात्। तथाहि—शब्दोऽनित्यः सामान्यवत्त्वे च[7] सत्यस्मदादिबाह्येन्द्रियप्रत्यक्ष-त्वाद्[8] घटवत्। शब्दस्या[9]नित्यत्त्वं साध्यमनित्यत्वं च[10] विना[11]शावच्छिन्नस्व-रूपवत्त्व[12]म्[13]। न तु विनाशावच्छिन्नसत्तायोगः प्रागभावे सत्ताहीनेऽनित्य-त्वाभावप्रसङ्गात्। सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियप्रत्य[14]क्षत्वं हेतुः। प्र[15]त्यक्षत्वादित्युच्यमान आत्मनि[16] व्यभिचारः स्यादि[17]त्यत उक्तं बाह्ये-न्द्रियेति[18]। ए[19]वमपि [20]योगिबाह्येन्द्रियग्राह्ये[21] [पर[22]माणवादौ] व्यभिचारः स्या[23]दतो [24]योगिनिरासार्थमस्मदादीति। किं पुनर्योगिसद्भावे प्रमाणम्। उच्यते। परमाणवः कस्यचित् प्रत्यक्षाः प्रमेयत्वात् घटव[25]त्। त[26]थापि

---

1 B. 'त्वयुक्तम्'

2 C. D. 'उपान्त्येन'

3 B. C. 'त्रिक्षणस्थायिना'; D. 'त्रिक्षणावस्थायित्वादन्त्यस्य द्वितीय'

4 C. 'दन्त्यस्य (?)'

5 C. 'द्वितीयक्षणस्थायित्वात्' but D. has at margin 'द्वितीयक्षणानु-सिगोना (?)'

6 C. 'तृतीये क्षणे'

7 B. C. D. omit 'च'

8 B. 'चेन्द्रियग्राह्यत्त्वात्'

9 B. adds 'अत्र'

10 C. omits 'च'

11 D. 'नाशावच्छिन्नस्वरूपत्वम्'

12 C. 'स्वरूपम्'

13 B. adds 'एव'

14 B. 'इन्द्रियग्राह्यत्वं'

15 A has in margin "इन्द्रिय-प्रत्यक्षत्वात्'; B. has 'इन्द्रिय-ग्राह्यत्वाद्"

16 D. 'आत्मना'

17 B. D. omit 'इति'

18 B. 'बाह्येन्द्रियामिति'

19 D. adds 'तथापि सामान्यादिना व्यभिचारः स्यादिति। अत उक्तम् सामान्यवत्त्वे सतीति। सामान्या-दित्रयं निःसामान्यम्।

20 C. 'तेनैव बाह्येन्द्रियग्राह्येण'; D. omits 'योगि'

21 D. ग्राह्येण परमाणवादिना'

22 B. adds 'परमाणौ' and A has in margin 'परमान्वादौ'

23 C. D. 'स्यादित्यतो'

24 B. omits 'योगिनिरासार्थम्'

25 B. adds 'करतलामलकवत् यस्य प्रत्यक्षाः स एव योगी'; C. adds 'इति'

26 D. omits here 'तथापि इत्या-रभ्य' 'निःसामान्यम्' इति पर्यन्तम्

सामान्यादिना[1] व्यभिचारः स्यादिति[2]। अत उक्तं सामान्यवत्त्वे[3] सति[4]। सामान्यादित्रयं तु[5] निःसामान्यम्[6]।

अर्थप्रकाशो[7] बुद्धिः[8]।

प्रीतिः सुखम्[9]। तच्च[10] सर्वात्मनानुकूलवेदनीयम्।

पीडा दुःखम्[11]। तच्च सर्वात्मना प्रतिकूलवेदनीयम्।

राग इच्छा[12]।

क्रोधो द्वेषः।

उत्साहः प्रयत्नः[13]।

बुद्ध्यादयः षड्[14] मानसप्रत्यक्षाः।

धर्माधर्मौ[15] तौ[16] चाप्रत्यक्षावनुमानगम्यौ[17] चानुमीयेते। देवदत्तस्य[18] शरीरादिकं[19] देवदत्तविशेषगुणजन्यं[20] कार्यत्वे सति देवदत्तस्य[21] भोगहेतुत्वात्। देवदत्तप्रयत्नजन्यवस्तुवदिति[22][23]। यश्च शरीरादिजनक आत्मविशेषगुणः स एव धर्मोऽधर्मश्च[24]। प्रयत्नादीनां शरीराद्यजनकत्वादिति[25]।

---

1 B. 'सामान्यादौ'; C. 'सामान्येन'
2 B. omits 'इति'
3 B. 'सामान्यवत्त्वेति'
4 C. 'सतीति'
5 C. omits 'तु'
6 B. adds 'एव'
7 A has in margin 'आत्माश्रयः'
8 B. adds 'सा द्विधा नित्यानित्या च नित्या ऐशी बुद्धिः। अस्मदीया त्वनित्या।' D. adds 'सा द्विविधा नित्यानित्यभेदात्। नित्या ऐशी बुद्धिः। अन्यदीया त्वनित्या'
9 D. adds 'सुखमनित्यमेव'
10 B. 'तत्तु'
11 D. adds 'अनित्यं दुःखम्'
12 B. adds 'सा द्विधा नित्यानित्या च। नित्येशस्य अस्मदादीनां त्वनित्या'; D. adds 'सा च नित्या ईश्वरस्य अन्यदीयात्वनित्या'
13 D. adds 'स चेश्वरस्य नित्योऽन्यदीयोऽनित्यः'
14 D. 'षण्मानस'
15 C. 'सुखदुःखयोरसाधारणकारणं धर्माधर्मौ'; B. and D. add 'सुखदुःखयोरसाधारणकारणौ'
16 B. 'तौ चाप्रत्यक्षावपि [at margin प्रागागमगम्याव] नुमीयेते।' 'तौ चा प्रत्यक्षौ तथाप्यागमगम्यौ अनुमानगम्यौ च अनुमीयेते।'
17 D. 'अप्यागमगम्यौ अनुमानगम्यौ च'
18 B. adds 'तथाहि'
19 B. 'देवदत्तशरीरादिकम्'
20 D. 'देवदत्तस्य'
21 B. 'देवदत्तभोगहेतुत्वात्'; C. omits 'देवदत्तस्य भोगहेतुत्वात्'
22 D. 'देवदत्तस्य'
23 B. omits 'इति'
24 A. 'धर्माधर्मश्च'
25 B. omits 'इति' and adds 'धर्माधर्मौ अनित्यौ आत्ममात्रस्थितौ'

संस्कारस्त्रिविधो[1] वेगो भावना स्थित[2]स्थापकश्च। तत्र वेगः पृथिव्यादि-चतुष्टयमनोवृत्तिः क्रियाहेतुः। भावनाख्यस्तु संस्कार आत्ममात्र-वृत्तिरनुभवजन्यः स्मृतिहेतुः। स चोद्बुद्ध एव स्मृतिं जनयति उद्बो[3]धकश्च सहकारिलाभः[4]। सहकारिणश्च संस्कारस्य सदृशदर्शनादयः। यथोक्तम्-'सदृशादृष्टचिन्तायाः[5] (द्याः ?) स्मृतिबीजस्य बोधकाः' इति[6][7]।

स्थित[8]स्थापकस्तु स्पर्शवद्विशेषवृत्तिः[9]। अन्यथाभूतस्य स्वाश्रयस्य[10] धनुरादेः पुनस्तथैव[11] स्थापकः[12]। एते[13] बुद्ध्यादयोऽधर्मान्ता[14] भावना चात्म-विशेषगुणाः॥

गुणा[15] उक्ताः। कर्मो[16]च्यते।

चलनात्मकं कर्म। गुण इव[17] द्रव्यमात्रवृत्ति[18]। अविभुद्रव्यपरिमाणेन मूर्तित्वापरनाम्ना[19] सहैकार्थसमवेतं विभागद्वारा पूर्वसंयोगनाशे[20] सत्युत्तर-देशसंयोगहेतुश्च[21]। तच्चो[22]त्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् पञ्चधा। भ्रमणादयस्तु गमनग्रहणेन[23] गृह्यन्ते।

अनुवृत्तिप्रत्ययहेतुः सामान्यम्। द्रव्यादित्रयवृत्ति नित्यमेकम[24]नेका-नुगतं[25] च[26]। तच्च द्विविधं परमपरं च[27]। परं[28] सत्ता बहुविषयत्वात्। सा[29]

---

1 C. 'त्रिधा'
2 B. 'स्थिति'
3 B. D. 'उद्बोधश्च'; C. 'उद्बोधस्ता (स्तु ?)'
4 C. D. 'सहकारिलाभात्'
5 B. D. 'चिन्तायाः'
6 B. C. omit 'इति'
7 B. adds 'पार्थिवआप्यतैजसवायवीयपरमाणुषु नित्यः द्व्यणुकादिकार्येष्वनित्यः। इति भावनाख्योऽनित्यः।'
8 B. D. 'च'
9 A has at margin 'द्रव्यविशेषवृत्तिः'
10 C. 'स्वाश्रयधनुरादेः'
11 D. omits 'तथैव'
12 B. 'तादवस्थ्यास्थापकः'; C. 'तथैवावस्थापकः'; D. 'तदवस्थापकः'
13 C. D. 'एते च'
14 D. 'धर्माधर्मौ'
15 D. 'एवं गुणा उक्ताः'
16 D. adds 'अथ'
17 D. 'गुणवत्'
18 B. C. 'द्रव्यमात्रवृत्तिः'
19 C. 'मूर्तापरनाम्ना'; D. 'मूर्तत्वापरनाम्ना'
20 B. 'पूर्वदेशसंयोगनाशे'
21 B. omits 'च'
22 D. omits 'तच्च'
23 B. D. add 'एव'
24 C. omits 'एकम्'
25 B. 'अनेकसमवेतं'
26 C. omits 'च'
27 B. adds 'इति'
28 B. D. add 'तत्र' and A has in margin 'तत्र'
29 D. 'तच्च'

चानुवृत्तिमात्रहेतुत्वात्[1] सामान्यमात्रम्। अपरं द्रव्यादि[2]। अल्पविषयत्वात्। तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यमिति[3] विशेषः। अत्र कश्चिदाह—व्यक्तिव्यतिरिक्तं सामान्यं नास्ति[4]। अत्र ब्रूमः—किमालम्बना तर्हि भिन्नेषु[5] विलक्षणेषु पिण्डेष्वेकाकारा बुद्धिर्विना[6] सर्वानुगतमेकं किंचित्[7] तदेव[8] सामान्यमिति[9]। ननु[10] तस्य[11] व्यावृत्तिकृतैकाकारा[12] बुद्धिरस्ति[13]। तथाहि सर्वेष्वपि[14] गोपिण्डेष्वगोभ्योऽश्वादिभ्यो व्यावृत्तिरस्ति। तेनागोव्यावृत्तिविषय एवा[15]यमे[16]काकारप्रत्ययोऽनेकेषु गोपिण्डेषु न तु विविधरूपगोत्वसामान्यविषयः[17]। मैवम्। विधिमुखेनै[18]वैकाकार[19]प्रत्यय[20]स्फुरणाद् विशेषो नित्यो[21] नित्यद्रव्यवृत्ति[22] [ : ] व्यावृत्तिबुद्धिमात्रहेतुः। नित्यद्रव्याण्या[23]काशादीनि पञ्च पृथिव्यादयश्चत्वारः परमाणुरूपाः।

अयुतसिद्धयोः संबन्धः समवायः। स चोक्तः[24]। नन्ववयवावयविनौ[25] अयुतसिद्धौ तेन तयोः संबन्धः समवाय इति[26]। न चैतद्[27] युक्तमवयव[28]व्यतिरिक्तस्यावयविनोऽभावात्। परमाणवो[29] हि यथा[30] तथा संनिकृष्टा बहवो

1 B. 'अनुवृत्तिप्रत्ययहेतुत्वात'
2 B. C. D. 'द्रव्यत्वादि'
3 B. C. D. 'सामान्यविशेषः', and A has in margin 'सामान्यसद्विशेषः'
4 B. D. add 'इति'
5 B. 'भिन्नाविलक्षणेषु गोपिण्डेषु'
6 D. omits 'विना' and adds 'न'
7 B. C. D. omit 'किंचित्'
8 D. adds 'च'
9 B. omits 'इति'
10 D. omits 'ननु'
11 B. omits 'तस्य'
12 D. 'तत्रेतरव्यावृत्ति'; B. 'कृतैवैकाकारा'
13 B. D. 'अस्तु'
14 B. C. D. 'सर्वेष्वेव'
15 B. omits 'एव'
16 D. omits 'अयं'
17 B. 'विषयेति' (?) and D. adds 'इति'
18 D. omits 'एव'
19 C. 'एकाकारस्मरणात्'; D. 'एकाकारग्रहणात्'
20 A. 'प्रत्ययः स्फुरणात्' B. omits 'प्रत्यय'
21 B. omits 'नित्यः'
22 B. 'नित्यद्रव्यमात्रवृत्तिः'; C. 'नित्यद्रव्यवृत्तिः'
23 B. C. D. 'नित्यद्रव्याणि तु'
24 B. D. 'स चोक्त एव'; C. omits 'स चोक्तः'
25 B. D. add 'अपि'
26 C. omits 'नन्ववयवावयविनौ अयुतसिद्धौ तेन तयोः संबन्धः समवाय इति।
27 B. omits 'च'
28 D. 'अवयवातिरिक्त'
29 D. 'परमाणवो घटाद्याकारेण तथा-तथा संनिकृष्टा'
30 C. omits 'यथा'

घटोऽयं[1] घटोऽयमिति गृह्यन्ते। अत्रोच्यते—अस्त्येकः[2] स्थूलो[3] घट इति प्रत्यक्षा बुद्धिः। न च[4] सा परमाणुष्वनेकेष्वस्थूलेष्वतीन्द्रियेषु भवितुमर्हति[5]। भ्रान्तेयं[6] बुद्धिरिति चेत्। न। बाधकाभावात्॥

तदेवं षट् पदार्था द्रव्यादयो वर्णितः। एते[7] च विधिमुखप्रत्ययवेद्यत्वाद् भावरूपा एव॥

इदानी निषेधमुखप्रमाणगम्योऽभावगम्यः (रूपः?) सप्तमः[10] पदार्थः प्रतिपाद्यते। स चाभावः[11] संक्षेपतो[12] द्विविधः। संसर्गाभावोऽन्योन्याभावश्च। संसर्गाभावस्त्रिविधः[13]। प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावश्च।

उत्पत्तेः प्राक् कारणे कार्यस्याभावः[14] प्रागभावः। यथा[15] तन्तुषु पटाभावः। स चानादिरुत्पत्तेरभावात्। विनाशी च कार्यस्य तद्विनाशरूपत्वात्।

उत्पन्नस्य[16] कारणेऽभावः प्रध्वंसाभावः। विनाश[17] इति यावत्। यथा भग्ने घटे कपालमालायां घटाभावः। स च मुद्गरप्रहारादिजन्यः[18]। स चोत्पत्तिमानप्यविनाशी घटस्य[19] पुनरनिवृत्तेः[20]। कार्यस्य त्रैकालिकोऽप्य[21]भावोऽत्यन्ताभावः[22]। यथा वायौ रूपाभावः[23]।

अन्योन्याभावस्तु तादात्म्यप्रतियोगिकोऽभावः। घटः पटो न भवतीति[24]। तदेवमर्था व्याख्याताः॥

---

1 C has 'घटोऽयम' once
2 D. 'अस्त्येवमेकस्थूलोऽयं'
3 B. 'स्थूलोऽयं घटः
4 D. omits 'च'
5 C. 'अर्हतीति'
6 C. 'भ्रान्ता चेत'
7 B. D. 'ते च'
8 D has at margin 'भावा'
9 B. C. D. 'अभावरूपः'
10 B. 'सप्तमपदार्थो निरूप्यते'
11 C. omits 'स च'
12 B. omits 'संक्षेपतः'
13 B. 'संसर्गाभावोऽपि तत्र त्रेधा'; C. 'संसर्गाभावोऽपि त्रिधा'; D. 'संसर्गाभावोऽपि त्रिविधः'
14 C. 'कार्याभावः'
15 C. omits 'यथा तन्तुषु पटाभावः'
16 B. C. 'उत्पन्नस्य कार्यस्य'
17 C. 'अविनाशी'
18 C. 'मुद्गरादि'
19 C. omits 'घटस्य'
20 B. 'नष्टस्य पुनरनुत्पत्तेः'; D. 'पुनरननुवृत्तेः कार्यस्य'
21 D. 'त्रैकालिकाभावो'
22 B. omits 'अपि'
23 B. 'वायुरूपाभावः'
24 B. D. omits 'इति'

ननु ज्ञानाद् ब्रह्मणो व्यतिरिक्ता[1] अर्था न सन्ति । मैवम् । अर्थानामपि प्रत्यक्षसिद्धत्वेनाशक्यापलापत्वात्[2][3] ।

बुद्धिरुपलब्धिर्ज्ञानं[4] प्रत्यय इत्यादिभिः पर्यायशब्दैर्यदभिधीयते सा बुद्धिः । अर्थप्रकाशो[5] बुद्धिः । सा च स्वरूपतो[6] द्विविधा[7] । अनुभवः स्मरणं च[8] । अनुभवो[9] द्विविधो यथार्थोऽयथार्थश्च[10] ।

तत्र यथार्थोऽविसंवादी[11] । प्रत्यक्षादिभिः[12] प्रमाणैर्जन्यते । यथा चक्षुरादिभिरदुष्टैर्घटादिज्ञानम् । धूमादिलिङ्गज्ञानाद्[13] वह्न्यादिज्ञानम्[14] । गोसादृश्यदर्शनाद् गवयशब्दवाच्यताज्ञानम्[15] । अग्निष्टोमेन[16] स्वर्गकामो यजेतेत्यादिवाक्याद[17]ग्निष्टोमस्य[18] स्वर्गसाधनताज्ञानम्[19] ।

अयथार्थस्त्वर्थव्यभिचार्य[20]प्रमाणजः[21] । स[22] त्रिविधः—संशयस्तर्को विपर्ययश्च । संशयतर्कौ[23] वक्ष्येते । अतस्मिंस्तद्ग्रहो[24] विपर्ययः । भ्रम इति यावत्[25] । यथा पुरोवर्तिन्येवारजते[26] शुक्तिकादौ[27] रजतारोपः इदं रूप्यमिति[28] ।

---

1 C. 'वा अतिरिक्ता'

2 B. 'प्रत्यक्षादिसिद्धत्वेन'

3 C. 'अशक्यापलापात्'

4 B. adds 'अधुना बुद्धि [ः ?] निरूप्यते'

5 B. 'अर्थप्रकाशो वा'; C. D. 'अर्थप्रकाशो वा बुद्धिः'

6 B. C. D. 'संक्षेपतो'

7 B. 'द्विधा'

8 B. 'अनुभवरूपा स्मृतिरूपा च'

9 B. adds 'अपि'

10 A. 'अयथार्थो यथार्थश्च'

11 B. 'अविसंवादिप्रत्यक्षादिप्रमाणैर्जन्यते'; A has in margin 'समर्थप्रवृत्तिजनकत्वमविसंवादित्वम् । एतद्विपरीतं विसंवादित्वम्'

12 A has in margin 'यः प्रत्यक्षादिभिः'; D. 'प्रत्यक्षादिप्रमाणैः'

13 B. 'धूमादिज्ञानात्'

14 D. omits 'आदि'

15 C. 'गवयस्य तच्छब्दवाच्यताज्ञानम्'

16 B. D. 'ज्योतिष्टोमेन'

17 B. 'शब्दात्'

18 B. D. 'ज्योतिष्टोमस्य'

19 C. D. 'स्वर्गसाधनत्वज्ञानम्'; A has 'स्वर्गसाधनज्ञानम्' and adds at margin 'ता'

20 C. 'अयथार्थस्त्वर्थस्त्वर्थव्याभिचारी'

21 B. 'अप्रमाणजन्यः'

22 B. 'स च त्रेधा'; C. स च त्रिविधः'

23 A. 'संशयस्तर्को'

24 B. D. 'विपर्ययस्त्वतास्तस्मिंद्ग्रहः'

25 C. omits 'भ्रम इति यावत्'

26 C. 'पुरोवर्तिन्यरजताकारे रजतारोपः'

27 B. D. 'शुक्त्यादौ'

28 B. D. 'रजतमिति'

स्मरणमपि[1] यथार्थमयथार्थं चेति द्विविधम्[2]। तदुभयं जागरे। स्वापे[3] तु सर्वमेव ज्ञानं स्मरणमयथार्थं[4] च। दोषवशेन तदितिस्थाने इद-मित्युदयात्[5]। सर्वं[6][7] ज्ञानं निराकारमेव[8]। ननु[9] ज्ञानेऽर्थेन[10][11] स्वस्याकारो जन्यते[17]। न[12]। साकारवादिनिराकरणात्[13]। अत एवाकारेणार्थानुमान-मपि निरस्तम्। प्रत्यक्षसिद्धत्वाद् घटादेः। सर्वं[14] ज्ञानमर्थनिरूप्य-मर्थप्रतिबन्द्धस्यैव[15] तस्य मनसा निरूपणात्। घटज्ञानवानहं[16] न तु ज्ञानवानहमित्येतावन्मात्रं ज्ञायते।

अन्तरिन्द्रियं मनः। तच्चोक्तमेव।

प्रवृत्तिर्धर्माधर्ममयी यागादिक्रिया[18] तस्या[19] जगव्यवहारसाधनत्वात्[20]।

दोषा रागद्वेषमोहाः[21]। राग इच्छा। द्वेषो मन्युः। क्रोध इति[22] यावत्। मोहो[23] मिथ्याज्ञानं विपर्यय इति यावत्।

पुनरुत्पत्तिः प्रेत्यभावः[24]। स चात्मनः[25] पूर्वदेहनिवृत्तिरपूर्वदेहसंघातलाभः[26][27]।

---

1 B. 'स्मरणमपि द्विविधम्'
2 B. omits here 'द्विविधम्'
3 B. C. 'स्वप्ने तु'
4 C. 'स्मरणं चायथार्थं च'
5 B. adds 'इति'
6 D. 'इति स्मरणात्'
7 D. adds 'च'
8 A has at margin 'निराकारत्वं नाम निरवयवत्वं पृथिव्यादिचतुष्टयं सावयवमन्यत् सर्वं निरवयवम्'
9 C. 'न तु'
10 B. D. 'ज्ञानेनार्थे'
11 B. adds 'इति चेन्न'
12 C. omits 'न'
13 D. 'साकारज्ञानवादि'; B. adds at margin 'वादि' and C. 'साकारज्ञाननिराकरणात्'; A has at margin 'साकारज्ञानवादि'
14 D. adds 'हि' and at margin 'सदैव हि'
15 B. 'निबद्धस्यैव'
16 B. adds 'इत्येव'
17 B. 'ज्ञानं जन्यते'; A has in margin 'जायते'
18 B. 'यज्ञादिक्रिया'
19 C. D. 'तयो'
20 B. 'प्रवृत्तेर्जगद्व्यवहारस्य साधकत्वात्'; D. 'जगद्व्यवहारसाधकत्वात्'
21 C. 'रागद्वेषमोहरूपाः'
22 C. omits 'क्रोध इति'
23 A omits 'मोहो मिथ्याज्ञानं विपर्यय इति यावत्' but has it at margin.
24 C. 'प्रत्यभावः'
25 A. 'चात्मनो (?) पूर्वदेह'; D. 'आत्मनो पूर्वदेह' and D. adds at margin 'पूर्वदेहनिवृत्ति'
26 B. 'निवृत्तौ'
27 D. 'संतति'

फलं पुनर्भोगः[1] । सुखदुःखानुभवः ।

पीडा दुःखम् । तच्चोक्तमेव[2] ।

मोक्षोऽपवर्गः । स चैकविंशतिप्रभेदभिन्नस्य दुःखस्यात्यन्तिकी निवृत्तिः ।

एकविंशतिभेदास्तु[3] शरीरं षडिन्द्रियाणि षड् विषयाः षड् बुद्धयः सुखं दुःखं च[4] । गौणमुख्यभेदात्[5] । सुखं[6] तु [ दुःखमेव ? ] दुःखानुषङ्गात् । अनुषङ्गोऽविनाभावः[7] । स चायमुपचारो मधुनि विषसंयुक्ते मधुनोऽपि[8] विषपक्षनिक्षेपात्[9] । स पुनरपवर्गः कथम् । उच्यते । शास्त्राद्विदितयथार्थ[10]समस्ततत्त्वस्य विषयदोषदर्शनेन विरक्तस्य मुमुक्षोर्ध्यायिनो ध्यानपरिपाकवशात् साक्षात्कृतात्मनः क्लेशहीनस्य काम्यकर्माद्यनुष्ठानादनागत[11]धर्माधर्मावनर्जयतः[12] पूर्वोपात्त[13] धर्माधर्मप्रचयं[14] योगप्रभावाद् विदित्वा समाहृत्य भुञ्जानस्य पूर्वकर्मनिवृत्तौ वर्तमानशरीरादिविगमे पूर्व[15]शरीरा[16]भावादेकविंशतिदुःखसंबन्धो न भवति कारणाभावात् । योऽयम्[17]एकविंशति[18]दुःखहानिर्मोक्षः सोऽपवर्गः[19] ।

---

1 B. adds at margin 'स भोगः सुखदुःखानुभवः'; C. 'सुखदुःखानुमेयः'

2 B. omits 'तच्चोक्तमेव' C. omits 'तच्चोक्तमेव' इत्यारभ्य 'सुखंदुःखं च' इति पर्यन्तम्

3 B. D. 'प्रभेदास्तु'

4 A. adds at margin 'इति। एवं'

5 C. adds 'तच्च'

6 B. 'सुखं दुःखमेव दुःखानुषङ्गात' D. C. 'सुखं तु दुःखमेव दुःखानुषङ्गात', and A. has at margin 'सुखं तुदुःखमेव दोषानुखषं (?) ङ्गात'

7 C. 'अविनाभावाः (?)'; A. has at margin 'अविनाभावोऽव्याप्तिः सर्वत्र दुःखानन्तरं सुखमेव'

8 C. omits 'मधुनोऽपि'

9 D. 'निङ्क्षेपवत्'; A. has at margin 'निक्षेपवत्'; C. has 'निक्षेपा (?) वत्'

10 B. D. 'पदार्थतत्त्वस्य'; C. 'पदार्थसमस्ततत्त्वस्य'

11 B. C., 'निःकामकर्मानुष्ठानात्'; D. निष्कामकर्मानुष्ठानात्'

12 A. C. D. 'वनार्जयतः'; B. 'अनुपार्जयतः'

13 C. 'पूर्वोपात्तधर्माधर्मप्रचयं च'

14 A has at margin 'धर्माधर्मप्रचयं'

15 B. 'अपूर्वशरीराभावात्' C. omits 'पूर्वशरीराभावात्'

16 D. शरीराद्येकविंशति'

17 B. C. D. 'सोऽयं'

18 B. C. D. 'एकविंशतिप्रभेददुःखहानिः'

19 B. adds 'उक्तानि प्रमेयानि'

इदानीं संशयमेवाह—एकस्मिन् धर्मिणि विरुद्धनानार्थावमर्शः[1] संशयः[2]। स च[3] त्रिविधः[4]। एको विशेषादर्शने[5] समानधर्मदर्शनजः। यथा स्थाणुर्वा पुरुषो वेति। एकस्मिन्नेव[6] हि पुरोवर्तिनि[7] द्रव्ये स्थाणुत्वनिश्चायकं वक्रकोटरादिकं[8] पुरुषत्वनिश्चायकं[9] च[10] शिरःपाण्यादिकं[11] विशेषमपश्यतः स्थाणुपुरुषयोः समानधर्ममूर्ध्वतालक्षणं[12] पश्यतः पुरुषस्य भवति संशयः किमयं[13] स्थाणुर्वा[14] पुरुषो वेति। द्वितीयस्तु[15] संशयो विशेषादर्शने सति विप्रतिपत्तिजः। स[16] यथा—शब्दो[17] नित्य उतानित्य इति। तथा ह्येको ब्रूते शब्दोऽनित्योऽपरो[18] नित्य इति। तयोर्विप्रतिपत्त्या मध्यस्थस्य[19] पुंसो विशेषमपश्यतो भवति संशयः किमयं शब्दो[20] नित्य उतानित्य इति। असाधारणधर्मजस्तु[21] संशयो यथा—नित्यादनित्याच्च[22] व्यावृत्तेन भूमात्रा-साधारणेन[23] गन्धवत्त्वेन विशेषमपश्यतो भुवि[24] नित्यत्वानित्यत्वसंशयः। तथाहि[25] सकलनित्यव्यावृत्तेन[26] गन्धवत्त्वेन योगाद्[27] भूः किमनित्या[28] उत सकलानित्यव्यावृत्तेनापि[29] तेनैव योगान्नित्येति[30] संशयः।

---

1 B. C. D. omit 'एव'
2 D. 'अवमर्शनम्'
3 C. omits 'च'
4 B. 'त्रेधा'
5 B. C. add 'सति'
6 B. omits 'एव हि'; D. omits हि
7 B. 'पुरोवर्तिद्रव्ये'
8 A 'वक्रकोटिरादिकं'
9 B. पुरुषनिश्चायकं'
10 B. C. D. omit 'च'
11 B. adds 'च'
12 C. D. add 'च'
13 C. omits 'किमयं' इत्यारभ्य 'स यथा' इति पर्यन्तम्।
14 D. 'उत'
15 B. 'द्वितीयोऽस्तु' (?)
16 B. D. omit 'स यथा'
17 B. C. D. add 'किमयं'
18 B. 'शब्दो नित्य अ (त्यो ?) परोऽनित्य इति'; D. 'शब्दो नित्योऽपरोऽनित्य इति'
19 D. 'मध्यस्थितस्य'
20 C. omits 'शब्दः'
21 B. adds at margin 'तृतीयस्तु'
22 D. 'नित्यानित्याच्च'
23 D.'भूमात्रासाधारणगन्धवत्त्वेन' but at margin 'असाधारणेन'
24 B. 'भूमिनित्यत्वानित्यत्वे'
25 C. D. omit 'तथा हि'
26 B. adds at margin 'नित्यद्रव्य'
27 D. 'योगात् किमियं भूः'
28 B. 'किमियं'
29 B. corrects 'सकलानित्याव्यावृत्तेनापि'
30 D. 'नित्यत्वे'

येन[१] प्रयुक्तः पुरुषः[२] प्रवर्तते तत् प्रयोजनम् । तच्च[३] सुखदुःखाप्ति-[४]हानी । तदर्था हि प्रवृत्तिः सर्वस्य[५] ।

वादिप्रतिवादिनोः संप्रतिपत्तिविषयो[६]ऽर्थो[७] दृष्टान्तः । स च[८] द्विविधः । एकः साधर्म्यदृष्टान्तः[९] । धूम[१०]वत्त्व[११]हेतोर्महानसे[१२] इति[१३] । वैधर्म्य[१४]दृष्टान्तो यथा तस्यैव हेतोर्महाह्रदे [१५]इति ।

प्रामाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः । स चतुर्धा सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगम[१६]भेदात् । तत्र सर्वतन्त्रसिद्धान्तो यथा—धर्मिमात्रसद्भावः । द्वितीयो यथा-नैयायिकस्य मते[१७] मन इन्द्रियम् । तद्धि[१८] समानतन्त्रे[१९] वैशेषिके सिद्धम् । तृतीयो यथा—क्षित्यादिकर्तृसिद्धौ[२०] कर्तुः सर्वज्ञत्वम् । चतुर्थो यथा-जैमिनीयस्य शब्द[२१]नित्यानित्य[२२]विचारो[२३] भवतु[२४] तावच्छब्दो गुण इति ।

अनुमानवाक्यैकदेशा अवयवाः । ते च प्रतिज्ञादयः । तथा च न्यायसूत्रम्—'प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः[२५]' ।

तत्र[२६] साध्य[२७]धर्मविशिष्टधर्मिप्रतिपादकं वचनं[२८] प्रतिज्ञा । यथा पर्वतो[२९]ऽ[३०]ग्निमान्[३१] ।

पञ्चमान्तं तृतीयान्तं[३२] वा लिङ्गप्रतिपादकं वचनं हेतुः । यथा धूमवत्त्वादिति ।

---

1 B. adds 'संशय उक्तः । इदानीं प्रयोजनमाह'
2 D. omits 'पुरुषः'
3 C. 'तत्तु'
4 B. 'सुखदुःखावाप्तिहानी'; C. 'सुखदुःखाव (वा?) प्तिहानी'
5 C. 'स्वस्थस्य सर्वस्य'; D. 'स्वस्य'
6 B. 'विषयार्थो'
7 A., 'अर्था'; C. omits 'अर्थः' & adds at margin 'संमतिः साम्यमविरोध इति यावत्'
8 B. D. omit 'च'
9 A. adds at margin 'अपरो वैधर्म्यदृष्टान्तः । साधर्म्यदृष्टान्तो'
10 B. D. add 'यथा'
11 B. C. 'धूमवत्त्वस्य'
12 D. 'महानसं'
13 B. D. omit 'इति'
14 C. adds 'द्वितीयस्तु'
15 B. omits 'इति'
16 B. adds 'सिद्धान्त'
17 C. D. omit 'मते'
18 B. 'तच्च'
19 C. 'समानवैशेषिके'
20 D. 'क्षित्यादिकर्तुः सार्वज्ञम'
21 B. C. D. omit 'शब्द'
22 D. 'नित्यानित्यत्व'
23 C. 'विचारे'
24 D. 'यथा भवतु'
25 D. adds 'इति'
26 B. 'तत्र तत्र'
27 C. 'साधर्म्यविशिष्टधर्मिप्रतिपादनम'
28 C. omits 'वचनं'
29 C. 'पर्वतोऽयमग्निवा (मा?) न्'
30 D. adds 'अयम'
31 D. adds 'इति'
32 C. D. omit 'तृतीयान्तं वा'

सव्याप्तिकं दृष्टान्तवचनमुदाहरणम्। यथा यो यो धूमवान् स सोऽग्निमान् यथा महानसं[1] इति[2]।

पक्षे[3] लिङ्गोपसंहार उपनयः। यथा धूमवांश्चायमिति[4] तथा चायं[5]मिति वा।

पक्षे साध्योपसंहारो[6] निगमनम्। यथा तस्मादग्निमानेवेति[7] तस्मात् तथेति वा।

एते च[8] प्रतिज्ञादयः पञ्चानुमानवाक्यस्यावयवा इवावयवा न तु समवायिकारणं शब्दस्याकाशसमवेतत्वात्।

तर्कः[9] प्रसङ्गः। स च सिद्धव्याप्तिकयोर्धर्मयोर्व्याप्याङ्गीकारे व्यापकप्रसञ्जनम्। यथा[10]—यद्यत्र घटोऽभविष्यद्[11] भूतलमिवाद्रक्ष्यते[12] (दि?)ति[13]। स चायं[14] तर्कः प्रमाणानां[15] [म?] नुग्राहकः। यथा[16] ह्ययं पर्वतः साग्निरुतानग्निरिति[17] संदेहानन्तरं यदि कश्चिन्मन्यतेऽनग्निरयमिति[18] तदा तं प्रति यद्ययमनग्निरभविष्यदनग्निकत्वादधूमोऽप्ययं[19][20] अभविष्यदित्यधूमवत्त्वप्रसञ्जनं[21] क्रियते। स[22] एष प्रसङ्गस्तर्क उच्यते। अयं[23] चानुमानस्य विषयसाधकः[24]। अनग्निमत्त्वस्य प्रतिक्षेपात्[25]। अतोऽनुमानस्य[26] भवत्यनुग्राहक इति[27]।

---

1 D. 'महानसमिति'
2 B. omits 'इति'
3 C. omits 'पक्षे लिङ्गोपसंहारो' इत्यारभ्य 'इति वा' इति पर्यन्तम्।
4 D. omits 'इति'
5 D. omits 'चायम्'
6 C. 'साध्योपहारो'
7 B. C. D. 'अग्निमानिति'
8 B. D. omit 'च'
9 A has at margin 'परानिष्टप्रतिपादकरूपः'; B. 'अनिष्टप्रसङ्गस्तर्कः'; D. 'तर्कोऽनिष्टप्रसङ्गः'
10 B. 'तथा'
11 D. adds 'तदा'; B. adds 'तर्हि'
12 B. D. 'अद्रक्षत्'
13 B. omits 'इति'
14 D. omits 'च'
15 B. 'प्रमाणानुग्राहकः'; C. D. 'प्रमाणानामनुग्राहकः'
16 B. C. 'तथा ह्ययं'; D. 'तथाहि'
17 B. 'उत निरग्निः'
18 B. omits 'इति'
19 B. 'अनग्निमत्त्वात्'
20 B. C. D. omit 'अपि'
21 B. 'अधूमत्त्व'; C. 'अधूमवत्प्रसञ्जनम्'
22 B. 'स एव तर्कप्रसङ्ग उच्यते'; C. 'स एवैकप्रसङ्गः'; D. 'स एवैष'
23 C. 'अयं च वर्तमानविषयोऽग्निमत्त्वस्य'; D. 'अयं वर्तमानविषयः'
24 B. शोधकः'
25 C. 'प्रक्षेपात्'
26 B. 'अतो भवत्यनुमानस्यानुग्राहकः'
27 C. omits 'इति'

अत्र कश्चिदाह—तर्कः संशयेऽन्तर्भवतीति[1] । न[2] । एककोटिविषयत्वात् तर्कस्य[3] ।

निर्णयोऽवधारणं[4]ज्ञानम् । तच्च प्रमाणानां[5] फलम् ।

तत्त्वबुभुत्स्वोः कथा वादः । स चाष्टनिग्रहाणामधिकरणम् । ते च[6] न्यूनाधिकापसिद्धान्त[7]हेत्वाभासपञ्चकमित्यष्टौ[8] निग्रहाः ।

उभयसाधनवती विजिगीषु[9]कथा जल्पः । स[10] च यथा[11]संभवं परपक्षे दूषिते स्वपक्षस्थापनपर्यवसानश्च ।

स्व[12]पक्षस्थापन[13]हीनो वितण्डा । परपक्षदूषणमात्रा[14]वसाना । नास्य[15] वैतण्डिकस्य स्थाप्यः पक्षोऽस्ति । कथा तु[16] नानावक्तृक[17]पूर्वोत्तरपक्ष[18]प्रतिपादक[19]वाक्यसंदर्भः ।

उक्तानां पक्षधर्मत्वा[20]दिरूपाणां मध्ये एकेनापि रूपेण हीना असद्धेतवः[21] । तेऽपि कतिपयहेतु[22]प्रयोगाद् हेतुवदाभासमाना[23] हेत्वाभासाः । ते चासिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्यया[24]पदिष्टभेदात् पञ्चैव । अत्रो[25]दयनेन व्याप्तस्य हेतोः[26] पक्षधर्मता[27]प्रतीतिः सिद्धिस्तदभावोऽ-

1 C. D. omit 'इति'
2 B. 'चेन्न'
3 C. D. omit 'तर्कस्य'
4 B. 'अवधारणं ज्ञानम्'
5 B. 'प्रमाणफलम्'
6 D. 'तु'
7 B. 'सिद्धान्त'
8 B. C. 'पञ्चकं चेत्यष्टौ'; D. 'पञ्चकानि'
9 C. 'विजिगीषुः (षोः?) कथा'
10 B. 'स यथासंभवं सर्वनिग्रहाधिकरणम् । परपक्षे दूषिते स्वप्रयोगसाधनावसानश्च'; C. 'स च यथासंभवं सर्वनिग्रहाधिकरणम् । परपक्षे दूषिते स्वपक्षस्थापनावसानश्च जल्पः' D. omits this portion.
11 A. 'यथा सर्व'
12 C. 'स्वपक्षस्थापनाहीना परपक्षदूषणावसाना वितण्डा'
13 B. 'स्थापनहीना'; D. 'स्थापनाहीना'
14 C. omits 'मात्र'
15 C. 'अस्य न हि स्वपक्षः स्थाप्योऽस्ति'
16 C. omits 'तु'
17 B. 'नानावक्तृक (क?)'
18 A has at margin 'उत्तरपक्षः सिद्धान्तः'
19 A has at margin 'प्रतिपादन'; B. 'प्रतिपादको'
20 C. 'पक्षधर्मत्वादीनां'
21 B. D. 'अहेतवः'; C. 'हेतवः'
22 B. C. 'कतिपयहेतुरूपयोगात्'
23 B. 'अवभासमाना'
24 B. 'समकालापत्ययापादिष्टभेदात्'
25 B. 'तत्र'
26 B. C. D. omit 'हेतोः'
27 B. C. D. 'पक्षधर्मतया'

सिद्धिरित्यसिद्धे[1] (द्धि?) लक्षणमुक्तम् । तच्च यद्यपि विरुद्धादिष्वपि संभवतीति सांकर्यं प्रतीयते । तथापि यथा[2] न सांकर्यं तथा[3] तदु[4]च्यते । यो हि यत्र साधनेषु[5] पुरतः[6] परिस्फुरति समर्थश्च दुष्टज्ञप्तौ[7] स एव दुष्टज्ञप्तिकारको[8] दूषणमिति यावत् । नान्य[9] इति[10] । तेनैव[11] पुरःस्फूर्तिकेन दुष्टज्ञप्तौ[12] ज्ञापितायां कथापर्यवसाने जाते तदुपजीविनोऽन्यस्यानुपयोगात् । तथा च सति[13] यत्र[14] [15]विरोधिविपर्ययव्याप्त्याख्यो दुष्टज्ञप्तिकारकः[16] स विरुद्धो हेत्वाभासः । एवं यत्र [स ?] व्यभिचारादय[17]स्तथाभूतास्तेऽन्ये[18]ऽनैकान्तिकादयः[19] । ये[20] पुनर्व्याप्तिपक्षधर्मता[21]विशिष्टहेतुस्वरूपज्ञप्त्यभावेन पूर्वोक्ता असिद्धादयो[22] दुष्टज्ञप्ति[23]कारका दूषणा[24]नीति[25] यावत् । तथाभूतः[26] सोऽसिद्धस्त्रिविधः[27] आश्रय[28]स्वरूपव्याप्यत्वासिद्धभेदात्[29] । तत्र यस्य हेतोराश्रयो नावगम्यते स आश्रयासिद्धः । यथा गगनारविन्दं सुरभि । अरविन्दत्वात् । सरोजारविन्दवत् । अत्र हि[30] गगनारविन्दमाश्रयः । स च[31] नास्त्येव । अयमप्याश्रयासिद्धः । तथा[32] हि—घटोऽनित्यः । कार्यत्वात् पटवत्[33] । नन्वाश्रय[34]सत्वात्[35] कार्यत्वादिति

---

1 D. ' आसिद्धि '
2 C. omits ' यथा '
3 C. omits ' तथा '
4 D. omits ' तत् '
5 B. C. D. ' साधने '
6 C. omits ' पुरतः '; B. ' पुर ( रः ) ' स्फुरति '
7 B. ' दुष्टत्वज्ञप्तौ '; C. ' दुर्विज्ञप्तौ '
8 B. दुष्टज्ञप्तिकारणम् '; C. ' दुर्विज्ञप्तिकारणम् '
9 C. ' नान्यत् '
10 B. C. D. omit ' इति '
11 B. omits ' एव '
12 A. ' दुष्टोक्तौ '; B. ' दुष्टौ '; C. ' दुर्विज्ञप्तौ '; D. ' दुर्ज्ञप्तौ '
13 B. omits ' सति '
14 D. omits ' यत्र '
15 B.; ' विरुद्धो '; C. ' विरोध '; D. ' वस्तुविरोधात् '
16 C. ' दुर्विज्ञप्ति '
17 D. ' सव्यभिचारादयः '
18 C. D. omit ' अन्ये '
19 B. 'ते चानैकान्तिकादयः'; C. 'अनेकान्तादयः'
20 C. D. ' ते '
21 B. ' धर्मत्व '
22 B. ' तेऽसिद्धा '
23 C. ' दुर्विज्ञप्ति '
24 C. D. omit ' दूषणानि '
25 B. omits ' इति यावत् '
26 C. ' तथाभूतोसावसिद्धस्त्रिधा '
27 D. omits ' त्रिविधः '
28 B. ' आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धभेदात् '
29 D. adds ' त्रिधा '
30 B. D. omit ' हि '
31 B. ' तु '; D. omits ' च '
32 B. omits ' तथा हि '
33 D. omits 'पटवत्' & adds 'इति'
34 D. ' नन्वाश्रयस्य घटादेः सत्वात् '

हेतुर्नाश्रयासिद्धः। सिद्धसाधनं[1] तु स्यात्। सिद्धस्यापि[2] घटानित्यत्वस्य साधनात्। नैवम्[3]। न हि स्वरूपेण कश्चिदाश्रयो भवत्यनुमानस्य किं तु संदिग्धत्वेन[5]। नानुपलब्धेऽर्थे[6][7] न निर्णीतेऽर्थे तर्हि संदिग्धे न्यायः प्रवर्तते। नात्र[8] घटे नित्यत्वसंदेहोऽस्ति[9]। अनित्यत्वस्य[10] निश्चितत्वात्। तेन यद्यपि स्वरूपेण घटो विद्यते तथाप्यनित्यस्य[11] संदेहाभावान्नाश्रय[12] इत्याश्रया-[13]सिद्धत्वादहेतुः। स्वरूपासिद्धस्तु स उच्यते यो हेतुराश्रये नावगम्यते। यथा सामान्यमनित्यं कृतकत्वादिति[14]। कृतकत्वं हेतुराश्रये सामान्ये नास्ति[15]। भागासिद्धोऽपि[16] स्वरूपासिद्ध एव[17]। यथा पृथिव्यादयश्चत्वारः परमाणवोऽनित्या गन्धवत्त्वादिति[18]। गन्धवत्त्वं[19] हेतुः[20] पक्षीकृतेषु सर्वेषु

---

1 B. C. 'सिद्धसाधनस्तु'
2 D. 'सिद्धघटानित्यत्वस्य'
3 B 'एव'; C. omits 'अपि'
4 B. D. 'मैवम्'
5 B. C. 'संदिग्धः; D. 'संदिग्धधर्मत्वेन'; B. adds at margin 'धर्मत्वेन'
6 B. adds 'तथा चोक्तं भाष्यकृता'
7 B. 'नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तते। अपि तु संदिग्धेऽर्थे न्यायः'; C. नानुपलब्धे न निर्णीतेऽपि तु संदिग्धे न्यायः'; D. 'नानुपलब्धे न निर्णीतेऽर्थेऽपि तु संदिग्धे'
8 B. C. 'न च'; D. 'नाप्यत्र'
9 D. 'नित्यत्वस्य'
10 D. 'अनित्यत्वनिश्चयात्'
11 B. C. D. 'अनित्यत्वसंदेहात्'
12 B. D. 'नासावाश्रयः'; C. 'न चाश्रयः'
13 D. 'तस्मात्'
14 B. omits 'इति' and adds 'घटवत्'
15 B. adds 'इति'
16 The Benares edition adds this portion here—भागासिद्धो यथा शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति। अत्र शब्दस्यानित्यत्वं साध्यम्। प्रयत्नानन्तरीयकत्वादिति हेतुः। स च न सर्वेषां शब्दानाम्। आद्यशब्दस्य प्रयत्नानन्तरीयकत्वं पुरुषव्यापारेऽस्ति। शब्दजनितशब्दे नास्तीति भागासिद्धो हेतुः। अथ किमिदं प्रयत्नानन्तरीयकत्वम्। उच्यते। आदावात्ममनःसंयोगस्ततो ज्ञानं ततो विवक्षा ततः प्रयत्नस्ततः कोष्ठगतस्य वायोः पूर्वदेशविभागस्ततो धटादिदेशसंयोगस्तत आद्यनिष्पत्तिरिति। अस्यैव प्रयत्नानन्तरीयकत्वमस्ति अन्येषामाद्यशब्दजनितशब्दानां नास्तीति भागासिद्धो हेतुः। आद्ये शब्दे आत्ममनःसंयोगजनितज्ञानादिक्रमेण प्रयत्नानन्तरीयकत्वं पुरुषव्यापारे वर्तते न तु द्वितीयादिशब्देष्विति हेतोः पक्षैकदेशवर्तित्वात्। A. B. C. D. omit this.
17 B. omits 'एव'
18 B. 'गन्धत्वात्'
19 B. 'गन्धत्वं'
20 B. D. omit 'हेतुः'

नास्ति पृथिवीमात्रवृत्तित्वात् । अत एवं[1] भागे स्वरूपासिद्धत्वम् । तथा विशेषणासिद्धविशेष्यासिद्धा[2]समर्थविशेषणासिद्धा[3]समर्थविशेष्यासिद्धादयः स्वरूपासिद्धभेदाः । तत्र विशेषणासिद्धो यथा—शब्दो नित्यो द्रव[4]-(व्य ?) त्वे सत्यस्पर्शवत्त्वात्[5] । तत्र[6] हि द्रव्यत्वविशिष्टमस्पर्शवत्त्वं हेतुर्नास्पर्शवत्त्वमात्रम् । शब्दे च[7] द्रव्यत्वं नास्ति गुणत्वादतो विशेषणासिद्धः । न चासति विशेषणे द्रव (व्य ?) त्वे[8] तद्विशिष्टमस्पर्शवत्त्वमस्ति[9] विशेषणाभावे विशिष्ट[10]स्याप्य[11]भावात् । यथा दण्डमात्राभावे[12] न[13] च दण्ड[14]विशिष्टपुरुषस्याभावस्तेन सत्यप्यस्पर्शवत्त्वे विशिष्ट[15]हेतुरपि नास्त्येव विशिष्टहेतोरभावात् । तत्स्वरूपासिद्धत्वम् । विशेष्यासिद्धो यथा—शब्दो[16] नित्योऽस्पर्शवत्त्वे सति द्रव्यत्वादिति[17] । अत्रा[18]पि विशिष्टो हेतुः । न च विशेष्याभावे विशिष्टस्य[19] स्वरूपमस्ति विशिष्टहेतुरपि नास्ति[20] । असमर्थ[21]-विशेषणो यथा-शब्दो नित्यो गुणत्वे सत्यकारणत्वात्[22] । अत्र[23] विशेषणस्य[24] न किंचित् सामर्थ्यमस्ति । विशेष्यस्या[25]कारणत्वस्यैव नित्यत्वसाधनसामर्थ्याद्धेतो[26]रसमर्थ[27] विशेषणम् । स्वरूपासिद्धत्वं[28] तु[29] विशेषणाभावे

---

1 B. adds ‘ अस्य ’
2 D. omits ‘असिद्धा’
3 C. ‘असमर्थविशेष्यादयः’
4 B. D. ‘द्रव्यत्वे’
5 B. ‘अस्पर्शत्वात् व्योमवत्’
6 C. omits ‘ तत्र हि ’ इत्यारभ्य ‘ विशिष्टस्याप्यभावात् ’
7 B. D. omit ‘ च ’
8 B. D. ‘द्रव्यत्वे’
9 D. adds ‘इति’
10 C. ‘ अत्र हि द्रव्यत्वाविशिष्टस्याभावात् । यथा ’
11 B. omits ‘अपि’
12 D. adds ‘पुरुषभावे च’
13 B. has at margin ‘पुरुषमात्राभावे’
14 B. ‘ अदण्ड ’
15 B. C. D. ‘विशिष्टस्य हेतोरभावात् स्वरूपासिद्धत्वम्’
16 B. D. omit शब्दो नित्योऽस्पर्शवत्त्वे सति द्रव्यत्वादिति ’
17 B. omits ‘इति’
18 C. ‘ अतो न विशिष्टो हेतुः ’
19 B. ‘विशिष्टस्वरूपं’; C. ‘विशिष्टत्वं’
20 B. C. add ‘ एव अत्र इति ’
21 D. omits ‘असमर्थविशेषणो यथा’ इत्यारभ्य ‘अत्र’ ‘इतिपर्यन्तम्’
22 C. D. add ‘ इति ’
23 C. omits ‘अत्र’
24 B. C. D. omit ‘अत्र विशेषणस्य ’
25 D. ‘ विशेष्यत्वस्य ’
26 B. D. ‘ अतो ’
27 B. D. ‘ असमर्थविशेषणः ’ ; C. असमर्थविशेषणत्वम् ’
28 B. ‘स्वरूपासिद्धः’; C. D. ‘स्वरूपासिद्धस्तु ’
29 B. omits ‘ तु ’

विशिष्टस्य[1] वा[2]भावः। ननु विशेषणं[3] गुणत्त्वं[4] शब्देऽस्त्येव। तत् कथं विशेषणाभावः। सत्यमस्त्येव गुणत्वम्। किं तु[5] न तद्विशेषणम्। तदेव[6] हेतोर्विशेषणं भवति यदन्यव्यवच्छेदेन प्रयोजनवत्। गुणत्वं तु[7] निष्प्रयोजनम[8]समर्थ[9]मुक्तमेव। असमर्थविशेष्यो[10] यथा—तत्रैव[11] व्यत्ययेन[12] प्रयोगः। शब्दो नित्योऽकारणत्वे सति गुणत्वात्[13]। अत्र तु[14] विशेषणमात्रस्यैव नित्यत्वसाधने समर्थत्वाद् विशेष्यमसमर्थम्। स्वरूपासिद्धस्तु[15] विशेष्याभावे[16] विशिष्टाभावाद् विशिष्टस्य[17] हेतुत्वेनोपादानात्। शेषं पूर्ववत्। व्याप्यत्वासिद्धस्तु[18] यत्र व्याप्तिर्नावगम्यते। स द्विविधः। एकः साध्येनासहचरितोऽपरस्तु सोपाधिकतया[19] साध्यसंबन्धः। तत्र प्रथमो यथा—यत् सत् तत् क्षणिकं यथा घनः। संश्च[20] शब्दादिर्[21]विवादास्पदीभूत[22] इति[23]। अत्र हि शब्दादि[24] पक्षस्तस्य क्षणिकं साध्यं सत्त्वं हेतुः। न चास्य हेतोः क्षणिकत्वेन सह व्याप्तौ प्रमाणमस्ति। इदानीमुपाधिसहितो[25] व्याप्यत्वासिद्धः[26] प्रदर्श्यते। तद् यथा—स[27] श्यामो[28] मैत्रीतनयो मैत्रीतनयत्वात्[29]।

---

1 B. C. D. 'विशिष्टस्याभावात्'
2 B. omits 'वा'
3 B. C. D. 'विशेषणं गुणत्वं तच्च'
4 B. has corrected it to 'गुणत्वं'
5 B. omits 'किंतु'
6 B. D. add 'हि'
7 B. omits 'तु'
8 B. 'निःप्रयोजकम्'; C. 'निःप्रयोजनम्'
9 B. C. D. 'असमर्थमित्युक्तमेव'
10 B. adds at margin 'असमर्थविशेष्यासिद्धो'
11 D. 'अत्रैव'
12 C. 'तद्व्यत्ययेन'; B. omits 'तत्रैव व्यत्ययेन प्रयोगः'
13 D. adds 'इति'
14 B. D. omit 'तु'
15 C. omits 'स्वरूपासिद्धस्तु इत्यारभ्य' 'व्याप्यत्वासिद्धस्तु' इति पर्यन्तम्।
16 D. adds 'अपि'
17 B. 'विशिष्टहेतुत्वेन'
18 D. adds 'स उच्यते'
19 B. C. D. 'सोपाधिकसाध्यसंबन्धः'
20 C. 'स च विवादास्पदीभूतः शब्दादिरिति'
21 D. omits 'शब्दादिः'
22 D. विवादास्पदीभूतशब्दादिः'
23 B. D. omit 'इति'
24 D. 'शब्दादिः'
25 D. adds 'यो'
26 C. 'स दृश्यते'; D. 'स प्रदर्श्यते'
27 D. omits 'सः'
28 D. 'श्यामोऽयं'
29 'मैत्रीतनयः'; C. 'मैत्रतनयत्वात्'

परिदृश्यमान[1]मैत्रीतनयवत्[2]। अत्र[3] मैत्रीतनयत्वेन[4] श्यामत्वं साध्यते। न[5] च मैत्रीतनयत्वं[6] श्यामत्वे प्रयोजकं किं तु[7] शाकाद्याहार एव[8] [प्रयोजकः[9]]। प्रयोजकश्चोपाधिरुच्यते[10]। अतो[11] मैत्रीतनयत्वस्य[12] श्यामत्वेन[13] संबन्धे शाकाद्याहारपरिणाम[14] उपाधिः[15]। यथा अग्नेर्धूमसंबन्ध आर्द्रेन्धनसंयोगः[16]। अतोऽत्रो[17]पाधि[18]संबन्धाद्[19] व्याप्तिर्नास्ति[20]। व्याप्यत्वासिद्धोऽयं मैत्रीतनय-त्वादिहेतुः[21]। तथा[22]परोऽपि[23] व्याप्यत्वासिद्धो[24] यथा क्रत्वन्तर्वर्तिनी[25] हिंसा अधर्मसाधनं[26] हिंसात्वात् क्रतुबाह्यहिंसावत्[27]। अत्र[28] हिंसात्वं नाधर्मप्रयोजकं[29] किं तु निषिद्धत्वमुपाधिरिति[30] पूर्ववदुपाधिसद्भावाद् व्याप्यत्वासिद्धो[31] हिंसात्वं[32] हेतुः। ननु साधनाव्यापकत्वे सति साध्यव्यापको यः[33] स उपाधिरित्युपाधेर्लक्षणम्[34]। तच्च निषिद्धत्वे नास्ति। तत् कथं

---

1 B. ‘दृश्यमाण (न?)’
2 C. ‘मैत्रतनयवत्’
3 D. omits ‘अत्र मैत्रीतनयत्वेन श्यामत्वं साध्यते’
4 C. ‘मैत्रतनयत्वेन’
5 D. ‘नात्र’
6 C. ‘मैत्रतनयत्वं’; D. ‘श्यामत्वे मैत्रीतनयत्वम्’
7 D. omits ‘किं तु’
8 B. ‘शाकाद्यन्नपरिणातिभेदः’; C. D. ‘शाकाद्याहारपरिणाम एव’
9 D. adds ‘प्रयोजकः’
10 C. D. ‘इत्युच्यते’
11 D. omits ‘अतो’
12 C. ‘मैत्रीतनयत्वेन संबन्धः’
13 B. adds ‘सह’; D. ‘श्यामत्वसंबन्धे’
14 C. ‘शाकाहार’
15 D. ‘एवोपाधिः’
16 A. ‘आर्द्रमिन्धनसंयोगः’
17 B. omits ‘अतो’
18 C. omits ‘अत्र’
19 D. ‘अत उपाधिसद्भावात्’; B. ‘उपाधिवशात्’
20 B. C. D. ‘नास्तीति’
21 B. D. ‘मैत्रीतनयत्वादितिहेतुः’; C. ‘मैत्रतनयत्वादिति हेतुः’
22 B. D. omit ‘तथा’
23 B. omits ‘अपि’; D. ‘परोऽपि’;
24 D. ‘व्याप्यासिद्धो’
25 B. ‘क्रत्वन्तरवर्तिनी’; C. ‘अध्वरवर्तिनी’
26 D. ‘अधर्मः’; C. omits ‘हिंसा अधर्मसाधनम्’
27 C. ‘व्यर्थहिंसावत्’; D. ‘क्रत्वनङ्गहिंसावत्’
28 B. ‘अत्रापि’; D. ‘नात्रापि हिंसात्वमधर्मप्रयोजकम्’
29 B. ‘अधर्मेन’; C. ‘नाधर्मे’
30 B. omits ‘इति’
31 D. adds ‘अयम्’
32 C. हेतु[:] हिंसात्वम्’
33 B. omits ‘यः सः’
34 B. D. ‘उपाधिलक्षणम्’

निषिद्धत्वमुपाधिरिति[1]। नैवम्[2]। निषिद्धत्वेऽप्युपाधिलक्षणस्य[3] विद्यमानत्वात्। तथा[4] हि साध्यस्याधर्मस्य[5] व्यापकं निषिद्धत्वम्। यत्र[6] यत्राधर्मत्वं[7] तत्र तत्र निषिद्धत्वस्य विद्यमानत्वात्। न[8] च यत्र[9] यत्र हिंसात्वं तत्र तत्रावश्यं निषिद्धत्वं क्रत्वङ्गहिंसायां[10] व्यभिचारात्। अस्ति[11] हि क्रत्वङ्गहिंसायां हिंसात्वं न[12] च तत्र निषिद्धमस्ति साधनादन्यत्र निषिद्धत्वमिति। तदेवं द्विविधो[13] व्याप्यत्वासिद्धो हेतुर्दर्शितः।

संप्रति विरुद्धः[14] कथ्यते[15]। साध्यविपर्ययव्याप्तो[16] हेतुर्विरुद्धः। यथा[17] शब्दो[18] नित्यः कृतकत्वादिति[19]। अत्र हि[20] नित्यत्वं साध्यं तद्विपर्ययेण चानित्यत्वेन कृतकत्वं व्याप्तम्। यद् यद्[21] कृतकं[22] तत्तत् खल्वनित्यमेव। अतः साध्यविपर्ययव्याप्तत्वात् कृतकत्वं हेतुर्विरुद्धः।

साध्यसंशयहेतुरनैकान्तिकः सव्यभिचार इति वा। स[23] द्विविधः। साधारणानैकान्तिकोऽसाधारणानैकान्तिकश्चेति। तत्र प्रथमः पक्षसपक्षविपक्षवृत्तिः। यथा[24]—शब्दो[25] नित्यः प्रमेयत्वादिति[26]। अत्र[27] प्रमेयत्वं हेतुः

---

1 B. omits 'इति'
2 B. D. 'नैवम्'
3 B. C. 'उपाधेर्लक्षणस्य'; D. उपाधिलक्षणत्वात्'
4 C. omits 'तथा हि'
5 B. 'अधर्मत्वस्य', C. 'इदमस्याधर्मस्य'
6 D adds 'यतो'
7 D. 'अधर्मसाधनत्वं'
8 B. 'न हि'
9 B. omits one 'यत्र'
10 B. 'यागीयपशुहिंसायाम्'
11 B. 'अत्र क्रत्वङ्गहिंसायां हिंसात्वमस्ति न निषिद्धत्वमिति तदेवं त्रिविधोऽसिद्धो दर्शितः'; C. 'तत्र हिक्रत्वङ्गहिंसायां साधनत्वमन्यथा च निषिद्धत्वमिति'; D. 'अत्र हि क्रत्वङ्गहिंसायां'
12 D. omits 'न च तत्र निषिद्धत्वमस्ति साधनात्'
13 C. 'तदेवविधासिद्धो दर्शितः'; D. 'तदेव त्रिविधोऽसिद्धो दर्शितः'
14 C. 'विरुद्धस्तु'
15 C. omits 'कथ्यते'
16 C. omits 'साध्यविपर्ययव्याप्तो हेतुर्विरुद्धः यथा'
17 D. omits 'यथा'
18 B. C. D. omit 'शब्दो नित्यः'
19 B. omits 'इति'
20 B. adds at margin 'शब्दे'
21 B. 'यत् कृतकं तत्सर्वमनित्यमेव'; C. 'यदत्र यत् कृतकं तत्खल्वनित्यमेव'; D. 'यतो यत् कृतकं तदनित्यमेव'
22 A. C. 'कृतकत्वं'
23 C. D. 'स च'
24 B. omits 'यथा' & adds साधारणः
25 C. 'शब्दो नित्यो भवति प्रमेयत्वात्'
26 B. omits 'इति'
27 D. 'तत्र'

सपक्षे[1] नित्ये विपक्षे चानित्ये च[2] वर्तते[3]। तस्य[4] प्रमेयत्वादिति[5]। असाधारणानैकान्तिकस्तु[6] स एव यः सपक्षविपक्ष[7]व्यावृत्तः पक्ष एव[8] वर्त-मानो[9] यथा भूमिर्नित्या[10] गन्धवत्त्वात्[11]। अत्र[12] हि[13] गन्धवत्त्वं हेतुः सपक्षान्नित्याद्[14] व्योमादेर्विपक्षाच्चा[15]नित्याज्जलादेर्व्यावृत्तो गन्धवत्त्वस्य पृथिवीमात्रवृत्तित्वादिति[16]। व्य[17]भिचारस्तु[18] लक्ष्यते नियमा[19]संभवात्[20]। संभव-त्[21]सपक्षविपक्ष[22]वतो हेतोः सपक्षवृत्तित्वे सति विपक्षाद्व्यावृत्तिरेव नियमो गमकत्वात्[23]। तस्यैव[24] साध्य[25]विपरीतव्याप्तस्य त[26]न्नियमाभावो व्यभिचारः। स च[27] द्वेधा संभवति[28] सपक्षविपक्ष[29]योरव्यावृत्तौ ताभ्यां व्यावृत्तौ च।

यस्य प्रतिपक्ष[30]भूतं हेत्वन्तरमस्ति स प्रकरणसमः। स[31] एव[32] सत्प्रति-पक्ष[33] उच्यते। तद्[34] यथा-शब्दो नित्योऽनित्यधर्मानुपलब्धेरिति[35]। अत्र[36] हि[37]

---

1 A has in margin 'पक्षे शब्दे'
2 B. C. D. omit 'च'
3 B. D. 'विद्यते'
4 D. 'तस्यापि'
5 B. omits 'इति'
6 B. omits 'तु'
7 B. 'सपक्षाविपक्षाभ्यां'; C. सपक्षवि-पक्षात्'
8 B. C. omit 'एव'; D. ' पक्षमात्र-वृत्तिः'
8 B. 'विद्यमानो'
10 B. C. D. 'भूर्नित्या'
11 D. adds 'इति'
12 C. ' अयं च हेतुः'; D. 'स च हेतुः'
13 B. omits 'हि'
14 C. 'सपक्षाविपक्षव्यावृत्तः'; D. 'सपक्ष-विपक्षहेतोर्वृत्तेः
15 B. omits 'च'
16 B. C. omit 'इति'
17 B. adds 'तस्यैव'
18 B. omits 'तु'
19 D. omits 'नियम'
20 C. 'सामावत्'
21 B. omits संभवत्'
22 C. ' सपक्षाविपक्षहेतोः'; D. 'सपक्ष-विपक्षहेतोः'
23 C. D. 'गमकाङ्गत्वात्'
24 D. 'तस्य च'
25 B. ' साध्यविपरीताव्याप्तस्य '; C. 'विपरीतत्वव्याप्त्य (प्र ?) स्य वरं नियमाभाव [ : ] तन्नियमाभावो-व्यभिचारः'
26 D. omits 'तत्'
27 B. omits 'च'
28 D. ad s 'इति'
29 B. 'वृत्तौ ताभ्यां निवृत्तौ च व्यावृत्तौ'; C. ' ताभ्यामव्यावृत्तौ '; D. ' वृत्तौ ताभ्यां निवृत्तौ च'
30 C. 'पक्षभूतं'
31 C. omits 'स एव'
32 C. D. add 'च'
33 D. adds 'इति'
34 D. omits 'तद् यथा'
35 B. C. omit 'इति'
36 C. ' अथ च '; D. ' अत्र च '
37 B. omits 'हि'

विपरीतार्थसाधकं समान[1]बलमनुमानान्तरं प्रतिपक्ष इत्युच्यते य[2]: पुन-रतु[3]ल्यबलं न स[4] तत्प्रतिपक्षः । तथाहि विपरीतसाधकानुमानं त्रिविधं भ[5]वति उपजीव्य[6]मुपजीवकमनुभयं च[7]। तत्राद्यं बाधकं बल[8]वत्त्वात् । त[9]त्र यथा—परमाणवोऽनित्याः स्पर्शवत्त्वा[10]त् घटवत् । प[11]रमाणुसाधना[12]नुमानं नित्यत्वं साधयदपि न प्रतिपक्षः किं तु बाधकमेवोपजीव्यत्वात् । तस्य[13] धर्मिग्राहकत्वात् । न हि प्र[14]माणेनागृह्यमाणे धर्मिणि परमा[15]ण्वादावनित्य-त्वानुमानमि[16]ह न[17] सं[18]भवति । आश्रयासिद्धेः । अने[19]नानुमानेन परमाणु-ग्राहकस्य[20] प्रामाण्यमप्य[21]नुज्ञातमन्यथास्योदयासंभवात् । तस्मादुपजीव्यं बाधकमेव । उपजीवकं तु[22] दुर्बलत्वाद् बाध्यम्[23] । यथेदमेवानित्यत्वानु-मानम्[24] । तृ[25]तीयं तु[26] स[27]त्प्रतिपक्षः समबलत्वा[28]त् ।

यस्य प्रत्यक्षादिप्रमाणेन पक्षे साध्याभावः परि[29]णतः स कालात्यया-पदिष्टः । स एव बाधितविषय इत्युच्यते । यथाग्निरनुष्णः कृतकत्वाद् जलव[30]त् । अ[31]त्र कृतकत्वं हेतुः । तस्य[32] च[33] यत् साध्यमनुष्णत्वं तस्याभावः

1 B. 'समानं'
2 D. 'यत्'
3 C. 'पुनः स्वल्पबलो'
4 B. C. D. omit 'स'
5 C. omits 'भवति'
6 D. 'उपजीव्योपजीविकं'
7 B. D. add 'इति'
8 C. बलवत्'
9 B. C. 'तत्र'; D. omits 'तत्र यथा' इत्यारभ्य 'ग्राहकत्वात्' इति पर्यन्तम् ।
10 B. 'मूर्तत्वात्'
11 B. adds 'इत्यस्य हेतोः'
12 B. 'साधकानुमानं'
13 B. 'तच्च'
14 D. 'प्रमाणैः'
15 C. 'परमाणौ'
16 C. 'इदं'
17 D. omits 'न'
18 B. 'भवति'
19 D. 'अतोऽनेनैवानुमानेन'
20 D. 'परमाणुग्राहकानुमानस्य'
21 D. omits 'अपि'
22 C. omits 'तु'
23 B. adds 'इति'
24 C. adds 'स्यात्'
25 B. C. 'तृतीयस्तु'; D. 'तृतीयः'
26 D. omits 'तु'
27 C. 'न सत्प्रतिपक्षः स चाबलत्वात्'
28 D. 'तुल्यबलत्वात्'
29 B. C. D. 'परिच्छिन्नः'
30 D. adds 'इति'
31 C. omits 'अत्र कृतकत्वं हेतुः'
32 C. runs 'अत्रानुष्णत्वसाध्याभावः प्रत्यक्षेणैव परिच्छिन्नः'
33 B. D. omit 'च'

प्रत्यक्षेणैव परिच्छिन्नः । त्वगिन्द्रियेणाग्नेरुष्णत्वपरिच्छेदात्[1] । यथा[2] वा[3] क्षणिकत्वे साध्ये प्रागुक्तं[4] हेतुः तस्यापि[5] च[6] यत् साध्यं क्षणिकत्वं तस्याभावोऽक्षणिकत्वं प्रत्यभिज्ञालक्षण[7]प्रत्यक्षेण परिच्छिन्नम्[8] । स एवायं घटो यो मया पूर्वं उपलब्ध[9] इति प्रत्यभिज्ञया पूर्वानुभव[10]जनितसंस्कारसहकृतेन्द्रियप्रभवया पूर्वापरकालावलम्बया[11] पूर्वघटस्य[12] स्थायित्वपरिच्छेदादिति ।

ते[13] एतेऽसिद्धादयः पञ्च[14] हेत्वाभासा यथायथं[15] पक्षधर्मत्वादि[16]-रूपहीनत्वादहेतवः स्वसाध्यं न साधयन्तीति ।

येऽपि[17] लक्षण[18]केवल[19]व्यतिरेकिहेतोरव्याप्त्य[20]तिव्याप्त्य[21]संभवास्ते[22]ऽत्रैवान्तर्भवन्ति । न तु[23] पञ्चभ्योऽधिकाः । तथाहि—अतिव्याप्तिर्व्याप्यत्वा[24]सिद्धिः । विपक्षमात्रा[25]द् व्यावृत्त्यभावात् सोपाधिकत्वाच्च । यथा गोर्लक्षणस्य[26]

---

1 B. adds 'यथापरोऽपि कालात्ययापदिष्टः'; D. adds 'तथा परोऽपि कालात्ययापदिष्टः ।
2 C. 'तथा'
3 B. D. omit 'वा'
4 B. C. 'प्रागुक्तं सत्त्वं हेतुः'; D. 'प्रागुक्तः सत्त्वं हेतुः'
5 C. omits 'तस्यापि' इत्यारभ्य 'परिच्छिन्नं' इति पर्यन्तम् ।
6 B. D. omit 'च'
7 D. 'प्रत्यभिज्ञात्मकेन'
8 D. 'परिच्छिन्नः'
9 C. D. 'पूर्वमुपलब्धः'
10 C. 'पूर्वावस्थाजनितसंस्कारसहकृतेन्द्रियजनितप्रभावात्'; D. 'पूर्वावस्थाजनितसंस्कारसहकृतेन्द्रियप्रभवया'
11 B. 'पूर्वापरकालाकलनया'; D. 'पूर्वापरकालकलनया'; C. omits 'पूर्वापरकालावलम्बया पूर्वघटस्य स्थायित्वपरिच्छेदादिति' but it runs 'अवयवावयविनोः परिच्छेदादिति'
12 B. omits 'पूर्व'
13 B. D. omit 'ते'
14 D. 'पञ्चैव'
15 C. D. omit 'यथायथं' & C. adds 'पूर्वापरकालकलनया घटस्य स्थायित्वपरिच्छेदादिति ज्ञानादिति ज्ञानादित्यर्थः'
16 D. adds 'ये'
17 D. 'ये हि'
18 B. D. 'लक्षणस्य'; C. runs 'लक्षणस्य व्यतिरेकिहेतोस्त्रयोऽतिव्याप्त्यादयस्तेऽप्यत्रैवान्तर्भवन्ति'
19 D. omits 'केवल'
20 B. adds 'त्रयो'
21 B. 'अतिव्याप्त्यव्याप्त्यसंभवा दोषा अपि'
22 B. omits 'ते'; D. has 'तेऽपि'
23 B. 'न त्वेभ्यो भिन्नाः'
24 D. 'व्याप्यत्वासिद्धो'; C. 'विपक्षतयावृत्तिः सोपाधिकत्वादभावाच्चाव्याप्तिः'
25 B. 'विपक्षात्'
26 B. C. D. 'गोलक्षणस्य'

पशुत्वस्य। गोत्वे हि[1] सास्नादिमत्त्वं प्रयोजकं न[2] पशुत्वम्। तथा अ[3]व्याप्तिर्भागासिद्धत्वम्। यथा गोलक्षणस्य शाबलेयत्वस्य। [4]असंभवोऽपि स्वरूपासिद्धः। यथा गो[5]र्लक्षणस्यैकशफत्वस्येति।

अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरमाशङ्क्य[6] दूषणाभिधानं[7] छलम्। यथा नवकम्बलो[8]ऽयं देवदत्त इति वाक्ये[9] नूतनाभिप्रायेण प्रयु[10]-क्ते[11]ऽर्थान्तरमाशङ्क्य कश्चिद् दूषयति—नास्य नव कम्बलाः सन्ति[12] दरिद्र-त्वात्। न ह्यस्य[13] द्वित्वमपि संभा[14]व्यते कुतो[15] नवेति[16]। स च[17] वादी छल-वादितया ज्ञा[18]यते।

असदुत्तरं जातिः। सा[19] चोत्कर्षसमा[20]दिभेदेन बहुविधा[21] विस्त[22]रभयान्नेह कृत्स्ने[23]नोच्यते। तत्र व्याप्तेन दृष्टान्तगत[24]धर्मेण [25]पक्षे व्यापकध[26]र्मस्यो[27]पादान-मुत्कर्षसमा जातिः। यथा शब्दोऽनित्यः कृतकत्वाद् घटवदित्युक्ते[28] कश्चिदेवमाह—यदि कृतकत्वेन[29] घटवच्छब्दोऽनित्यः[30] तेनैव[31] हेतुना तद्व[32]देव शब्दः[33] सावयवः[34] स्यात्। अपकर्षसमा[35] तु दृष्टान्तगतेन[36] धर्मेणाव्याप्तेना-

1 C. D. omit 'हि'
2 C. 'न तु'
3 C. D. 'अव्याप्तिः'
4 B. C. D. 'एवमसंभवोऽपि'
5 B. C. D. 'गोलक्षणस्य'
6 B. D. 'प्रकल्प्य'; C. 'विकल्प्य'; A. has at margin 'प्रकल्प्य'
7 C. adds 'तु'
8 B. 'माणवक'
9 B. 'वाक्यस्य'
10 B. C. D. 'प्रयुक्तस्य'
11 D. adds 'नवशब्दार्थस्य'
12 C. omits 'सन्ति'
13 C. omits 'ह्यस्य'
14 B. 'संभवति'
15 B. 'कुतोऽस्य'
16 D. adds 'एवं'
17 D. omits 'च'
18 D. 'पराजीयते'
19 C. 'स च' (?)
20 A. 'समाधि (दि ?) भेदेन'
21 B. 'बहुधापि'; C. 'बहुधा'
22 C. 'विस्तरभिया नेह कृत्स्नमुच्यते'
23 B. 'कृत्स्नोच्यते'; D. 'कार्त्स्न्येनोच्यते'
24 D. 'दृष्टान्तगतेन'
25 C. 'साध्ये पक्षे'; D. 'साध्ये'
26 B. omits 'धर्म'
27 D. 'धर्मस्यापादान'
28 B. D. 'प्रयुक्ते'
29 B. D. add 'हेतुना'
30 B. C. D. add 'स्यात्'
31 B. 'अनेनैव'
32 D. omits 'तद्वदेव शब्दः'
33 C. 'शब्दोऽपि'
34 D. 'सावयवोऽपि'
35 B. D. omit 'अपकर्षसमा तु'
36 C. 'दृष्टान्तगतधर्मेण'

व्यापकस्य[1] धर्माभावस्योपादानम्[2][3]। अपकर्षसमा जातिः यथा[4]। पूर्वस्मिन्[5] प्रयोगे[6] कश्चिदेवमाह--यदि कृतकत्वेन हेतुना घटवच्छब्दोऽनित्यः स्यात्[7][8] तेनैव हेतुना घटवदेव शब्दोऽपि[9][10] श्रावणो न स्यात्। न हि घटः[11] श्रावण इति।

पराजयहेतुर्निग्रहस्थानम्। तच्च[12] न्यूनाधिकापसिद्धान्तार्थान्तराप्रतिभा-मतानुज्ञाविरोधादिभेदाद् बहुविधमपि[13] विस्तरभयान्नेह[14] कृत्स्नमुच्यते[15]। यत्र[16] विवक्षितार्थे[17] किंचिन्न्यूनं[18] तन्न्यूनम्। [19]विवक्षितार्थात् किंचिदधिकं तदधिकम्। सिद्धान्तादपध्वंसोऽपसिद्धान्तः[20]। प्रकृतेनाभिसंबन्धार्थं[21] वचनमर्थान्तरम्। उत्तरापरिस्फूर्तिरप्रतिभा। पराभिमतस्यार्थस्य[22] स्वप्रति-कूलस्य स्वयमेवाभ्यनुज्ञानं[23] स्वीकारो मतानुज्ञा[24]। इष्टार्थभङ्गो[25] विरोधः।

---

1 C. 'अव्याप्तस्य'; D. 'अव्यापकधर्मा-भावस्य'
2 C. 'धतरभावस्य (?)'
3 B. has corrected 'अपदानम्'; D. has 'अपादानम्'
4 C. ' यथा शब्दोऽनित्यः कृतकत्वात् घटवदित्युक्ते कश्चिदेवमाह-यदि कृत-कत्वेन हेतुना घटवच्छब्दो [ऽ] नित्यः स्यात्'
5 B. D. 'पूर्वस्मिन्नेव'
6 D. 'अनुमाने'
7 B. omits 'घटवत्'
8 D. 'न स्यात्'
9 B. D. 'घटवच्छब्दः'
10 B. D omit ' अपि '
11 B. 'घटोऽपि'
12 B. injured
13 C. omits 'अपि'
14 C. 'विस्तरभिया तु नोक्तम्'
15 B. 'कृत्स्ना'; D. 'कार्त्स्न्येन'
16 C. 'यत्र विवक्षितार्थादन्यतमेन हीनं न्यूनं विवक्षितार्थात् किंचिदप्याधिक-मधिकम्'
17 B. injured; D has 'विवक्षितार्थात्'
18 B. injured
19 D. adds 'अत्र'
20 B. injured; C. D. 'अपध्वस्तो'
21 C. D. ' अभिसबन्धार्थवचन '
22 D. 'पराभिमतार्थस्य'
23 B. injured; D. has ' अभ्यनुज्ञा-स्वीकारो '
24 C. 'मतनुज्ञा' (?)
25 C. 'इष्टार्थ भङ्गो'; D. इष्टार्थस्य भङ्गो'

इहात्यन्तमुपयुक्तानां[1] स्वरूपभेदेन[3] भूयोभूयः प्रतिपादकानामनति-प्रयोजनानामल्पलक्षणं[5] न दोषाय । एतावतैव बालव्युत्पत्तिसिद्धेः[6,7] ॥

[8]इति श्रीकेशवमिश्रेण विरचिता तर्कपरिभाषा[9] समाप्ता ॥

---

1 C. 'इहात्यन्तमुपयुक्तानामप्रतिपाद-नमनभियोजनान्तानां विलक्षणानां न दोषाय । एतावतैव वाक्यव्युत्पत्ति-सिद्धिः ।

2 B. 'अनुपयुक्तानां'

3 B. 'स्वरूपभेदप्रतिपादकानां'

4 D. 'प्रतिपादनमप्रयोजनं वा'

5 B. injured

6 A. D. at has margin 'वाक्यव्यु-त्पत्तिसिद्धेः'; B. 'बालव्युत्पादनसिद्धेः'

7 D. 'सिद्धिः'

8 B. 'इति केशवमिश्राचार्यविरचिता तर्कभाषा समाप्ता'; C. श्रीकेशव-मिश्रविरचिता तर्कभाषा समाप्ता'

9 C. 'तर्कभाषा संपूर्णा'

॥ श्रीः ॥

# श्री चिन्नं [चेन्नु] भट्टविरचिता

# तर्कभाषाप्रकाशिका टीका ।

---

यस्य[1] निःश्वसितं वेदा यो[2] वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं[3] महेश्वरम् ॥ १ ॥

सकृन्नत्वापि यं लोको लभते शान्तिसंपदम् ।
स नः पायादपायेभ्यो योगानन्दनकेसरी ॥ २ ॥

भवसंचितपापौघविध्वंसनविचक्षणम् ।
विघ्नान्धकारभास्वन्तं विघ्नराजमहं भजे ॥ ३ ॥

चिकीर्षितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय शिष्टाचारपरिप्राप्तविशिष्टेष्ट-देवताप्रणामं मनसा विधाय तत्र प्रेक्षावतां प्रवृत्तिसिद्ध्ये[4] विषयप्रयोजने [5]निर्दिशंश्चिकीर्षितं प्रतिजानीते—

**बालोऽपि यो न्यायनये प्रवेशमल्पेन वाञ्छत्यलसः श्रुतेन ।**
**संक्षिप्तयुक्त्यन्वितर्कभाषा विरच्यते[6] तस्य कृते मयैषा ॥१॥**

[7]बालोऽपि य इति । एषा मया प्रकाश्यत इति क्रियाकारकप्रयोजनम्[8] । एषेति केत्याकाङ्क्षायामाह—तर्कभाषेति । तर्कशास्त्रे प्रमाणादयः पदार्था

---

1 B omits this stanza but has it in the margin.
2 A omits यो
3 B तीर्थमहेश्वर in margin.
4 A प्रवृत्तसिद्ध्ये
5 A निर्दिशन्
6 B प्रकाश्यते
7 B adds before it अस्यार्थः
8 A प्रयोजना; B योजना

ईदृग्लक्षणा इयन्त एवेति तेषां स्वरूपकथनम्[1] । यद्वा तर्कशब्देन प्रमाणादयः पदार्था उपलक्ष्यन्ते । ते भाष्यन्ते यत्र यथेति वा सा तर्कभाषेत्यर्थः । कस्मै प्रकाश्यत इत्यत आह—**तस्य कृत इति** । कृते इत्यव्ययं तादर्थ्ये । 'काव्यं यशसेऽर्थ' कृते— इत्यत्र सांधिविग्रहके[2] कृतं इत्येतत्तथा व्याख्यातम् । यद्वा क्रियत इति कृच्छब्दः क्विबन्तः कर्मणि निष्पन्नः प्रयोजनवचनः । तथा च तस्य कृत इति तदर्थमित्यर्थः । यत्तदोर्नित्यसंबन्धात् तच्छब्दो यच्छब्दमपेक्षत इत्यत[3] आह--**य इति** । विशेष्यं निर्दिशति-**बाल इति** । प्रमाणादिपदार्थज्ञानशून्यस्तज्जिज्ञासुर्ग्रहणधारणा[4]दिपटुर्बालशब्देन विवक्षितो नार्भकः । बालवत् प्रेमपूर्वकं बोधनार्थं बालपदप्रयोगः । नन्वनाकाङ्क्षितस्तत्प्रकाशनमनुचितमित्यत आह-**वाञ्छतीति**। वाञ्छतेः सकर्मकत्वात् कर्माकाङ्क्षायामाह--**प्रवेशमिति**[5] । कुत्रेत्यपेक्षायां कथयति--**न्यायनय इति** । नीयते ज्ञाप्यते विवक्षितोऽर्थो[6] येनेति करणव्युत्पत्त्या न्यायोऽनुमानम्। अत एवोक्तं भासर्वज्ञेना[7]नुमाननिरूपणावसाने--'सोऽयं परमो न्यायः' इति । नीयते प्रतिपाद्यतेऽनेन[8] न्याय इति नयशब्दः शास्त्रवचनः । न्यायनयो न्यायशास्त्रम् । तत्प्रधानत्वात्तद्व्यपदेशस्तस्मिन्निति भावः । ननु न्यायशास्त्रे प्रवेशं वाञ्छती[9]त्यतश्चिरंतनमेव निबन्धनं व्याख्यायताम् । किं कृतेनानेन[10] नूतननिर्माणप्रयासेनेत्यत आह—**अलस इति** । वाञ्छन्नप्यलसः[11] । विस्तृतत्वात्तत्रानधिकारीत्यर्थः । तर्हि कथमत्राधिकारी भविष्यतीत्यत्र कथयति—**अल्पेन श्रुतेनेति** । श्रुतं श्रवणम् । भावे निष्ठा । नपुंसके भावे क्तविधानात्[12] ।

---

1 B तेषां भाषास्वरूपकथनम्
2 A संधिविग्रहिके
3 A omits इति
4 A धारणाद्यपटुः
5 B adds वाञ्छतीति । वाञ्छतेः सकर्मकत्वात् कर्माकाङ्क्षायामाह
6 A विलक्षितोऽर्थो येनेति
7 A भासर्वत्ते ज्ञाना (?)
8 A प्रतिपाद्यतेऽनेनेति य इति
9 B वाञ्छतश्चिरंतनम्
10 A किं नूतननिबन्धनप्रयासेन
11 A वाञ्छत्यप्यलसः
12 B नपुंसके भावे क्त इति क्तविधानात्

तत्र बहु श्रोतव्यमत्राल्पश्रवणेनेष्टसिद्धिरित्यर्थः[1]। ननु बहुश्रवणसाध्यस्य अल्पश्रवणेन कथं सिद्धिरित्यत आह— **सांक्षिप्ये (प्ये)[2] ति**। तत्र यावानर्थः प्रतिपादितस्तावानत्र संक्षिप्य प्रकाश्यत इत्यर्थः[3]। ननु संक्षिप्य प्रकाशने[4] भूमिकाधारकवाक्यवदनादरणीयता स्यात्तत्राह—**युक्त्यन्वितेति**। प्रकाश्यत इत्यनेन शास्त्रे[5]स्थितमेव प्रकाश्यते न तु नूतनं[6] किंचिदुत्प्रेक्ष्यत इति प्रमाणमूलत्वेनास्या[7]र्थवत्ता दर्शिता। अस्य ग्रन्थस्य प्रकरणत्वाच्छास्त्रस्य ये विषयप्रयोजने ते एवा[8]स्यापीति द्रष्टव्यम्। एतत्प्रकरणप्रवर्तके अवान्तरे विषयप्रयोजने त्वाद्यपद्येन निर्दिष्टे। प्रकाश्यमाना तर्कभाषा विषयः, बालं प्रति तत्प्रतिबोधनं प्रयोजनम्। ननु शास्त्रस्यापि के विषयप्रयोजने येन तद्विषयादिनास्यापि विषयादिमत्त्वं सिद्ध्येदित्याशङ्क्य तद्विषयप्रयोजनप्रतिपादनपरं शास्त्रस्यादिमं सूत्रं पठति—**प्रमाणेति**। बह्वर्थसूचनात्सूत्रम्। तदु[9]क्तम्—

**अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥** इति।

न्यायस्य न्यायशास्त्रस्येत्यर्थः। भीमो भीमसेन इत्यादिवन्नामैकदेशेन नामग्रहणम्। शिष्यते शिष्येभ्योऽनेन तत्त्वं प्रतिपाद्यत इति व्युत्पत्त्या शास्त्रं सूत्रसंदर्भः। अत एवास्य सूत्रस्य तदादित्वव्यवहारो युज्यते। लोके सजातीयापेक्षयैव तदादित्वव्यवहारदर्शनादिति। ननु तत्त्वज्ञानान्निःश्रेयसाधिगम इत्युक्तं तदयुक्तम्। तस्य भावस्तत्त्वमित्यादि। बहुविकल्पसंभवेन तत्त्वशब्दार्थस्य निश्चेतुमशक्यत्वात्। किं च[10] निःश्रेयस[11]शब्देनापि किं विवक्षित[12]मिति न ज्ञायते। पुत्रप्राप्त्यादिरूपस्यानेकस्य

---

1 A अत्राल्पश्रवणेन कथं सिद्धिरित्यत आह
2 B संक्षिप्येति
3 A omits अर्थः
4 A प्रकाशे
5 A शास्त्रे स्थितमेव
6 B नवं किंचित्
7 B प्रस्थानादरणीयता
8 A ते एवमपीति
9 A यदुक्तम्
10 A omits किं च
11 B निश्रेयशद्बेनापि
12 A विवक्षित इति

श्रेयसो विद्यमानत्वात् । तथा निःश्रेयसाधिगम इत्युक्ते निःश्रेयसज्ञानं प्रतीयते । तदनुपपन्नम् । साध्यसाधनभावादिसंबन्धमन्तरेणान्यज्ञाना[1]दन्य[2]ज्ञानायोगात् । इष्टानिष्टप्राप्तिपरिहारयोरेव पुरुषार्थत्वेन निःश्रेयसज्ञानस्य तदन्यतरत्वा(त्ता)भावे[3]नापुरुषार्थत्वाच्चेती[4]मामाशङ्कां मनसि परि[5]वर्तमानां छे[6]त्तुं प्रतिजानीते—**अस्यार्थ इति**। उच्यत इति शेषः। यथा भवदी[7]याशङ्का छिद्यते तथोच्यत इत्यर्थः ।

प्रतिज्ञातार्थमाह—**प्रमाणादीति**। अनारोपितरूपत्वापरपर्यायं सम्यक्त्वं तत्त्वशब्दार्थः । अत एवोत्तरग्रन्थे वक्ष्यति—**तत्त्वज्ञानं सम्यग् ज्ञानमिति**—रूढि[9]र्योगमपहरतीति न्यायेनावयवार्थानुस्यूतेरविवक्षितत्वान्नोक्तविकल्पावकाशः। निश्चितं श्रेयो निःश्रेयसं मोक्षः । तस्यैव श्रेयस्त्वेन निश्चितत्वात् । इतरेषां श्रेयसां सातिशयत्वेन क्ष[10]यिष्णुत्वेन च तदाभासत्वात्। निःश्रेयसशब्दस्याकारान्तत्वं 'अचतुर'—(पा० ५.४.७७) इत्यादिसूत्रे निपातनात् सिद्धम् । अधिगमः प्राप्तिः । न ज्ञानम् । अतो नोक्तदोषप्रसङ्गः । तदनेन प्रमाणादयः पदार्थाः प्रतिपाद्यत्वेन विषयः । तत्त्वज्ञानं मोक्षसाधनत्वात् प्रयोजनम् । तत्कामोऽधिकारी । शास्त्रस्य च पदार्थानां च प्रतिपाद्यप्रतिपादकभा[11]वः संबन्धः । शा[12]स्त्रस्य तत्त्वज्ञानस्य च कार्यकारणभावः, तत्त्वज्ञानस्य पदार्थानां विषयवि[13]षयिभाव इत्यनुबन्धचतुष्टयं प्रवृत्त्यङ्गं द्रष्टव्यमिति ॥

1 B अन्यस्य ज्ञानायोगात्
2 A अन्यस्य
3 B तदन्यतत्वाभावेन
4 B चेतीमा आशङ्का मनसि परिवर्तमानाश्छेत्तुं
5 A विपरिवर्तमानां
6 A omits छेत्तुं
7 A भवदीया शङ्का
8 B भवदीया शङ्काश्छिद्यन्ते
9 B रूढियोगम्
10 B क्षयित्वेन
11 A भावसंबन्धः
12 A शास्त्रस्य तत्त्वज्ञानस्य च पदार्थानां च
13 A विषयविषयीभाव

ननु प्रमाणादीनां तत्त्वज्ञानं प्रथमसूत्रपाठेनैव जातम्[1]। विदितपद[2]पदार्थसंगतिकस्य पुंसः शब्दश्रवणादर्थप्रतिपत्त्युपपत्तेः[3]। अतः किमर्थमुत्तरग्रन्थसंदर्भ इत्यत आह—न[4] चेति। जातमपि[5] ज्ञानं लक्षणपरीक्षे विना निर्विचिकित्सं न भवति। अनधिगतार्थ[6]गन्तृ प्रमाणमिति भाट्टाः[7] कथयन्ति। अविसंवादि विज्ञानं प्रमाणमिति सौगताः। प्रमाकरणं प्रमाणमिति नैयायिकाः। इत्यादिना प्रकारेण प्रमाणादि[8]शब्दार्थे वादिनां विवाददर्शनात्। अतस्तदर्थं लक्षणपरीक्षाप्रतिपादनपरेणोत्तरग्रन्थजातेन भवितव्यमित्यर्थः। उद्देशलक्षणपरीक्षाणां कर्तव्यमुक्तम्। प्राचीने ग्रन्थे तत्त्वकपोलकल्पितं न भवति किंतु भाष्यकारेण भाषितमिति भाषते-यदाहेति। भाष्यकारो यदाह तदेवोक्तं मयापीत्यर्थः। यच्छब्दार्थमाह—त्रिविधेति। तिस्रो विधा यस्याः सा तथोक्ता प्रवृत्तिर्व्यवहार इत्यर्थः। ननु[9] सर्वस्यापि शास्त्रस्य प्रवृत्तित्रैविध्यं किमस्ति नेत्याह—अस्येति। नान्यस्येत्यर्थः। ता एव विधा[10] दर्शयति—उद्देश इति। उद्देशो विभागो लक्षणं परीक्षा चेति प्रवृत्तिचातुर्विध्ये वक्तव्ये त्रैविध्यकथनमयुक्तमिति चेन्नैवम्। विभागस्य विशेषनाममात्रकीर्तनरूपत्वेनोद्देश एवान्तर्भावात्। अतस्त्रैविध्यकथनं युक्तमिति तात्पर्यम्। [सति] धर्मिणि[11] धर्माश्चिन्त्यन्त इति न्यायेन धर्मधर्मिणोर्धर्मिणि एव[12] प्रधानत्वाद्धर्मिकीर्तनरूपस्योद्देशस्य प्रथममुद्देशो युक्तः। परीक्षाया लक्षणविचारात्मकत्वेन परीक्षायाः पूर्वं लक्षणस्योद्देशः। अनन्तरमवशिष्टायाः परीक्षाया उद्देश इति[13] विभागः। प्रथमोद्दिष्टस्यो[14]द्देशस्य प्रथमं लक्षणमाह-उद्देश इति। नाम्ना कीर्तनं लक्षणवाक्ये विद्यते। अतो नाम्ना कीर्तनमुद्देश इत्युक्ते तत्रातिव्याप्तिः स्यात्। तन्निवारणार्थमुक्तं

---

1 A ज्ञातम्
2 A omits पद
3 A प्रत्युपपत्तेः
4 B नवेति
5 A जानन्नपि लक्षणापरीक्षे
6 A अनधिगतार्था
7 B भट्टाः
8 A उक्तप्रमाणादि
9 B omits ननु
10 A त्रिविधा
11 B सति धर्मिणि
12 B धर्मिण एव
13 A नाममात्रेति
14 B omits प्रथमोद्दिष्टस्य

नाममात्रेणेति[1]। लक्षणस्य त्रीणि दूषणानि विद्यन्ते। अव्याप्तिरतिव्याप्तिरसंभवश्चेति। लक्ष्यैकदेशे[2] लक्षणस्यावर्तनमव्याप्तिः[3]। अलक्ष्ये लक्षणस्य प्रवर्तनमतिव्याप्तिः। लक्षणस्य[4] लक्ष्ये क्वाप्यवर्तनमसंभवः। तस्मादतिव्याप्तेरपि दोषत्वात्तन्निवृत्त्यर्थं लक्षणवाक्ये मात्रविशेषणं[5] प्रक्षेप्तव्यम्। तर्हि उद्देशः कर्तव्य इत्यकाङ्क्षायां[6] प्रथमसूत्रे एव कृत इत्याह—**तच्चेति**। संकीर्तनापेक्षया तदिति नपुंसकलिङ्गनिर्देशः। लक्षणस्य लक्षणं लक्षयति[7]—**लक्षणमिति**। असाधारणधर्म इत्येव लक्षणस्य लक्षणम्। वचनग्रहणं प्रमादाल्लेखकदोषाद्वा समागतम्। तत्र धर्मो लक्षणमित्युक्ते साधारणधर्मेऽतिव्याप्तिः। सजातीयविजातीयव्यावर्तकधर्मस्यैव[8] लक्षणत्वेन साधारणधर्मस्य तदभावात्। अतस्तदर्थमुक्तम्—**असाधारणेति**। लक्षणवाक्याभिप्रायेण वा वचनग्रहणस्योपपत्तिलक्षणं[9] वाक्यमित्यर्थः। तदुदाहृत्य दर्शयति-**यथेति**। असाधारणधर्मस्य लक्षणत्वं यथा स्पष्टं भवति तथोच्यत इत्यर्थः। अत्र सास्नादीत्यादिशब्देन लाङ्गूलककुदखुरविषाणानां ग्रहणम्। परीक्षायां[10] लक्षणमाह—**लक्षितस्येति**। विचारः परीक्षेति लक्षणम्। अवशिष्टेन विचारमेवाभिनीय दर्शयति—**लक्षितस्येत्यादिना**। इयता प्रबन्धेनोपपादितं लक्षणपरीक्षयोः कर्तव्यत्वं निगमयति—**तेनेति**। येन कारणेन प्रथमसूत्रे उद्देशमात्रस्य कृतकत्वादवशिष्टे लक्षणपरीक्षे तेन[11] कारणेनेत्यर्थः। ननु प्रमाकरणमिति प्रमाणस्य प्रथमं लक्षणं कथ्यते। तन्न घटते। प्रमेयादीनामनेकेषां पदार्थानां सद्भावात्। अथ सूत्रकारेण प्रथममुद्दिष्टत्वात् उद्देशानुसारेण लक्षणं वक्तव्यमिति। यस्य[12] विद्यमान-

---

1 B नाममात्रेति

2 A लक्षैकदेशे

3 A अतिव्याप्तिः

4 A omits लक्षणस्य

5 A omits मात्र

6 B इत्याशङ्कायां

7 B कथयति

8 A omits धर्म

9 B उपपत्तिर्लक्षणं लक्षणवाक्यमित्यर्थः

10 A परीक्षालक्षणमाह

11 B तेनैत इति

12 B omits यस्य

त्वाच्च प्रथममुच्यते इति चेत् तर्हि सूत्रकारो वा किमिति प्रमेयाद्यनुद्देशेन प्रमाणं प्रथममुद्दिष्टवान्[1] । सत्यम् । मानाधीना मेयासिद्धिरिति न्यायेन सूत्रकारेण प्रथममुद्दिष्टं तदनुसारेण प्रमाणलक्षणं प्रथममुच्यत इत्याह— **तत्रापीति** । तेषु प्रमाणादिपदार्थेष्वित्यर्थः । तावच्छब्दः क्रमार्थः । क्रमेण प्रमेयादेरपि लक्षणं लक्ष्यत[2] इत्यभिप्रायः । प्रमाकरणमिति प्रमाया यत्करणं[3] तत्प्रमाणम् । अत्र च प्रमीयते येन तत्प्रमाणमिति करणव्युत्पत्तिराश्रयणीया । ननु प्रमितिः प्रमाणमिति भावव्युत्पत्तिः अप्रमितिरूपस्यापि चक्षुरादेः प्रमाकरणत्वाभ्युपगमात् । प्रमितिः प्रमाणमित्युक्ते बोधस्वभावस्यैव प्रमाणत्वं[4] स्यान्नाबोधस्वभावस्य[5] । तस्माद्बोधस्वभावस्य[6] चाबोधस्वभावस्य[7] च प्रमाणत्वमस्तीति करणव्युत्पत्तिरेवाश्रयणीयेति पूर्वापरपर्यालोचनविधुरं मन्दं प्रति लक्ष्यलक्षणविभागं[8] करोति—**तत्रेति** । तत्र लक्षणवाक्ये प्रमाकरणमित्यनेन लक्षणं निर्दिश्यते । प्रमाणमित्यनेन लक्ष्यमित्यर्थः[9] । ननु प्रमाकरणं[10] चेत् प्रमाणं तर्हि तस्य फलं वक्तव्यम् । यद्यत्करणं तत्तत्फलवदिति व्याप्तेः सद्भावात् इत्यभिप्रायेण शङ्कते—**नन्विति** । नियमो व्याप्तिरित्यर्थः । परिहरति—**सत्यमिति** । अर्धाङ्गीकारे सत्यशब्दः[11] प्रयोज्यः । नियमोऽङ्गीक्रियते[12] वक्तव्यत्वं नाङ्गीकृतमुक्तत्वादित्याभिप्रायः । फलशब्दस्याप्यर्थो[13] न ज्ञायते इति वदन्तं प्रत्याह—**फलं साध्यमिति** । फल निष्पत्तावित्यस्माद्धातोर्निष्पन्नत्वात् फलशब्दस्य[14] साध्यत्वमर्थ इत्यर्थः । अत्रानुरूपं दृष्टान्तं स्फुटमाचष्टे[15]—**छिदाकरणस्येति** । छिदा द्वैधीभाव इति भावः । प्रमास्वरूपमजानानस्तज्जिज्ञासुः पृच्छति—

---

1 B उद्दिदेश
2 B वक्षतीत्य
3 A कृतत्वात्
4 A प्रमाणत्वमत्र च स्यात्
5 A वा बोधस्वभावस्य
6 B न बोधस्वभावान्यस्य
7 A omits च
8 B लक्ष
9 B लक्ष
10 B प्रमाया [ : ] करण
11 A सत्यशब्दप्रयोगः
12 B नियमोऽङ्गीक्रियते च
13 A प ( फ ) लशब्दस्य
14 B फलस्य
15 A स्पष्टम्

**का पुनरिति** । प्रमा कीदृशीत्यर्थः । प्रमाणलक्षणनिरूपणवेलायां प्रमाप्रश्नस्य कः प्रसङ्ग इत्यत आह—**यस्या इति** । सा प्रमा पृच्छ्[1]यत इति पूर्वेणान्वयः । उत्तरं वक्तुं प्रतिजानीते—**उच्यत इति** । प्रमालक्षणमाह—**यथार्थेति** । यथार्थश्चासावनुभवश्चेति समानाधिकरणसमासः । न तु यथार्थशब्दस्य ‘ अव्ययं विभक्ति– ’ इत्यादिसूत्रेण । अव्ययीभावसमासेऽलिङ्गमव्ययमिति न्यायेन विशेष्यनिघ्नता नास्तीति चेन्मैवम् । यथासादृश्ये[2] इत्युत्तरसूत्रेण सादृश्यव्यतिरिक्तेषु योग्यतावीप्सापदार्थानतिवृत्तिलक्षणेषु यथार्थेषु वर्तमानस्य यथाशब्दस्याव्ययीभावस्य विहितत्वात् । अत्र च सादृश्यस्य विवक्षितत्वादर्थस्यानुभवस्य चा[3]बाधितत्वं सादृश्यम् । तथा चा[4]यमर्थः संपन्नः । यथा स[5]दृशोऽबाधितोऽर्थो यस्य स तथोक्तः । तेन यथार्थत्वमर्थाव्यभि[6]चारित्वम[7]र्थक्रियाकारिविषयत्वं चेत्यादिवि[8]कल्पः पराकृतः । केचित्तु यथार्थत्वं सं[9]बन्ध (न्धि) विशेष[10]णविशिष्टविषयत्वमि[11]त्याचक्षते । यथार्थपदव्यावर्त्यमाह—**यथार्थेति** । अनवधारणं ज्ञानं संशयः । मिथ्याध्यवसायो विपर्ययः । व्याप्यारोपे व्याप[12]कारोपस्तर्कस्तज्जनितं ज्ञानमाहार्यारोपरूपत्वेनायथार्थमेव तेषां निरासो व्यावृ[13]त्तीक्रियत इत्यर्थः । अनुभवपदकृत्यमाह—[14]**अनुभव इति** । स्मृतेर्निरास इति पूर्वेणान्वयः । अनुभवशब्दार्थमाह—[15]**अनुभव इति** । स्मृतित्वानधिकरणं ज्ञानमनुभव इति भावः । प्रमास्वरूपमवगतं करणस्वरूपं नावगम्यत इति पृच्छति—**किं पुनरिति** । सार्व[16]पार्षदं व्याकरणमिति न्यायेन व्याकरणसूत्रेणोत्तरमाह—**साधकेति** । ‘ अतिशा[17]यने तमबिष्ठनौ ’ –इत्यतिशायने

---

1 A पृच्छत
2 B यथा सादृश्यमिति
3 B वा बाधितत्वं
4 A omits च
5 A सदृशऽबाधितो
6 A व्यभिचारत्वमर्थक्रियाकार
7 B क्रियाकारि
8 B विकल्पाः पराकृताः
9 B संबन्धिविशेषण
10 A विशेषेण
11 B मित्यावक्ष्यते
12 A व्यापकारो [पः] स्तर्कः
13 A व्यावृत्तिः क्रियते ; B व्यावृत्ति क्रियत
14 A अनुभव इति निरासपूर्वेणान्वयः
15 B अनुभवन्ति
16 B सर्वपार्षदं
17 A अतिशयेन

तमब्विधानात्[1] । तमप्प्रत्ययस्यार्थं[2] वदन् विवक्षितमर्थमाह—**अतिशयितमिति** । क्रियाप्रसिद्धौ यत्प्रकृष्टोपकारकं तत्करणमित्यर्थः । अन्ये तु साक्षात्कर्त्रधिष्ठिततमसाध्यं[3] यत्क्रियासाधकं तत् करणमिति संगिरन्ते । ननु 'ण्वुल्तृचौ–'[4] इति सूत्रेण कर्तरि ण्वुल्प्रत्ययस्य[5] विहितत्वात्साधयतीति व्युत्पत्त्या साधकत्वं[6] कर्तुरेवोपपद्यते । कर्ता चात्र प्रमातैव । अतः करणस्य साधकत्वमेव नास्ति । साधकतमत्वं तु दूरापास्तमेवेत्याशङ्क्य[7] 'क्रियां कुर्वद् हि कारकम्'[8] इति न्यायेन सर्वेषां कारकाणां स्वव्यापारापेक्षया कर्तृत्वसंभवात् करणस्यापि कारकत्वापरपर्यायं साधकत्वं संभवतीत्यभिप्रायेण परिहरति--**प्रकृष्टं कारणमिति** । ननु साधकशब्दार्थमजानानं प्रति कारणशब्देनार्थः कथ्यते तदसंगतम् । साधकशब्दवत् कारणस्याप्यप्रसिद्धत्वात् । प्रसिद्धेन ह्यप्रसिद्धं बोधनीयमतस्तेन तद्बोधनमयुक्तमित्याशयेनाशङ्कते—**नन्विति** । परिहरति—**उच्यत इति** । कारणस्य लक्षणमाह—**यस्येति** । पूर्वभावो नियतोऽवश्यंभावी । अनन्यथासिद्धः प्रकारान्तरेणोपयुक्तो न भवतीत्यर्थः । लक्षणस्य लक्ष्यानुगतिं दर्शयति—**यथेति**[9] । ननु यस्य कार्यात् पूर्वभावोऽस्ति तत्कारणमित्येतावदस्तु किं नियतग्रहणेनेत्याशङ्क्य तावत्युक्ते दैवादागते[10] रासभादावतिव्याप्तिः स्यात् । अतस्तन्निवारणार्थं[11] नियतग्रहणं[12] कृतमित्याह—**यद्यपीत्यादिना नासौ नियत** इत्यन्तेन । अनन्यथासिद्धपदेन तन्तुगतरूपादावतिव्याप्तिर्निरस्तेति दर्शयितुं तन्तुगतरूपादावुक्तलक्षणसद्भावं दर्शयति—**तन्तुरूपस्येति** । तन्तुगतरूपादेरित्यर्थः । ननु तन्तुगतरूपादौ कारणलक्षणमस्ति चेत्तर्हि पटादिकं प्रत्यपि तन्तुरूपादेः कारणत्वमस्त्विति[13] शङ्क्यते—**किं त्विति** । अन्यथा-

---

1 A तमपो विधानात्
2 B तमप्रत्ययस्य
3 A साक्षात्कर्त्राधि [ष्ठि?] तमसाध्यक्रियासाधकं
4 B ण्वुल्तृचा
5 B नु प्रत्ययस्य
6 A साधकं
7 A दूरापास्तवेत्या
8 A क्रियां कुर्वद्धिकारकम्
9 B omits यथेति
10 B दैव.दागतरासभादौ
11 B तन्निरासार्थम्
12 B नियतेति ग्रहणं
13 A तन्तुरूपादिः कारणमस्त्विति

सिद्धत्वान्नैतत्कारणमित्याह—**अन्यथेति** । अन्यथासिद्धत्वे हेतुमाह--**पट-रूपेति** । ननु[1] तन्तुरूपं पटं प्रति पटरूपं च प्रति कारणं भवतु को दोष इत्याह—**पटं प्रत्यपीति** । समर्थाल्पकल्पना[2] कल्पनालाघवम्, समर्थानल्प-कल्पना कल्पनागौरवम् । तत्र केवलं तन्तुभिरेव पटोत्पत्त्युपपत्तौ तद्गतरूप-स्यापि कारणत्वकल्पनायां कल्पनागौरवदोषः स्यात् । तदुक्तं वाचस्पति-मिश्रैः—

'कल्पनालाघवं यत्र तं पक्षं ( रोचया ) महे ।
कल्पनागौरवं यत्र तं पक्षं न सहामहे ॥' इति ॥

उक्तं[3] कारणलक्षणं निगमयति—**तेनेति** । येन कारणेन रासभादि-व्यावृत्तये तन्तुरूपादिव्यावृत्तये च नियतानन्यथासिद्धपदाभ्यां भवितव्यं तेन कारणेनेत्यर्थः । अनन्यथासिद्धश्चासौ नियतश्च स चासौ पूर्वभावश्च सोऽस्यास्तीत्यनन्यथासिद्धनियतपूर्वभावि । ननु ' न कर्मधारयान्मत्व-र्थीय—' इति विद्यमानत्वात्कथमित्थं कथ्यत इति चेन्न । तस्यासार्वत्रिक-त्वेन ' कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने[4]' इत्यादिवदुपपत्तेः । तस्य भावस्तत्त्वमिति भावः । ईदृशः प्रयोगश्चिन्त्य इति व्याकरणपारीणा भणन्ति । ननु यस्य कार्यात् पूर्वभाव इत्यादिना कारणस्य[5] लक्षणमुक्तं तत्रावधिभूतकार्यापरिज्ञानेऽवधिमत्कारणमपि दुर्विज्ञानं[6] स्यादित्याशङ्क्य तत्परिज्ञानार्थं कार्यलक्षणमाह—**अनन्यथासिद्धेति** । पश्चाद्भावि कार्य-मित्युक्ते दैववशात् पश्चाद्भाविनि रासभादावतिव्याप्तिः स्यादत उक्तम्[7]—**नियतेति** । तावत्युक्ते तन्त्वपेक्षया पटगतरूपस्यापि कार्यता स्यात् तन्निवृत्त्यर्थमुक्तम्—**अनन्यथासिद्धेति**[8] । तस्य भावस्तत्त्वं कार्यत्वमित्यर्थः ।

---

1 A ननु तन्तुरूपं पटं पटरूपं च प्रति; B ननु तन्तुरूपं पटरूपं च पटं प्रति
2 A समर्थाल्पकल्पना लाघवं समर्थानल्पकल्पना गौरवम्; B समर्थाल्पकल्पना [कल्पना] लाघवं समर्थानल्प-कल्पना (कल्पना:) कल्पनागौरवं
3 B उक्तकारणलक्षणम्
4 B omits लोचने
5 B कारणलक्षणं
6 A दुर्गमं
7 B अतिव्याप्तिरत उक्तम्
8 A अन्यथासिद्धेति

स्वाभिमतं कारणलक्षणमुक्त्वा परोदीरितं कारणलक्षणं दूषयितुमनुभाषते—**यत्त्विति**। यत्त्वित्यत्रैतस्य[1] यच्छब्दस्य तदयुक्तमित्युत्तरत्र स्थितेन तच्छब्देनान्वयः। तुशब्दः पूर्वस्माद्वैषम्यं द्योतयति स च नामग्रहणयोग्योऽपि न भवतीति सूचयितुं कश्चिदित्युक्तम्। यच्छब्दार्थमाह—**कार्यानुकृतेति**। कार्येणानुकृतावनुविहितावन्वयव्यतिरेकौ[2] तौ यस्य तत्तथोक्तम्। पटलक्षणं कार्यं हि तन्तुलक्षणकारणान्वयव्यतिरेकावनुविधत्ते। तस्मिन् सति तद्भावोऽन्वयः, तस्मिन्नसति तदभावो व्यतिरेक इत्यर्थः। अनुभाषितं दूषयति—**तदयुक्तमिति**। यत्तु त्वयोक्तं तदयुक्तमित्यर्थः। ननु तन्त्वादिलक्षणेषु कारणेषु लक्षणस्य सद्भावात् कथं तदयुक्तमित्युक्तमित्याशङ्क्य सर्वकारणानुगमाभावादव्याप्तमिदं लक्षणमिति वक्तुं तत्र युक्तिमाह—**नित्यविभूनामिति**। नित्यत्वं कालतो व्यतिरेकाभावे[3] हेतुरुक्तः। विभुत्वं देशतो व्यतिरेकाभावे। ततश्च शब्दादिकं प्रति कारणत्वेन प्रसिद्धस्य व्योमादेरकारणत्वमनिष्टमित्यर्थः[4]। कारणं विभजते—**तच्चेति**। चकारः पक्षान्तरव्यावृत्त्यर्थः। तदनेन निमित्तोपादानकारणद्वयवादो निराकृतः। कथं त्रैविध्यमित्यत आह—**समवायीति**। समवायिकारणमसमवायिकारणं निमित्तकारणमिति त्रिविधं कारणमित्यर्थः। प्रधानत्वेन प्रथमं समवायिकारणस्य तत्प्रत्यासन्नत्वेनानन्तरमसमवायिकारणस्य पश्चादवशिष्टस्य निमित्तकारणस्योद्देशः। यथोद्देशं समवायिकारणस्य लक्षणमाह—**तत्रेति**। तत्र तेषु कारणेष्वित्यर्थः। तदुदाहृत्य दर्शयति—**यथा तन्तव इति**। तन्तवः समवायिकारणमिति लिङ्गवचनव्यत्ययो नित्यनपुंसकत्वेन जात्यभिप्रायेण च[5] वेदाः प्रमाणमित्यादिवद्द्रष्टव्यः। लक्षणानुगतिं दर्शयति—**तन्तुष्वेवेति**। हि प्रसिद्धौ। ननु पटः स्वोत्पत्तिवेलायां कारणत्रयसंबद्ध एवोत्पद्यते। ततश्चैकत्र समवैति नान्यत्रेत्येतद्वैषम्यं कथ-

---

1 A यत्त्वित्यत्रै तस्य; B यत्त्विन्यत्र यच्छब्दस्य
2 B अन्वयव्यतिरेकौ यस्य स्तरतथोक्त- पद
3 A व्यतिरेकाभावो
4 A व्योमादे [ र? ] कारणत्वं
5 B omits च

मुत्पद्यत[1] इत्याशयेनाशङ्कते—**नन्विति**। अर्धाङ्गीकारेण परिहरति—**सत्यमिति**। संबद्धत्वे समानेऽप्येकत्र समवायलक्षणेन संबन्धेन संबन्धः, अपरत्र संयोगलक्षणेनेति वैषम्यमस्तीति[2] वक्तुं[3] संबन्धद्वैविध्यमभिधत्ते—**द्विविध इति**। ते एव द्वे विधे[4] दर्शयति—**संयोग इति**। प्रत्यक्षत्वेन प्रसिद्धं संयोगं प्रथममुद्दिश्य समवायनिरूपणाधीननिरूपणत्वेन संयोगं परित्यज्य समवायस्य प्रथमं लक्षणमाह—**तत्रायुतसिद्धयोरिति**। संयोगस्य[5] लक्षणमाह—**अन्ययोरिति**[6]। युतसिद्धयोः संबन्धः संयोग इत्यर्थः। 'यु[7] मिश्रणामिश्रणयोः' इत्यस्य धातोः प्रतियोगितदभाववाचकत्वेन तयोरर्थयोः[8] कतरस्मिन्नर्थे पर्यवसानमित्यभिप्रायेण पृच्छति—**क्वाविति**। अमिश्रणार्थत्वमत्र विवक्षितमित्याह—**ययोर्मध्य इति**। संबन्धो हि संबन्धिभ्यां भिन्नस्तदाश्रितश्चैकश्चेति। संबन्धस्य द्विनिष्ठत्वाद् ययोः संबन्धिनोर्मध्ये एकं[10] संबन्ध्यपरं संबन्धिनमाश्रित्यैवावतिष्ठति तावयुतसिद्धौ। अपृथक्सिद्धावित्यर्थः। अस्मिन्नर्थे ग्रन्थान्तरसंवादं दर्शयति—**तदुक्तमिति**। अयुतसिद्धावुदाहृत्य दर्शयति—**यथेति**। तन्त्वादिरवयवः, पटादिरवयवी। रूपादिर्गुणः, पृथिव्यादिर्गुणी[11]। उत्क्षेपणापक्षेपणादि[12]रूपा क्रिया, तदाधारः क्रियावान्। सत्ता द्रव्यत्वादिर्जातिः[13], पृथिव्यादिर्व्यक्तिः[14]। पञ्चमपदार्थो[15] व्यावर्तकशिरोमणित्वेन प्रसिद्धो यावन्नित्य[16]द्रव्यवृत्तिर्यः स विशेषः, नित्यानि तु द्रव्याणि पृथिव्यप्तेजोवायुरूपा[17]श्चतुर्विधाः परमाणवः, आकाशकालदिगात्ममनांसि। ननु तन्तवः

---

1 A कथमुत्पद्यते
2 B वैषम्यमप्यस्तीति
3 A omits वक्तुं
4 A द्विविधे
5 B संयोगलक्षणमाह
6 A अनन्ययोरिति
7 A omits यु
8 A तयोरर्थयोरिति
9 A [illegible]
(ष्ठ) त्वात्
10 A एकः संबन्धः
11 B पृथिव्यादि गुणी
12 A omits अपक्षेपणा
13 B द्रव्यत्वादि
14 B पृथिव्यादिव्यक्तिः
15 B पञ्चमपदार्थो
16 B omits यावत्
17 A वाय्वादि

पटव्यतिरेकेणान्याश्रिता अवतिष्ठन्ते । तत्कथमयुतसिद्धत्वं तन्तु[1]पटयोरित्याशङ्क्य पटस्तन्तुव्य[2]तिरेकेण नावतिष्ठत इति परिहरन् पञ्च[3]सु स्थलेष्वपृथक्सिद्धत्वं दर्शय[4]ति—**अवयव्यादय इति**। किं सर्वदेत्थमवतिष्ठन्ते । नेत्याह—**अविनश्यन्त इति** । विन[5]श्यन्तः [6]कथमित्याह—**विनश्य[7]दिति**। विनश्यन्त्यवस्था येषां ते तथोक्ताः । विनश्यतामाश्रयमन्तरेणावस्थानमुदाहरणमुखेन दर्शयति—**यथेति** । अथ केयं विनश्यत्तेत्यत आह—**विनश्यत्तेति** । विनश्यतां भावो विनश्यत्ता । विनाशे ध्वंसे यानि कारणानि तेषां सामग्री पौष्कल्यं तस्य संनिधिरेव सांनिध्यमित्यर्थः । नन्ववयवावयव्यादीनामयुतसिद्धत्वमस्तु तन्तुपटयोः कि[8]मायातमत आह—**तन्तुपटाविति** । फलितमाह—**तेनेति** । येनावयवावयविभावस्तेनेत्यर्थः । तत्र हेतु[9]माह—**अयुतसिद्धत्वादिति** । ननु तन्तुपटवत् पटतुर्योरपि किं समवायोऽस्ति । नेत्याह—**[10]पटतुर्योरिति** । पटतुर्योस्तथा न भवतीत्यर्थः । कुत इत्या[11]ह—**अयुतेति** । अयुतसिद्ध[12]त्वभावमेव दर्शयति—**न हि तुरीति** । तुरीपटौ परस्परपरिहारेण पृथगाश्रयाश्रितत्वेन पृथक्सिद्धावित्यर्थः । कस्तर्हि तुरीपटयोः संबन्ध इत्यत आह—**अत इति** । यतस्तौ पृथक्सिद्धा[13]वित इत्यर्थः । उपपादितं पटस्य तन्तुसमवेतत्वं निग[14]मयति—**तदेवमिति** । तत्तस्मात् कारणदेवमुक्तया रीत्या पटस्तन्तुसमवेतो न तुर्यादिसमवे[15]त इति भावः । एवमपि तन्तूनामेव समवायिकारणत्वं कथमि[16]त्याशङ्क्य समवायिकारणलक्षणयोगादिति व्यक्त[17]मुक्तं तल्लक्षणं स्मार-

---

1 A ... न्तु
2 A य (व्य?) तिरेकेण
3 A adds पूर्वोक्तेषु
4 A दर्शयितुं
5 A विनश्यतः कथं तिष्ठन्तीत्यत आह
6 B कथमित्यत आह
7 B omits विनश्यदिति
8 B किमायातमित्याह
9 B तत्र हेतुः
10 A omits पटतुर्योरिति
11 A इत्यत आह
12 B अयुतसिद्धाभावं
13 B पृथक्सिद्धावेव
14 A विमर्शयति
15 B समवेति
16 A इत्याशङ्क्याह
17 A वक्तुमुक्तं

यति—**यत्समवेतमिति** । परमप्रकृत[1]मुपसंहरति—**अत इति** । समवायि-
कारणलक्षणयोगादित्यर्थः । एवका[2]रो व्यवच्छेदं दर्शयति—**न तुर्यादीति** ।
ननु[3] तन्तुव[4]त्पटोऽपि किं समवायिकारणं भवति । प[5]टः स्वगतरूपादिकं
प्रतीत्याह—**पटश्चेति** । उ[6]क्तं न्यायमन्यत्राप्यतिदिशति—**एवं मृत्पिण्ड
इति** । समवा[7]यिकारणलक्षणयोगान्मृत्पिण्डो घटं प्रति समवायिकारणम्
घटश्च स्वगतरूपादिकं प्रतीत्यर्थः । ननु घटस्य तद्गतरूपादेश्च[8] समानं-
समयोत्पन्नत्वेन[9] पूर्वापरभावनिबं[10]न्धनः कार्यकारणभावो न संभवतीति
शङ्कते—**ननु यदैवेति** । यदा यस्मिन् का[11]ले तदा तस्मिन् काल इत्यर्थः ।
अस्तु समानकालीनं जन्म ततः किमित्यत आह—**अत इति** । समान-
ग्रामा वयमित्यादिवदत्र[12]त्यः समानशब्द एक[13]तावचन एककालीनत्वादि-
त्यर्थः । एककालीनत्वेन कार्यकारणभावाभावे दृष्टान्तमाह—**सव्येतरेति** ।
वामदक्षिणविषाणवदित्यर्थः । तत्र हेतुमाह—**पौर्वापर्येति** । पूर्वं चापरं च
पूर्वापरे तयोर्भावः पौर्वापर्यं तदभावात् । पूर्वभावि कारणम्, पश्चाद्भावि
कार्यमिति वक्तव्यम् । एककालीनयोस्तयोः पूर्वापरभावात् कार्यकारण-
भावो न संभवतीत्यर्थः । ननु घटा[14]दिः स्वगतरूपादिकं प्रति कारणं न
संभवतीति चेन्माभून्नाम समवायिकारणं तु भवत्वित्याशङ्क्याह—**अत
इति** । कारणत्वाभावादित्यर्थः । कारणत्वाभावे समवायिकारणस्य का
हानिरित्यत आह—**कारणेति** । कारणत्वसामान्याभावे तद्विशेषरूप[15]त्वं
समवायिकारणत्वं न संभवति । प्रमाणत्वाभावे प्रत्यक्षत्वादिवदित्यर्थः ।

---

1 A परप्रकृतं
2 A एवकारव्यवच्छेद्यं; B एवकारव्यवच्छेद्यं
3 A न तु
4 A तन्तुवत् पटोऽपि भवति पटः समवायिकारणं भवति किं स्वगतरूपादिकं प्रतीत्याह
5 B परस्वगतरूपादिकं
6 A उक्तन्यायं
7 A समवायकारणलक्षणयोगात्
8 A omits च
9 A समसमयोत्पन्नत्वेन; B सममेवोत्पन्नत्वेन
10 A निबन्धनकार्य
11 A omits काले
12 A तत्रत्य; B अत्रत्यसमानशब्दः
13 A omits एकता
14 B घटादि
15 B तद्विशेषरूपं

परिहारं वक्तुं प्रतिजानीते—**अत्रेति**। अस्मिंश्चोद्ये परिहार उच्यत इत्यर्थः। यदवादि पूर्ववादिना समसमयजातत्वेन पूर्वापरभावाभावात् कार्यकारणभावो नास्तीति तत्र मूले कुठारं निदधाति—**न गुणेति**। कथं तर्हि जन्मेति शङ्कते—**किं त्विति**। भिन्नकालं जन्मेत्याह—**द्रव्यमिति**। ननु त्वयोच्यते भिन्नकालीनं[1] जन्मेति मयोच्यते समानकालीनमिति[2] जन्म केवलं वाचि कलहो वर्तते किमत्र विनिगमकमित्याशङ्क्य समानकालोत्पत्त्यङ्गीकारे बाधकसद्भावाद्भिन्नकालोत्पत्तिरङ्गीकर्तव्येत्याह—**समानकालोत्पत्ताविति**। अभ्युपगम्यमानायामिति शेषः। सर्वकारणमेलनं सामग्रीत्यर्थः। अयं गुणोऽसौ गुणवानिति प्रत्यक्षेणोपलभ्यमानो भेदो न स्यादित्यर्थः। एकसामग्रीकत्वेऽपि कार्यभेदो भवत्वित्याशङ्क्यमानं[3] प्रत्याह—**कारणभेदेति**। अत्रत्यः कारणशब्दः सामग्रीवचनः। अनेककारणजन्यस्यापि पटस्यैकत्वदर्शनात् कारणभेदनियतः[4] कार्यभेदो न भवति किं तु सामग्रीभेदानियतः। अयं भावः—दृश्यमानः कार्यभेदः सामग्रीभेदव्याप्तः सन् सामग्रीभेदमवगमयति यथाग्निव्याप्तो धूमोऽग्निमिति। उपपादितं घटस्य रूपादिकं प्रति समवायिकारणत्वमुपसंहरति—**तस्मादिति**। भिन्नकालोत्पत्तेः साधितत्वात् पूर्वभावित्वेन कारणं यत्समवेतमित्यादिलक्षणयोगात् समवायिकारणमपि भवतीत्यर्थः। अस्मिन् पक्षे सामग्रीभेदाभावे कार्यभेदो[5] न स्यादिति दोषो[6] भाषितः सोऽपि नास्ति सामग्रीभेदसद्भावादित्याह—**तदेति**[7]। घटस्य रूपादिकं प्रति कारणत्वपक्ष इत्यर्थः। सामग्रीभेदसद्भावं दर्शयति—**घटो हीति**। कुत इत्याशङ्क्य कारणत्वे पूर्वभावित्वं कार्यत्वे पश्चाद्भावित्वं वक्तव्यं तदभावादित्याह—**एकस्येति**। नन्वेकस्यापि पूर्वत्वमपरत्वं वास्तु को दोष इत्याशङ्क्य भेदसमानाधिकरणत्वादेकस्मिन् वस्तुनि पूर्वापरभावो न संभवतीत्याह[8]—

---

1 B भिन्नकालं
2 B समानकालमिति
3 B त्याशङ्क्मान
4 A omits कारण
5 A कार्ये भेदो
6 A यो दोषो
7 B तदेति
8 B न भवतीत्याह

**न हीति।** ननु घटो घटं प्रति कारणं [1]मा भवतु [2]स्वरूपादिकं प्रति किं न भवति। भवत्येव पूर्वभावित्वादित्याह—**स्वगुणानिति** । ननु घटस्य स्वगतगुणान् प्रति कारणत्वार्थं प्रथमे क्षणे यदि निर्गुणत्वं [3]कक्षीक्रियते तर्हि [4]तस्याचाक्षुषत्वमद्रव्यत्वं चेति दोषद्वयं [5]प्रादुःष्यादिति[6] शङ्कते—**नन्वेवं सतीति** । घटस्य निर्गुणत्वे सति प्रथमे क्षणे घटश्चक्षुर्जन्यज्ञान-विषयो न स्यादित्यर्थः। तत्र हेतुमाह—[7]अरूपिद्रव्यत्वात्। द्रव्यत्वादित्युक्ते चक्षुषा गृह्यमाणे पटादावनैकान्तिकता स्यात् । अत उक्तमरूपीति । अरूपित्वादित्युक्ते रूपरहिते चक्षुषा गृह्यमाणे च रूपादौ व्यभिचारस्तदर्थ-मुक्तं द्रव्यत्वादिति । तत्र दृष्टान्तमाह—**वायुवदिति** । तर्हि कथंभूतं द्रव्यं चाक्षुषं भवतीत्यपेक्षायामाह—**तदेवेति** । परमाणुद्व्यणुकयो[8]रुद्भूतरूप-त्वेऽपि [9]चाक्षुषत्वाभावान्महत्वे [10]सतीत्युक्तम् । महत्त्वेऽपि व्योमादे[11]रचाक्षुष-त्वाद्रूपवदित्युक्तम् । [12]महत्त्वे रूपवत्त्वे सति तप्तजलस्थितस्याग्नेश्चाक्षुषत्वा-भावादुद्भूतेत्युक्तम् । न केवलं घटस्य निर्गुणत्वे चाक्षुषत्वाभावो दोषो [13]द्रव्यत्वाभावेऽपि स्यादित्याह-**[14]अद्रव्यं चेति**। [15]कुत इत्याह-**[16]गुणाश्रयत्वोति**। ननु मास्तु गुणाश्रयो द्रव्यं तु स्यादित्याशङ्क्य द्रव्यलक्षणाभावाद्द्रव्यं न [17]संभवतीत्याह—**गुणाश्रय इति** । [18]त्वदुक्तयोर्दोषयोर्मध्ये प्रथमस्य दोष-त्वमेव नास्ति । प्रामाणिकपरित्यागाप्रामाणिकस्वीकारयोरन्यतर[19]स्वीकार-त्वाभावात्। द्वितीयस्तु दोषः परिह्रियत इत्यभिप्रायेण परिहरति—

---

1 B न भवतु
2 A स्वगतरूपादिकं प्रति किं भवति
3 A चाङ्गीक्रियते
4 A तस्यार्हि
5 B प्रादुष्यात्
6 A प्रादुष्यादिः
7 B अरूपिद्रव्यत्वादित्युक्तेः
8 A कथोद्भूत
9 B चाक्षुषाभावात्
10 B सा रूपवादित्युक्तं
11 A चाक्षुषत्वाभावात्
12 A महत्वेऽपि जलस्थितस्याग्नेः
13 A B द्रव्यत्वाभावोऽपि
14 A आद्रव्यं
15 A कुत इत्यत आह; B कुत इत्यात आह
16 A omits गुणाश्रयत्वोति । ननु मास्तु गुणाश्रयो द्रव्यं तु स्यादित्या-शङ्क्य द्रव्यलक्षणाभावाद्द्रव्यं न संभ-वतीत्याह—गुणाश्रय इति ।
17 B द्रव्यं न भवतीत्याह
18 B भवदुक्तयोर्दूषणयोर्द्वयोः
19 A B अन्यतरत्वाभावात्

**सत्यमिति** । अचाक्षुषत्वापादनस्य दोषत्वं नास्तीत्याह-**प्रथम इति** । परम-सूक्ष्मपदेन परमाण्वादिवदिन्द्रियग्रहणानर्हत्वं विवक्ष्यते तदा ग्रहणाभावे का हानिः । न किंचिदनिष्टमित्यर्थः । ननु प्रथमे क्षणे चक्षुषा न गृह्यते चेत्तर्हि कदा गृह्यत इति बुभुत्सायामित्थं निर्णय[1] इत्याह—**तेनेति** । येन कारणेन ग्रहणानर्हत्वेनाग्रहणं न दोषस्तेनैतद्वक्ष्यमाणं व्यवस्थितं निश्चित-मित्यर्थः । एतच्छब्दार्थमाह—**निर्गुण एवेति**[2] । उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति न्यायेन प्रथमं निर्गुणमेवोत्पद्यते । तदा ग्रहणयोग्यत्वाभावान्न गृह्यते । द्वितीयादिक्षणेषु ग्रहणयोग्यतया गृह्यत इत्यर्थः । यदापादित[3]-मद्रव्यत्वं तत्तु नास्त्येवेत्याह—**न चेति** । तत्र हेतुमाह—**समवायि-कारणमिति** । प्रथमे क्षणे घटस्य पश्चाद्भाविनः स्वगुणान् प्रति समवा-यिकारणत्वेन द्रव्यलक्षणयोगाद्द्रव्यत्वमुपपद्यत इति भावः । गुणाश्रयत्व-लक्षणेनापि[4] भवितव्यमिति[5] चेत्तदप्यस्तीत्याह-**योग्यतयेति**[6] । गुणाश्रयत्वं नाम गुणात्यन्ताभावानधिकरणत्वं तस्य सद्भावा[7] (तत्संभवा) दिति भावः ॥

समवायिकारणं सप्रपञ्चं निरूप्य क्रमप्राप्तमसमवायिकारणं निरूप-यितुमुपक्रमते—**असमवायीति** । [8]समवायिकारणप्रत्यासन्नमसमवायिकारण-मित्युक्ते तन्तुरूपादावतिव्याप्तिः । पटसमवायिकारणतन्तुसमवेतत्वात् । अत उक्तम्—**अवधृतसामर्थ्यमिति** । तन्तुरूपादेः पटरूपजननोपक्षीण-त्वेनावधृतसामर्थ्यभावाभावादवधृतसामर्थ्यमसमवायिकारणमित्युक्ते [9]नि-श्चितकरणत्वे तन्त्वादावतिव्याप्तिः । अत उक्तं **समवायिकारणप्रत्या-सन्नमिति** । तन्त्वादेः पटादिकं प्रति समवायिकारणत्वेन तत्प्रत्यासन्न-

---

1 A तन्निर्णय
2 A निर्गुण एव
3 A आपादितमद्रव्यं तन्तु
4 A गुणाश्रयलक्षणत्वेनापि
5 A B omit इति
6 B योग्यत इति
7 A तत्सद्भावादिति भावः; B तत्सं-भवादिति भावः
8 A समवायिकारणप्रत्यासन्नं सम-वायिकारणसमवेतं अवधृतं निश्चितं सामर्थ्यं कारणत्वं यस्य तत्तथोक्त (क्तं?) तत्र समवायिकारणप्रत्यास-न्नमसमवायिकारणमित्युक्ते
9 A अवधृतसामर्थ्याभावात् तावत्युक्ते निश्चितकारणत्वे

वत्त्वा[1]भावादिति भावः । किमत्रोदाहरणं तत्राह—**यथेति** । तन्तुसंयोगे लक्षणसद्भावं दर्शयति—**तन्तुसंयोगस्येति** । तन्तूनां गुणित्वात् संयोगस्य च गुणत्वात् तन्तुसमवेतः संयोगः कारणलक्षणलक्षितत्वाच्च कारणं तस्मादसमवायिकारणमित्यर्थः । पटरूपस्य किमसमवायिकारणमित्याकाङ्क्षायामाह—**तन्तुरूपमिति** । ननु तन्तुरूपस्य कारणत्वसद्भावेऽपि तन्तुसमवेतत्वेन समवायिकारणसमवेतत्वाभावादसमवायिकार[2]णत्वं न संभवतीत्यभिप्रायेण शङ्कते—**ननु पटेति** । परिहरति—**मैवमिति**[3] । तत्र हेतुमाह—**समवायीति**[4] । प्रत्यासत्तिर्द्विधा[5] । कारणैकार्थप्रत्यासत्तिः कार्यैकार्थप्रत्यास[6]त्तिश्चेति । तत्र तन्तुसंयोगवत् स्वकार्येण पटेन सहैकस्मिंस्तन्तुलक्षणेऽर्थे प्रत्यासत्त्यभावेऽपि तन्तुरूपस्य पटरूपं प्रति कारणेन पटेन [7]सहैकस्मिंस्तन्तुलक्षणेऽर्थे प्रत्यासत्तिसद्भावात् समवायिकारणप्रत्यासन्नत्वं युज्यत इति भावः । निमित्तकारणस्य[8] लक्षणमाह—[9]**निमित्तेति** । कारणं निमित्तकारणमित्युक्ते समवायिकारणे तन्त्वादावतिव्याप्तिस्तदर्थमुक्तम्—**यन्न समवायिकारणमिति** । तावत्युक्ते तन्तुसंयोगादावतिव्याप्तिः । अत उक्तम्—**नाप्यसमवायिकारणमिति** । कारणपदं विहाय तावत्युक्ते रासभादावतिव्याप्तिः । अत उक्तम्—**कारणमिति** । कारणलक्षणलक्षितमित्यर्थः । किमत्रोदाहरणं तत्राह—**यथेति** । न[10]नूक्तं त्रिविधकारणं सर्वस्यापि कार्यस्य किं विद्यते न वेति विषये[11] निर्णयमाह—**तदेतदिति** । तल्लक्षितमेतदु[12]दाहृतं त्रिविधं समवायिकारणादिभेदेन त्रिप्रकारं कारणं भावानां भावरूपाणां कार्याणामेवोप[13]पद्यत इत्यर्थः । भावत्वं नाम नञर्थानुल्लिखितधीविषयत्वम् । अभावस्य तु कथमित्यत आह—**अभावस्येति** ।

---

1 A तत्प्रत्यासन्नत्वाभावात्
2 A असमवायिकारणं
3 B नैवमिति
4 B तत्समवायि (यी) ति
5 B द्विविधा
6 B कार्यैकार्यप्रत्यासत्यश्चेति
7 A B omit सह
8 B निमित्तकारणलक्षणमाह
9 B तान्निमित्तेति
10 A तदुक्तं त्रिविधं कारणं
11 A विषयानिर्णयमाह; B विचारनिर्णयमाह
12 A एतदुदाहर्दं ( तं? )
13 A कार्याणामेवमुपपद्यत इत्यर्थः

निमित्तमेव इतरत् कारणद्वयं नास्तीत्यर्थः। कुत इत्यत आह—**तस्येति**। अभावस्य समवेतत्वाभावेन यत्समवेतमित्यादिना लक्षितं समवायिकारणं न संभवति। अत एव तत्प्रत्यासत्त्यभावादसमवायिकारणमपि न भवति। मुद्गरप्रहारादिनिमित्तमात्रजन्यो घटादिप्रध्वंस इत्यर्थः॥ अभावस्य समवेतत्वाभावे हेतुमाह—**समवायस्येति**। समवायस्य द्वयोर्भावयोर्धर्मत्वेनाभावस्य समवायासंभवादित्यर्थः। तदलं प्रसक्तानुप्रसक्त्या[1] प्रकृतमनुसरामीत्यभिप्रायेण[2] प्रकृतमनुसरन्नुक्तं कारणलक्षणं निगमयति-**तदेतस्येति**। यस्मात् कारणात्करणलक्षणान्तर्गततया[3] प्रसक्तं कारणस्वरूपं निरूपितं तत्तस्मात्[4]कारणादेतस्य पूर्वोक्तस्य त्रिप्रकारस्य कारणस्य मध्ये यत्कारणं कथमपि केनापि प्रकारेणातिशयसहितं तदेव करणमित्यर्थः। **कथमपीति** वदतोऽयमभिप्रायः—प्रमातृप्रमेययोः सतोरपि यदभावात्प्रमानुत्पादकत्वं सोऽतिशयः। यदनन्तरं प्रतिपत्तेर्जन्म चा[5] ( सतः ? ) साधारणकारणता वा प्रमाकरणानुग्राहकत्वं वाऽव्यभिचरितार्थत्वं[6] वेत्यादयः प्रकाराः सूरिभिरुत्प्रेक्षिताः। तत्र केनापि प्रकारेणेति[7] स्वाभिमतमतिशयं स्वयमेव स्पष्टीकरिष्यत्यविलम्बेन प्रमोत्पादकत्वमतिशय[8] इति[9]। प्रमालक्षणं[10] निगमयति—**तेनेति**। येन कारणेन[11] प्रमाकरणे निरूपिते तेन। एवमुक्तया रीत्या लक्षणं व्यवस्थितमेव निश्चितमेवेत्यर्थः। किं तल्लक्षणं तत्राह—**प्रमेति**। ननु लक्षणान्तरे परिपन्थिनि जाग्रति कथमस्य व्यवस्थितत्वमित्याशङ्क्य पराभिमतं प्रमाणलक्षणमनूद्यावद्यति[12]—**यत्त्वित्यादिना तन्नेत्यन्तेन**[13]। सर्वे गत्यर्था ज्ञानार्था इति न्यायेनानधिगतस्या-

---

1 B प्रसक्त्यानुप्रसक्त्या
2 B अनुस्मरामी
3 A कारणलक्षणान्तर्गततया
4 A omits तत्
5 A सतः
6 A प्रचरितार्थत्वं
7 B omits इति
8 B प्रमोत्पादकमतिशयः
9 A omits इति
10 A प्रमाणलक्षणं
11 A प्रकारेण
12 A अवद्याति
13 A तन्मत्यंतेन

ज्ञातस्यार्थस्य गन्तृ[1] अवभासकमज्ञातार्थावगाहि[2] ज्ञानं प्रमाणं प्रमितिः । अन्यथा स्मृतेरपि[3] प्रामाण्यप्रसङ्गादिति शङ्कितुरभिप्रायः । ननु तृन्नन्तत्वेन[4] ' न[5] लोकाव्ययनिष्ठाखलर्थतृनाम् ' इति षष्ठीप्रतिषेधाच्छष्ठीसमासासंभवः । तृजन्तत्वे तु तृजकाभ्यां कर्तरीति षष्ठीसमासस्यैव प्रतिषेध इति चेन्मैवम् । उभयत्र कृद्योगलक्षणायाः षष्ठ्याः प्रतिषेधेऽपि[6] शेषलक्षणां षष्ठीमादाय[7] समाससिद्धेरिति । तन्नेत्युक्तं तत्र युक्तिं वक्ति—**एकस्मिन्निति**। धारारूपेण वहन्तीति धारावाहीनि[8] धारावाहीन्येव[9] धारावाहिकानि । स्वार्थे कः[10] प्रत्ययः । न च ज्ञाते ज्ञानं नोत्पद्यते[11] इति युक्तम् । सामग्र्याः प्रतिबन्धाभावात् । जातमपि ज्ञानं प्रमाणं न भवति ज्ञातुरनपेक्षितत्वादिति चेन्न । प्रामाण्यस्य तदायत्तत्वाभावात् । अनिच्छतोऽपि पथि गच्छतः पुंसो दुर्गन्धज्ञानादौ तथात्वदर्शनात् । न च स्मृतेः प्रामाण्यप्रसङ्गः[12] । अनुभवपदेन व्यावृत्तिसिद्धेरिति संतोष्टव्यमायुष्मतेति । ननु घटस्यैकत्वेऽपि विशेषणीभूतानां कालकलारूपाणां क्षणानामन्योन्यत्वेन[13] तद्विशेषण[14] ( णा ? ) विशिष्टविषयाण्यपि ज्ञानान्यनधिगतार्थानि भविष्यन्तीति शङ्कामनूद्य[15] पराकरोति—**न चेति**[16] । तत्र हेतुमाह—**सूक्ष्मेति** । सूक्ष्मकालभेदग्रहाभ्युपगमे दोषमाह—**भेदग्रह इति** । क्रिया क्रियातो विभागो

---

1 A अधिगन्तृ

2 A अज्ञातार्थागावगाहि

3 A omits अपि

4 A नूनतत्वेन B तृनंतत्वेन

5 B omits न

6 A has twice प्रतिषेधात् षष्ठीसमासासंभवः तृजन्तत्वे तु तृजकाभ्यां कर्तरि इति षष्ठीसमासस्यैव प्रतिषेध इति चेत् मैवं उभयत्र कृद्योगलक्षणायाः षष्ठ्याः प्रतिषेधात् षष्ठीसमासासंभवः। तृजन्तत्वे तु तृजकाभ्यां कर्तरि इति षष्ठीसमासस्यैव प्रतिषेध इति चेत् मैवं उभयत्र कृद्योगलक्षणायाः षष्ठ्याः प्रतिषेधेऽपि

7 A षष्ठीमादाय ति (?)

8 A omits धारावाहीनि

9 B धारावाहिन्येव

10 A कप्रत्ययः

11 B नोत्पद्येत

12 B प्रसङ्ग अनुभव

13 A अन्यातुत्वेन (?)B अन्यान्यत्वे

14 A तत्तद्विशेषणाविशिष्टविषयाण्यपि B तत्तद्विशेषण

15 B अनूद्यापाकरोति

16 A नचेत्ति

विभागात् पूर्वसंयोगनाशः[1] उत्तरसंयोगोत्पत्तिरिति[2] न्यायेन प्रसिद्ध-कालभेदानां क्रियादिसंयोगान्तानां चतुर्णां शतपत्रशतं[3] मया सूच्या युगपद्भिन्नमिति यौगपद्याभिमानः सर्वलोके[4] प्रसिद्धो न स्यादिति भावः। ननु प्रमाकरणं प्रमाणमित्युक्तं तत्र किं करणमित्यपेक्षायां साधकतमं करणमित्युक्तम्। ततश्च सर्वेषां कारणानां क्रियाप्रसिद्ध्यै[5] व्यापारित्वा-[6]विशेषाद् व्यापारवत्करणमिति व्यापारवत्त्वेन कर्त्रादिवैलक्षण्यस्य[7] दुर्ज्ञान-त्वात् संदिहानः पृच्छति—**नन्विति**। उत्तरमाह—**उच्यत इति**। प्रमा-तरि सति[8] प्रमा भवति न भवति च, प्रमेये सत्यपि भवति न भवति च। इन्द्रियसंयोगादौ[9] तु सति भवत्येवेत्यनेनातिशयेन प्रमात्रादिवैलक्षण्यस्य[10] सिद्धेस्तस्यैव करणत्वं नान्यस्येत्यर्थः। उपपादितमर्थमुपसंहरति—**अत इति**। यतः कर्त्रादिवैलक्षण्यं निरूपितमतः प्रमाकरणत्वादिन्द्रिय-संयोगादिरेवार्थः प्रमाणमित्यर्थः। **इन्द्रियसंयोगादिरिति**। इन्द्रियं च संयोगश्च तावादी यस्य स तथोक्तः। आदिशब्देन निर्विकल्पकज्ञानादि गृह्यते। पुल्लिङ्गत्वानिर्वाहायार्थशब्दोऽध्याहर्तव्यः। प्रमाणसामान्यलक्षणं सप्रपञ्चमभिधाय विशेषलक्षणानि वक्तुं विभजते—**तानीति**। प्रमाकरणत्व-[11]लक्षणेन लक्षितानीत्यर्थः। तानेव चतुरः प्रकारान् भगवदक्षपादसूत्र-[12]संवाददर्शनेन द्रढयति[13]—**तथा चेति**। सूत्रमपि प्रमाणचतुष्टयं प्रतिपादयती-त्यर्थः। प्रमाणचतुष्टयप्रतिपादकं सूत्रं पठति—**प्रत्यक्षेति**। प्रमाणप्रमेये-त्यादिना प्रथमसूत्रेण षोडश पदार्थानुद्दिश्य तत्त्वज्ञानान्मोक्षप्राप्तिर्भवती-[14]त्यभिधाय[15] ( प्रायः ? ) तत्तत्त्वज्ञानं[16] कथं मोक्षं साधयतीत्यपेक्षायां 'दुःख-

---

1 B पूर्वसंयोगनाशः
2 A adds उत्तरसंयोगनाशः
3 A शतपत्रपत्रशतं
4 A सर्वलोकप्रसिद्धो
5 B क्रियाप्रसिद्धौ
6 A व्यापारत्वाविशेषात्
7 A वैलक्षण्यदुर्ज्ञानत्वात्
8 A प्रमातरि सत ( सति ? )
9 A संयोगादौ च सति
10 A वैलक्षण्यसिद्धे
11 B प्रमाकरणत्वेन लक्षितानीत्यर्थः
12 A भगवानक्षपादः
13 B दृढयति
14 B तत्त्वज्ञानात्
15 A भवतीत्यभिप्रायः
16 B omits तत्

जन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावा[1]दिति ’ द्वितीयसूत्रेण यदा तत्त्वज्ञानान्मिथ्या[2]ज्ञानमपैति तदा मिथ्याज्ञा[3]नापाये दोषाः अपयान्ति तदपाये प्रवृत्तिरपैति तदपाये जन्मा[4]पैति जन्मापायादेकविंशतिप्रभेददुःखोच्छेदलक्षणो मोक्षः सेत्स्यतीति[5] प्रतिपा[6]द्य **भगवता गौतमेन** प्रथमोद्दिष्टस्य प्रमाणपदार्थस्य प्रत्यक्षानुमानेत्यादिनानेन तृतीयसूत्रेण विभागः कृतः । अतश्चत्वार्येव प्रमाणानि । न त्रीणि ना[7]पि पञ्च विभागस्य न्यूनाधिकसंख्याव्यवच्छेदपरिच्छेदकत्वात् । अन्यथा लक्षणचतुष्टयाभिधानादेव प्रमाणचतुष्टयसिद्धेर्विभागस्य वैफल्यप्रसङ्गादिति भावः । इतरप्रमाणमूलत्वेन ज्येष्ठत्वात् प्रत्यक्षस्य प्रथमं पृथक् प्रमाणत्वेन प्रसिद्धत्वाद्विप्रतिपन्नपुरुषप्रतिपादकत्वेन प्रधानत्वा[8]दनन्तरमनुमानस्य तद[9]नु प्रत्यभिज्ञानप्रत्यक्षरूपत्वादुपमानस्यानुमानान्तर्भावनिराकरणार्थं सूत्रकारेणानुमानानन्तरमुपदिष्टत्वाच्चोपमानस्य पश्चाच्छब्दस्योद्देश इति विवेकः[10] ।

ननु प्रत्यक्षमित्यत्र कः समासः । यद्यक्षमक्षं प्रति वर्तते इत्युपकुम्भादिवदव्ययीभावो विधीयते[11] तदा विशेष्यनिघ्नता भज्येत । अथ ‘ कुगतिप्रादयः ’ इति प्रतिगतमक्षं प्रत्यक्षमिति तत्पुरुष इष्यते । एवमपि ‘ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ’ इति स दोषस्तदवस्थ एवेति चेत् पीतपा[12]तञ्जलजलानामेतच्चोद्यं चमत्कारं न करोति । **वार्तिककृता कात्यायनेन** तत्रैव ‘ प्राप्ता[13]पन्नालंपूर्वगतिसमासेषु प्रतिषेधः ’ इति परवल्लिङ्गतायाः प्रतिषेधेनाभिधेय[14]लिङ्गतोपपत्तेश्चक्षुरादौ प्रत्यक्षशब्दस्य गोपङ्कजादिवद्रूढ्या वृत्त्यु[15]प-

---

1 A B तदनन्तराभावाद्
2 A मिथ्याज्ञानमुपैति
3 A मिथ्याज्ञानाय ये
4 A जन्मापैति
5 A omits इति
6 A प्रतिपादयिष्यता
7 A omits अपि
8 A B प्रधानत्वाच्चानन्तरम्;
9 B तदं (?) नु?
10 A विभागः
11 A विधीयेत
12 A पीतपाताञ्जलानां
13 B अलपूर्व
14 A लिङ्गतोत्पत्तेः
15 A प्रवृत्त्युपपत्तेः

पत्तेरिति । तदलं विस्तरेण संग्रहव्याख्याने इति [1]प्रत्यक्षस्य लक्षणं वक्तु[2]माकाङ्क्षामुद्भावयति—**किं पुनरिति** । पुनःशब्दो वाक्यालङ्कारे । [3]प्रत्यक्षस्य लक्षणमिति [4]प्रश्नस्यार्थः । तल्लक्षणमभिधत्ते—**साक्षा[5]त्कारिणीति** । साक्षात्[6]कारिणी चासौ प्रमा च सा तथोक्ता । स्त्रियाः पुंवद्भाषितपुंस्का[7]दनङ् । स[8]मानाधिकारे स्त्रियामपूरणीप्रिया-दिषु इति पुंवद्भावः । तस्याः करणं प्रत्यक्षमित्यर्थः । कीदृशी सा[9] साक्षात्कारिणी प्रमेति जिज्ञासायामाह—**साक्षात्कारिणीति** । नन्विन्द्रिय-जन्यत्वमनुमित्या[10]दीनामप्यस्ति ज्ञानमात्रस्य मनोजन्यत्वादिति चेत् तद-सारम् । [11]अज्ञान[12]करणजन्यज्ञानानुवृत्तो ज्ञान[13]करणजन्यव्यावृत्तौ धर्मविशेषः साक्षात्त्[14]वमिति निरुच्यमानत्वादिति । साक्षात्कारिप्रमाया भेदमाह—**सेति**[15] । कुतो द्वैविध्यमित्यत आह—**सवि[16]कल्पकेति** । सक[17]लव्यवहार-निदानत्वेन प्रसिद्धस्य सविकल्पकस्य प्रथममुद्देशः । निर्विकल्पकज्ञाना-नङ्गीकारे संबन्धिदर्शनात् संबन्ध्यन्तरे स्मृतिरुत्पद्यत इति न्यायेन वाचकशब्दस्मरण[18]भावात् सविकल्पकमेव नोदयमासादयेदिति द्वैविध्य-सिद्धिरिति भावः । तत्करणभेदमाह—**तस्याः करणमिति** । कथं त्रयः प्रकारा इत्याशङ्क्य तानेव प्रकारान् दर्शयति—**कदाचिदित्यादिना** । कदेन्द्रियं करणमिति बुभुत्सायामाह—**यदेति** । इन्द्रियस्य निर्विकल्प[19]क-प्रमां प्रति कारणत्वं दर्शयिष्यन् ज्ञानोत्पत्तिप्रक्रियां [20]प्रदर्शयितुं प्रतिजानीते

---

1 B प्रत्यक्षलक्षणं
2 A वक्तुमाहाङ्क्षां
3 A प्रत्यक्षं किंलक्षणमिति; B प्रत्यक्षं किंलक्षणं
4 A प्रश्नार्थः
5 A B साक्षात्कारीति
6 B साक्षात्कारिणी च सा
7 A B पुंस्कादनङः
8 A B समानाधिकरणे
9 A B omit सा
10 B अनुमित्युपामेत्यादीनां
11 A अज्ञात
12 B अनुभवानुवृत्तौ ज्ञानकरणजन्य-ज्ञानव्यावृत्तो
13 A ज्ञातकिरणजन्य
14 A B साक्षात्त्वम्
15 A omits सेति
16 A सविकल्पेति
17 B सविकल्पकव्यवहार
18 A स्मरणाभावात्
19 B निर्विकल्पप्रमां
20 B दर्शयितुं

—**तथाहीति**। प्रक्रियां दर्शयति—**आत्मेति**। सुषुप्त्यवस्थायां मनसः सर्वाणीन्द्रियाणि परिहृत्य पुरीतति वर्तमानत्वेन प्रलीनमनस्कस्यात्मनो ज्ञातृत्वाभावादा[1]त्ममनःसंयोगेन भवितव्यम् । सत्यप्या[2]त्ममनःसंयोगे स्वप्नावस्थायामुपरतेन्द्रियग्रामस्य बाह्यविषयज्ञानाभावादिन्द्रियाणां च मनसश्च संबन्धेन भवितव्यम् । सत्यप्येतस्मिन् सर्वस्मिन् बाह्यार्थस्य चेन्द्रियस्य च संबन्धाभावे प्रतीत्यनुदयाच्चतुर्णां संबन्धेन भवितव्यमिति भावः । ननु चक्षुरुन्मीलनस[3]मयानन्तरमनेकयोजनास्थितमार्तण्डमण्डलमुपलभ्यते । तथा च[4] राजमन्दिरे भेर्यां[5] ताड्यमानायां स्वमन्दिरमध्यमध्यासीनस्य पुंसः शब्दप्रतिपत्तिः संजायते । तथा पण्यवीथ्यां पर्यटत[7]ः पुष्प[8]वाटिकास्थितपुष्पगन्धोप[9]लब्धिर्दृश्यते । तत्कथमिन्द्रियार्थयोः संबन्ध इत्युच्यत इत्याशङ्क्याह—**इन्द्रियाणामिति** । विमतानीन्द्रियाणि प्राप्य[10] प्रकाशकानि बाह्येन्द्रियत्वात् । त्वगिन्द्रियवत् । दृष्टो हि लाघवातिशयेन तेजसो वेगातिशयो यदुदयाचलचूडावलम्बिन्येव मयूखमालिनि भुवनोदरेष्वालोकः प्रसरीसरीति । तद्वन्नयनोन्मीलनानन्तरं नयनरश्म[11]यः सूर्यमण्डलं प्राप्यैव प्रकाशयन्ति । तथा वीचीतरङ्गन्यायेन कर्णप[12]थप्राप्तस्यैव शब्दस्योपलब्धिः । तथा गन्धाधारत्वेन स्थितानां पु[13]ष्पावयवानां घ्राणस्य च संबन्धे सत्येव गन्धोपलम्भसंभव इति न काचिदनुपपत्तिरिति भावः । किमतो यद्येवं तत्राह—**तत इति** । यत इन्द्रियार्थयोः संनिक[14]र्षः साधितस्ततोऽर्थसंबद्धेनेन्द्रियेण निर्विकल्पकं

---

1 A आत्मनः
2 B omits अपि
3 A B समनन्तरम्
4 A B omits च
5 A भेर्याशङ्खः
6 A omits ताड्यमानायां स्वमन्दिरमध्यमासीनस्य पुंसः शब्दप्रतिपत्तिः संजायते
7 B पर्यतटः ( टतः ? )
8 B पुष्प
9 B गन्धोपलब्धि
10 A B प्राप्तप्रकाशकानि
11 B नयनरश्मयः
12 A B कर्णपथं
13 B पुष्पावयवानां
14 A संनिकर्षसाधितः

ज्ञानं जन्यत इति योजना । निर्विकल्पकस्य स्वरूपमाह—**वस्तुमात्रेति** । वस्त्ववगाहित्वं सविकल्पकेऽप्यस्तीति तन्निवृत्त्यर्थं मात्रग्रहणम् । मात्र[1]वचोर्थमाह—**नामेति** । [2]नाम संज्ञा । जातिर्ब्राह्मणत्वा[3]दिः । आदिशब्देन गुणक्रियादीनां ग्रहणम् । तेषां योजना विशेषणत्वेन संबन्धः । तेन हीनं तद्रहि[4]तमित्यर्थः । निर्विकल्पकज्ञानमभिनीय दर्शयति—**किंचिदिदमिति** । नन्विन्द्रियस्य करणत्वं वक्तुमुपक्रम्य ज्ञानोत्पत्तिप्रकारः [5]कथं कथ्यत इत्यत्रा[6]ह—**तस्येति** । निर्विकल्पकज्ञानस्येत्यर्थः । अत्र दृष्टान्तमाह—छिदिक्रियाया इति । व्यापारवद्धि करणमिति सद्भावाद् व्यापारो वक्तव्य इत्यत आह—**इन्द्रियार्थेति** । तज्जन्यस्तज्जन्यजनकोऽवान्तरव्यापार [7]इन्द्रियजन्य इन्द्रियार्थसंनिकर्ष इन्द्रियजन्यज्ञानजनकः । फलकरणयोर्मध्ये वर्तमानत्वादवान्तरत्वम् । यथाहुः ।

**‘ अन्तराले तु यस्तत्र व्यापा[8]रः कारकस्य सः । ’** इति ।

अत्रापि दृष्टान्तमाह—**छिदाकरणस्येति** । किमत्र फलं तत्राह—**निर्वि[9]कल्पक इति** । तत्करणस्य तदेव फलमित्येतत् कुत्र दृष्टमित्यत्राह—**[10]परशोरिति** । इन्द्रियस्य स[11]व्यापारफलस्य [12]करणत्वमवसितम् । इन्द्रियार्थसंनिकर्षस्य किमवान्तरव्यापारीकृत्य किं वा फलमुद्दिश्य करणत्वमिति जिज्ञासते—**कदेति** । यदा सविकल्पकं ज्ञानमुत्पद्यते तदेन्द्रियार्थसंनिकर्षः करणमित्यन्वयः । कदा तच्च ज्ञानमुत्पद्यत इत्यत आह—**निर्विकल्पकेति** । त[13]दनेन निर्वि[14]कल्पकस्य ज्ञानस्य करणत्वमुक्तं भवति । अन्यथा संज्ञास्मरणभावे ‘ नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते ’ इति

---

1 A मात्रापोद्यर्थमाह; B मात्रत्वोद्यमाह
2 A omits नाम
3 B ब्राह्मणत्वादि
4 A त......हित
5 A omits कथं
6 B इत्यत आह
7 A has twice इन्द्रियजन्यइन्द्रियार्थसंनिकर्ष
8 A व्यापारकारकस्य
9 A निर्विकल्पकमिति; B निर्विकल्पक
10 A परसोरिति (?)
11 A व्यापारफलस्य; B सव्यापारस्य
12 A कारणत्वं
13 B तदानेन
14 A निर्विकल्पकज्ञानस्य

न्यायेन सविकल्पकस्योत्पादो न स्यादिति। तस्य स्वरूपमाह—विशेषणेति। कानि तानि विशेषणानीत्यत आह—नामेति । अभिनीय दर्शयति—डित्थोऽयमिति । अत्र करणव्यापारफलानि क्रमेण विविनक्ति—तदेत्या[1]दिना । ज्ञानस्य करणत्वमुक्तं तत् कदेत्याकाङ्क्षति —कदा पुनरिति । गुणवत्युपादेयत्वबुद्धिरुत्पद्यते,[2] दोषवति हेयत्वबुद्धिः तदुभयाभाववत्युपेक्षणीयताबुद्धिरित्यर्थः। अत्र करणव्यापारफलानि विविनक्ति—तदेत्यादिना। नन्वेकस्मिन्[3] पक्षे सविकल्पकहानोपादानादिबुद्धिषु[4] सर्वत्रेन्द्रियस्यैव करणत्वमुपपद्यते न संनिकर्षादेः। स्वाङ्गमव्यवधायकमिति न्यायेनान्तरालिकस्य तस्य व्यापारवत्त्वोपपत्तेरित्याशङ्क्यापरितोषात्[5] पक्षान्तरं लक्षीकरोति[6]—कश्चिदाहेति। करणस्य भेदमभिधाय संनिकर्षस्य भेदमाह—इन्द्रियार्थयोरिति। तानेव षट् प्रकारान् दर्शयति—तद्यथेति। द्रव्यस्य सर्वाश्रयत्वेन प्रधानत्वात्तत्संबन्धस्य संयोगस्य प्रथमं ग्रहणमनन्तरं तदाश्रितगुणसंबन्धस्य ततस्तदाश्रितसामान्यसंबन्धस्य ततो[7] भावधर्मस्य समवायस्य पश्चात्तदाश्रितसामान्यसंबन्धस्यान्ते विशेषणविशेष्यभावस्येति विवेकः। अत्र संयोगसमवाययोर्मुख्यः संबन्धव्यवहारः संबन्धो हीत्यादिलक्षणसद्भावात्। तदभावेऽप्यन्यत्रोभयत्र[8] दत्तपदत्वादिसंबन्धव्यपदेश[9] इति।

संयोगस्य साक्षात्कारिप्रमाहेतुत्वं कदेत्यत आह—यदेति। घटो विषयो यस्य तत्तथोक्तम्। अत्र किमिन्द्रियं को वा विषयः को वा संबन्ध इत्यपेक्षमाणं[10] प्रत्याह—तदेति। चक्षुर्घटयोः संबन्धः संयोग इत्युक्तं तत्रोपपत्तिमाह—अयुतेति। चक्षुर्घटयोः परस्परपरिहारेण पृथगाश्रयाश्रित-

---

1 A निर्विकल्पकमित्यादिना
2 A गुणवति; B गुणवति वस्तुन्य (न्यु ?) पादेयत्व
3 B तत्र ( नन्व ? ) स्मिन् पक्षे
4 B हानोपादानबुद्धिषु
5 A B व्यापारत्वोपपत्तेः
6 A कक्षीकरोति
7 A ततो धर्मस्य
8 B अन्यत्रोभयदत्तपदत्वात्
9 A omits दत्त
10 B इत्यपेक्ष्यमाणं

त्वादिति भावः । त्रिपुटीप्रत्यक्षवादिनः प्राभाकरा[1] आत्मनः स्वप्रकाश-संविदा ( संबन्धा ? ) श्रयत्वेन[2] प्रत्यक्षत्वमाचक्षते । स्वप्रकाशचिद्रूपत्वेना-[3] परोक्षत्वमात्मनो वदन्ति अनिर्वचनीयवादिनो वेदान्तिनः । तन्मतद्वयं निराकर्तुमाह—**एवमिति** । यथा घटस्य ग्राह्यत्वमस्त्येवमात्मनोऽपीत्येवं-शब्दार्थः । आत्मविषयं ज्ञानमभिनीय दर्शयति—**अहमिति** । अत्र किमिन्द्रियं को वार्थः कस्तयोः संबन्ध इत्यत्र आह—**तदेति** । इद-मत्राकूतम्—न तावत्[4] स्वप्रकाशसंविदाश्रयत्वेनात्मनः प्रसिद्धिः, संविदः स्वप्रकाशकत्वासिद्धेः । विषयविषयि[5]ज्ञानेनात्मनो भासमानतानुपपत्तेश्च । न ह्यन्यविषयज्ञानेऽन्यस्य स्फुरणं संभवति । स्फुरणे[6] वाच्ये तदवेद्यत्वप्रस-ङ्गात् ' यस्यां संविदि योऽर्थोऽवभासते स तस्या विषयः ' इति ' शालिका-[7] (क?)नाथस्य वचनात् । घटज्ञानवानहमिति[8] ज्ञानाश्रयत्वेन सर्वानुभवसिद्ध-तया कुतश्चिद्रूपत्वमात्मनः कुतस्तरां स्वप्रकाशकत्वं[9] कुतस्तमां स्वप्रकाशत्वे-नापरोक्षत्वम् । अत्रायं पुरुषः स्वयंज्योतिरित्याद्यागमादात्मनः स्वप्रकाश-[10]कत्व ( त्वमे ? ) वावगच्छामीति चेन्मैवं मंस्थाः । अनुभवविरोधेन ग्रावप्लवनादिवाक्यवदुपचरितार्थत्वादित्यलमतिप्रसङ्गेन ।

द्वितीयस्य संबन्धस्य साक्षात्कारिप्रमाहेतुत्वं दर्शयति—**यदा[11] चक्षुरा-दिनेति** । प्रथमेनादिशब्देन घ्राणरसनत्वगिन्द्रियाणां ग्रहणम् । द्वितीयेन गन्धरसस्पर्शानामिति । सुखादिग्रहणेप्ययमेव[12] संबन्ध इत्याह—**एवमिति** । ननु[13] परिमाणादिग्रहणेप्येतावतैव कारणेनालं[14] किम् । नेत्याह—**घटगतेति** ।

---

1 A प्राभाकारा
2 A प्रकाशसंबन्धाश्रयत्वेन
3 A omits स्व
4 A ननु तावत्
5 A B omit विषयि
6 A वा तदवेद्यत्व; B स्मरणे वा तद्वेद्य-त्वप्रसङ्गात्
7 A शालिकानाथस्य
8 A adds पटज्ञानवानहं
9 A स्वप्रकाशत्वं
10 A स्वप्रकाशत्वमेवावगच्छामि ; B स्वप्रकाशत्वमवगच्छामीति चेत्
11 A तदा चक्षुरादिना
12 A सुखादिग्राहको
13 A परिमाणग्रहणे; B नन्वपरिमाण-ग्रहणे
14 A करणेन

चतुष्टयसंनिकर्ष इति चतुर्णामिन्द्रियतदवयवार्थतदवयवानां[1] परस्परसंबन्धे संबन्धा अपि चत्वारो भविष्यन्तीत्यर्थः। ननु संयुक्तसमवायेना[2] (नैवा?)लं किं चतुष्टयसंनिकर्षेणेत्याशङ्क्य तदभावे परिमाणग्रहणाभावादन्वयव्यतिरेकाभ्यामवधृतसामर्थ्येन[3] कारणत्वमङ्गीकरणीयमित्याह—**सत्यपीति**। अयमाशयः। वृक्षवाटिकायां पर्यटतः पुरुषस्योच्चतराशिखरिशिखरमध्यमध्यासीने शाखिनि किमयं पुरुषद्वयस आहोस्विद्द्विजदघ्न[4] उत तालमात्र इति संदेहो जायते। नयनरश्मीनामन्तराले[5] विशीर्णावयवानामर्थप्राप्त्यभावात्[6] तन्निकटमटतः संदेह एव नोदयमासादयेत् इति चतुष्टयसंनिकर्षसंभवेनायमेतावत्परिमाण इत्यवधारणसंभवात्। अतस्तद्भावाभावानुविधायिनः कारणत्वं सिद्धमिति चतुष्टयसंनिकर्षमुदाहृत्य[7] दर्शयति—**यथेति**।

तृतीयस्य संबन्धस्यापरोक्षप्रमाहेतुत्वप्रकारं दर्शयति—**यदा पुनरिति**[8]। तत्रोपपत्तिं[9] कथयति—**यत इत्यादिना**। चतुर्थस्य संबन्धस्यापरोक्षप्रमाहेतुत्वं[10] जिज्ञासते—**कदेति**। उत्तरमभिधत्ते—**यदेति**। कर्णशष्कुल्यवच्छिन्नं[11] नभः श्रोत्रम्। शब्दोऽपि तद्गुणः। अतस्तयोः समवायः। शब्दस्य गुणत्वेऽनुमानमभिधीयते। शब्दो गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रिय[12]ग्राह्यत्वात्। रूपादिवत्। शब्दः क्वचिदाश्रितो[13] गुणत्वादित्यनेन पृथिव्याद्याश्रयत्वानुपपत्तावाकाशाश्रयत्वे सिद्धे स च गुणत्वावान्तरजात्या स्वसमानजातीयगुणवतेन्द्रियेण गृह्यते। बाह्येन्द्रियग्राह्यविशेषगुणत्वात्। रूपादिवत्। ततश्च श्रोत्रसमवायाच्छब्दगुणोपपत्तिरिति। शब्दत्वादिग्रहणं पञ्चमसंबन्धादित्याह—**यदा पुनरित्यादिना**।

---

1 A इन्द्रियतदवयवानां
2 B संयुक्तसमवायेनैवालं
3 A सामर्थ्यत्वेन; B अवधृतसामर्थ्यत्वेन
4 B आहोश्वि (स्वि ?) द्
5 A नायनरश्मीनां;
6 B विशीर्णावयना
7 A चतुष्टयसंनिकर्षसंभवेनामुमुदाहृत्य
8 A omits यदा पुनरिति
9 A अत्रोपपत्तिं
10 A प्रमाणहेतुत्वं
11 B कर्णशकुल्यवच्छिन्नं
12 A बाह्यैकेन्द्रिय
13 A क्वचिदाश्रयतो

'भावान्तरमभावो हि कयाचित्तु व्यपेक्षया ।'

इत्यभावाख्यः पदार्थ एव नास्तीति प्रभाकरादयः प्रवदन्ति । तन्मतं प्रतिक्षेप्तुं षष्ठसंबन्धादभावस्य[1] ग्रहणाकाङ्क्षां दर्शयति—**कदा पुनरिति** । उत्तरमाह—**यदेत्यादिना** । अभावग्रहणमभिनीय दर्शयति—**इह भूतल इति** । व्यावर्तकं विशेषणं व्यावर्त्यं विशेष्यम् । घटो नास्तीत्युक्ते कुत्रेत्याकांक्षायामिह भूतले इत्युच्यते । तत्र भूतलस्य व्यावर्तकत्वाद्विशेषणता, घटाभावस्य व्यावर्त्यत्वाद्विशेष्यता । अघटं भूतलमित्यत्र तु घटाभावस्य व्यावर्तकत्वाद्विशेषणतेति[2] । भूतलस्य व्यावर्त्यत्वाद्विशेष्यतेति[3] । अभावाभावे अभावशब्दप्रत्यययोर्निरालम्बनत्वप्रसङ्गादभावोऽभ्युपगन्तव्य[4] इति भावः । तदनेनाभावस्य षष्ठप्रमाणगम्यत्वं प्रत्युक्तम् । तस्य पृथक्प्रमाणत्वाभावादिति । आत्मनि सुखाद्यभावग्रहणमस्मादेव संबधादित्याह—**यदा पुनरित्यादिना** । आत्मनि सुखं नास्तीति विशेष्यत्वेन ग्रहणमिति । गकारे घत्वाभावः केन संबन्धेन गृह्यत इत्यपेक्षायां समवेतेन[5] विशेषणविशेष्यभावेनेत्याह—**यदेति** । घत्वरहितो[6] गकार[7] इति विशेषणत्वेन[8] गकारे घत्वं नास्तीति विशेष्यत्वेन ग्रहणमित्यर्थः । नन्वितरत्राप्यभावग्रहणं[9] प्रदर्श्यताम्[10]—मित्याशङ्क्य सर्वं प्रदर्शितप्रायमेवेति मत्वा निगमयति—**तदेवमिति** । तत् तस्मात्समानन्यायत्वादेवमुक्तया[11] रीत्या संक्षेपतः सामान्येन पञ्चविधसंबन्धसंबद्ध[12]विशेषणविशेष्यभावेन[13] संबन्धेनाभावग्रहणमुक्तं भवति । अवशिष्टं[14] बुद्धिमता स्वयमूहितुं शक्यम् । रसत्वरहितं घटरूपम् । रूपे[15] रसत्वं नास्तीति संयुक्तसमवेतविशेषणविशेष्यभावेनाभिन्नं रूपत्वम् ।

---

1 A षड्विधसंबन्धात्
2 A omits इति
3 A विशेषतेति
4 B भावशब्दप्रत्ययस्य
5 A समवेति; B समवेतविशेषण
6 A adds यत्तु
7 A गकारो
8 B गकारो विशेषणत्वेन
9 A अभावस्य
10 B प्रदर्शतां
11 A उक्तरीत्या
12 A संबन्धसंबन्धि
13 A विशेष्यताभावेन
14 A adds च
15 A गत्वं गत्वे भेदो नास्तीति स भवेत समवेतविशेषणविशेष्यभावेन

रूपत्वे भेदो नास्तीति संयुक्तसमवेतसमवेतविशेषणविशेष्यभावेनाभिन्नं गत्वं गत्वे भेदो नास्तीति समवेतसमवेतविशेषणविशेष्यभावेन ग्रहण-मिति भावः । समवायस्याप्रत्यक्षत्वमन्ये[1] मन्यन्ते तन्मतं निरसितुमभाव-वच्छष्ठसंबन्धात् समवायस्य ग्रहणमित्याह—**एवं समवायोऽपीति** । पट-समवायवन्तस्तन्तव इति समवायस्य विशेषणविशेष्यत्वेन[2] ग्रहणमित्यर्थः । रूपत्वसमवायवद्रूपं रूपे रूपत्वसमवायः । शब्दत्वसमवायवान् शब्द इत्युदा-[3]हरणीयम् । उक्तं संनिकर्षषट्कमुपसंहरति—**तदेवमिति** । यतः संबन्धिनोऽभिमता[4] अत[5] एवमुक्तप्रकारेणापरोक्षप्रमाहेतुः षट्प्रकारः संबन्धो व्याख्यात इत्यर्थः । अत्र[6] संग्रहश्लोकश्च—

**घटतन्नीलनीलत्वशब्दशब्दत्वजातयः ।**
**अभावसमवायौ च ग्राह्यौ संबन्धषट्कतः[7] ॥ १ ॥**

विदुषां कण्ठभूषार्थं[8] प्रतिपादितस्य प्रमेयजातस्य कारिकया संग्रहश्च क्रियत इत्याह—**संग्रहश्चेति** । उक्तप्रमेयानन्तरवतानेन[9] कारिका निगद-व्याख्यातेति ।

ननु[10] साक्षात्कारिणी प्रमा द्विविधा सविकल्पकनिर्विकल्पकभेदादित्यु-क्तम् । तदरमणीयम् । आरोपितविषयत्वेन सविकल्पकस्य प्रामाण्या-संभवात् । वस्तुमात्रावभासिनो निर्विकल्पकस्यानारोपितविषयत्वेन प्रामाण्योपपत्तेश्चेति सविकल्पकस्य प्रामाण्यमसहमानो बौद्धः प्रत्यव-तिष्ठते—**नन्वित्यादिना** । तत्र निर्विकल्पस्य प्रत्यक्षत्वमभ्युपगच्छति[11]—**निर्वि-कल्पकं प्रत्यक्षं भवत्विति** । अत्र प्रत्यक्षशब्देन साक्षात्कारिणी प्रमितिर्वि-वक्ष्यते[12] तत्रैव प्रतिगतमक्षं प्रत्यक्षमिति व्युत्पत्तेरुपपत्तेः । साक्षात्कारि-

1 A omits अन्ये
2 A omits विशेष्यत्वेन
3 A adds शब्दे शब्दसमवायः
4 B अभिहिता
5 B अन्तरेवमुक्तप्रमाणेन
6 A B omit अत्र संग्रह
7 B षड्कतः
8 B कण्ठभूषणार्थं
9 A B उक्तप्रमेयावर्तनेन
10 A omits ननु
11 A अभ्युपगच्छन्ति
12 A विवक्षते

प्रमाया अक्ष[1]जन्यत्वेनाक्षं प्रतिगतत्वात् तत्[2]संबन्धि[3]त्वादितरत्र प्रत्यक्षश[4]ब्दो योगमनपेक्ष्य गोपङ्कजादिशब्दवद्रूढ्या प्रवर्तत[5] इति । निर्विकल्पकस्य प्रत्यक्षत्वे युक्तिमाह—**परमार्थेति** । स्वं स्वीयं रूपं लक्षणं व्यावर्तकं यस्य तत्तथोक्तम् । सर्वतो व्यावृत्तं[6] वस्तुस्वरूपं स्वलक्षणशब्दार्थः[7] । स्वलक्षणस्य परमार्थत्वादनारोपितत्वात्तद्विषयं ज्ञानं प्रत्यक्षमित्यर्थः । ननु निर्विकल्पकवत्सविकल्पकं[8] प्रत्यक्षं भवतु किमपरोद्धमनेनेत्यत[9] आह—**सविकल्पकं त्विति** । तु तथा न भवतीत्यर्थः[10] । तदेव दर्शयति—**कथं प्रत्यक्षमिति** । प्रत्यक्षं न भवतीत्यर्थः । निर्विकल्पकवत्सविकल्पकमपि स्वलक्षणविषयं चेद्भविष्यति प्रत्यक्षमित्याशङ्क्याह—**सामान्यविषयामिति** । सामान्यं कल्पितम् । अतस्तद्विषयत्वात्प्रत्यक्षं न भवतीत्यर्थः । सविकल्पकस्य सामान्यविषयत्वं[11] कुतोऽवसीयते तत्राह—**अनुगतेति** । तत्र दृष्टान्तमाह—**शब्दलिङ्गवदिति** । शब्द आगमः । लिङ्गमनुमानम् । ताभ्यामवगम्यमानोऽर्थः सामान्यात्मना प्रतीयते[12] । न तु सर्वतो व्यावृत्तेः । तद्वत्सविकल्पकमप्यनुगतमेवाकारमवगाहत[13] इत्यर्थः । ननु स्वलक्षणविषयं निर्विकल्पकं प्रत्यक्षं सामान्यविषयं सविकल्पकं प्रत्यक्षं[14] [न?] भवतीति कुतः समायातमिदं वैषम्यं तत्राह । **अर्थजस्येति** । अर्थजन्यत्वेन निर्विकल्पकं ज्ञानं प्रत्यक्षमित्यर्थः । ननु निर्विकल्पकवत्सविकल्पकमप्यर्थजत्वात्प्रत्यक्षं भवतु तत्राह—**अर्थस्य च परमार्थेति** । सांवृतसत्यत्वेऽपि सामान्यस्य परमार्थसत्यत्वाभावात्[15] प्रत्यक्षजनकत्वं नास्तीत्यर्थः । नन्वबाधितत्वात्स्वलक्षणवत्सामान्यं तर्हि परमार्थतः[16] सद्भवतु नेत्याह—**स्व-**

1 A omits अक्ष
2 A omits तत्
3 B तत्संबन्धात्
4 A शब्दे
5 A B वर्तत
6 B व्यावृत्तवस्तुस्वरूपं
7 A omits स्वलक्षणशब्दार्थः
8 A सविकल्पकमपि
9 B तेनेत्यत
10 B संभवतीत्यर्थः
11 A सामान्यविषयं
12 A प्रदीयते
13 B सविकल्पकमित्यनुगतं
14 B omits प्रत्यक्षं and A adds न after प्रत्यक्षं
15 A परमार्थतः
16 B परमार्थसद्भवतु

**लक्षणमिति** । पक्षान्तरं वारयति—**नान्विति** । अबाधितत्वादिति हेतुरसिद्ध इत्यर्थः । तत्र युक्तिं वक्ति—**तस्य प्रमाणेति** । सामान्यं व्यक्तिषु[1] वर्तत इति वदन् वादी प्रष्टव्यो जायते किं कार्त्स्न्येन वर्तत उतैकदेशेनेति । नाद्यः । व्यक्त्यन्तरे तस्य प्रतिपत्त्यनुपपत्तेः । न द्वितीयः । निरंशस्य तस्यैकदेशासंभवात् । अनेन वृत्तिविकल्पेन प्रमाणवद् दृढेन निरस्तः पराकृतो विधिभावोऽस्तित्वं यस्य तत्तथोक्तम् । तस्य तुच्छत्वाच्छशविषाणवदन्यन्तासत्त्वादित्यर्थः । यद्येवं घटोऽयं घटोयमिति व्यवहारस्य का गतिस्तत्राह—**अन्यव्यावृत्त्यात्मन इति** । घटोऽयमित्यघटव्यावृत्तोऽयमित्यर्थः । एवं पटोऽयमित्यपटव्यावृत्तोऽयं[2]मिति । सर्वत्रान्यापोहरूपा[3] जातिः सर्वव्यवहारालम्बनमतः सामान्यस्य परमार्थत्वाभावात्तद्विषयं सविकल्पकं प्रत्यक्षं न भवतीत्यर्थः । समाधत्ते—**नैवमिति** । न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशङ्क्य तत्र युक्तिं कथयति—**सामान्यस्येति** । अयमाशयः । विमतं सविकल्पकं[4] ज्ञानं प्रत्यक्षम् । अबाधितत्वे सत्यपरोक्षावभासितत्वात् । निर्विकल्पकवत् । न[5] चाबाधितत्वमसिद्धं शुक्तिकायामिदं रजतमित्यादिवत् । अत्र[6] बाधकस्यानुपलम्भात् । ननु सामान्यविषयं सविकल्पकं सामान्यं च कृत्स्नैकदेशवृत्ति[7]विकल्पपराहतम् । अतस्तद्विषयस्य प्रत्यक्षत्वकल्पना कथमत्र कल्प्यत[8] इति चेत् तथागततथागतिं[9] वितथां मा कृथाः । समवायलक्षणया वृत्त्या सर्वासु व्यक्तिषु सामान्यं च[10] वर्तत इत्युक्ते कृत्स्नैकदेश[11]विकल्पस्या[12]नवकाशपराहतत्वात् । व्यावृत्तासु व्यक्तिष्वनुगतसामान्यानभ्युपगमे एकाकारप्रत्ययप्रयोगयोर्निरालम्बनतापत्तेश्च । नन्वपोहरूपा जातिरालम्बनमस्त्वि[13]ति चेत् । मैवम् ।

---

1 A has व्यक्तिषु twice
2 A omits अयं
3 A सम्ब (?) अन्यापोहसर्पजातिः
4 A सविकल्पकज्ञानं
5 B न वाबाधितत्वं
6 B omits अत्र
7 B omits वृत्ति
8 B कल्यते
9 A तथान्नातिं; B ताथागततया मातिं
10 A B omit च
11 A विदेश
12 A विकलपस्यावकाश
13 B अस्ति इति चेत

यतो घटोयमित्यघटव्यावृत्तोयमिति यद्युच्येत[1] तर्हि घटाप्रतिपत्तौ न तद्व्यवच्छेदेनाघटप्रतिपत्तिस्तदप्रतिपत्तौ[2] च न तद्व्यवच्छेदेन घटप्रतिपत्तिरिति घटप्रतिपत्तावघटप्रतिपत्तिरघटप्रतिपत्तौ च[3] घटप्रतिपत्तिरिति दुरात्मा दुःपरिहरः परस्पराश्रयवज्रप्रहारस्तव शिरसि पतिष्यति। किं चानुगतसामान्यानङ्गीकारे संकेताविनाभावयोर्दुर्ग्रहत्वेन शब्दानुमानयोरुच्छेदेन[4] तन्निबन्धनः सर्वो[5] व्यवहारो दत्तजलाञ्जलिकः स्यात्। अतः सामान्यं वस्तुभूतमबाधितत्वात् स्वलक्षणवत्। अन्यथा सामान्यविषयसविकल्पानन्तरमर्थक्रियासमर्थवस्तुप्राप्तिर्न[6] स्यादिति विपक्षे बाधकस्तर्कः। न चाबाधितत्वादिति हेतुरसिद्धे[7] (द्धो ?) बाधानुपलम्भात्। न च वाच्यं मणिप्रभायां मणिबुद्धेरिव सविकल्पकस्य[8] पारंपर्येणार्थप्रतिबन्धादर्थप्राप्तिरिति[9]। अर्थासंस्पर्शिनः सविकल्पकस्य स्वाकारसमर्पकत्वानुपपत्तेः। किं च सामान्यमारोपितमिति वदता क्वचित्तस्य वस्तुभूतत्वमभ्युपगन्तव्यम्। भ्रान्तेरभ्रान्तिपूर्वकत्वनियमादिति[10]। तथा च तद्विषयं सविकल्पकं प्रत्यक्षमेवेतीयता प्रबन्धेनोपपादितमर्थमुपसंहरति—**तदेवमिति**। येन कारणेन परमतं पराकृतं तेन सविकल्पकनिर्विकल्पकभेदभिन्नायाः प्रमायाः करणं प्रत्यक्षमिन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति सूत्रोक्तं व्याख्यातं विशेषेण निरूपितमित्यर्थः।

उपजीव्यं प्रत्यक्षं निरूप्य तदुपजीवकमनुमानं निरूपयितुमुपक्रमते—**लिङ्गपरामर्शोति**[11]। नन्वनुमानशब्दः किं[12] भावसाधनः किं[13] कर्तृसाधनो

1 B यद्युच्यते
2 B omits तदप्रतिपत्तौ च न तद्व्यवच्छेदेन घटप्रतिपत्तिः
3 B omits च
4 A शब्दानुमानये (यो ?) रुच्छेदे; B शब्दानुमानोच्छेदे
5 A तन्निबन्धनसर्वो; B तन्निबन्धन सर्वव्यवहारी
6 A सामान्यविषयविकल्पानन्तर
7 B हेतुरसिद्धः
8 A मणिप्रभाया
9 A अर्थप्रतिबन्धार्थप्राप्तिरिति
10 A अभ्रान्तपूर्वक
11 B लिङ्गपरामर्श इति
12 A omits किं
13 A B omit किं

वा[1] कर्मसाधनो वा[2] करणसाधनो वा[3]धिकरणसाधनो वा । ल्युट्[4] च [ ३।३।११५ ] कृत्यल्युटो बहुलम् [ ३।३।११३ ] करणाधिकरणयोश्च [ ३।३।११७ ] इति सूत्रैर्भाव[5]कर्तृकर्मकरणाधिकरणेषु ल्युटो विहितत्वादित्याशङ्क्याभिमतां व्यु[6]त्पत्तिं दर्शयति—**येनेति** । ननु करणसाधनस्यानुमानशब्दस्य परामर्शनं[7] परामर्श इति भावसाधनेन परामर्शशब्देन कथं सामानाधिकरण्यं तत्राह—**लिङ्गपरामर्शेन चेति** । फलितमाह—**अत इति** । [8]यतो लिङ्गपरामर्शस्यानुमापकत्वमस्त्यतो लिङ्गपरामर्शोऽनुमानमिति वाचोयुक्तिर्युक्तिमतीत्यर्थः । कोऽसौ लिङ्गपरामर्श इति जिज्ञासायामुदाहरणमुखेनाविष्करोति-**तच्चेति** । धूमादिज्ञानापेक्षया तदिति नपुंसकलिङ्गनिर्देशः[9] । शैत्यं हि यत् सा प्रकृतिर्जलस्येतिवत् । यथाहुर्वृद्धाः—सर्वनामान्युद्देशाभिधेययोरेकत्वमापादयन्ति पर्यायेण[10] तल्लिङ्गभाञ्जि भवन्तीति । धूमादिज्ञानस्य लिङ्गपरामर्शत्वं कुत इत्यत आह—**अनुमितिं प्रतीति** । कासावनुमितिः किं[11] नाम तत्करणमित्याशङ्क्य तदुभयं स्पष्टयति—**अग्न्यादीति**। लिङ्गपरामर्शयोः स्वरूपं जिज्ञासमानः पृच्छति—**किं पुनरिति** । तस्येति तच्छब्देन प्रकृतत्वाल्लिङ्गं परामृश्यते । उत्तरं वक्तुं प्रतिजानीते—**उच्यत इति** । लीनमर्थं गमयतीति लिङ्गशब्दो निष्पन्न इति मनसि निधायाह—**व्याप्तिबलेनेति** । व्याप्तिस्मरणेनानुमापकं लिङ्ग-

---

1 A B omit वा
2 A B omit वा
3 A B omit वा
4 A लुट्
5 A भावकर्तृकरणेषु; B भावे
6 B वु ( व्यु ? ) त्पत्तिं
7 A omits परामर्शनं
8 A omits यतो लिङ्गपरामर्शस्यानुमापकत्वमस्त्यतो लिङ्गपरामर्शोऽनुमानमिति वाचोयुक्तिर्युक्तिमतीत्यर्थः । कोऽसौ लिङ्गपरामर्श इति जिज्ञासायामुदाहरणमुखेनाविष्करोति–तच्चेति
9 A omits निर्देशः । शैत्यं हि यत् सा प्रकृतिर्जलस्येतिवत् यथाहुर्वृद्धाः सर्वनामान्युद्देशाभिधेययोरेकत्वमापादयन्ति पर्यायेण तल्लिङ्गभाञ्जि भवन्तीति। धूमादिज्ञानस्य
10 B omits पर्यायेण तल्लिङ्गभाञ्जि '
11 A किं वा; B किं च

मित्यर्थः । तदुदाहृत्य दर्शयति—**यथेति**। ननु व्याप्तिबलेन गमकं लिङ्ग-मित्युक्तम् । तादृग् गमकत्वं किं धूमेऽस्ति । अस्त्येवेति प्रतिपादयितुं प्रतिजानीते—**तथाहीति** । व्याप्तेः स्वरूपमाह—**यत्रेत्यादिना** । धूमाग्नी सह चरत इति सहचरौ तयोर्भावः साहचर्यम् । तन्नियमो व्याप्तिः । साह-चर्यमात्रं व्याप्तिर्न भवति । किंत्वनौपाधिकः संबन्धो व्याप्तिरिति सूचयितुं नियमग्रहणमित्यर्थः। व्याप्तिमेवाभिनीय दर्शयति—**यत्र धूमस्तत्राग्निरिति**। ननु व्याप्त्या गमकं लिङ्गमित्येतावतैवालम् । किं बलशब्देनेत्याशङ्क्य बल-शब्दस्योपयोगमाह-**तस्यामिति**। व्याप्तौ गृहीतायामेव धूमोऽग्निमनुमापयति नान्यथेत्यर्थः। फलितमाह-**अत इति** । यतो व्याप्तिग्रहणस्यावश्यंभावोऽत इत्यर्थः। अनुमापकत्वादनेनानुमेयज्ञापकत्वादित्यर्थः। लिङ्गस्वरूपं निरूप्य लिङ्गपरामर्शस्वरूपं निरूपयति—**तस्येति** । धूमस्येत्यर्थः । तृतीयज्ञान-मित्युक्ते प्रथमाद्वितीयापेक्षा जायते तृतीयशब्दस्य सापेक्षशब्दत्वात् । अतस्तृतीयज्ञानस्य परामर्शत्वं कथं स्यादित्याशङ्क्य तृतीयज्ञानस्य परामर्शत्वं प्रतिपादयितुं प्रतिजानीते—**तथाहीति** । प्रथमद्वितीयज्ञाना-निरूपणे तृतीयज्ञानस्य निरूपयितुमशक्यत्वात्प्रथमं प्रथमज्ञानं निरूपणी-यम् । तत्तु व्याप्तिग्रहणदशायां संभवति । अतस्तदर्थमुपोद्घातप्रक्रि यया व्याप्तिग्रहणप्रकारं दर्शयति—**प्रथमं तावदिति** । प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरवर्णनमुपोद्घातः । तदुक्तम्—

**'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते'** इति ।

**महानसादाविति** । अग्न्यङ्गारादिरादिशब्दार्थः । तत्र धूमाग्न्योः

1 B अस्ते ( स्त्ये ? ) वेति
2 A अभिनीयत्र
3 B प्रदर्शयति
4 B इत्येव तावतैवालं
5 B नान्यदेत्यर्थः
6 A तृतीयज्ञानपरामर्श
7 A B तच्च
8 A संभवत्यस्तदर्थं
9 A उपोद्घातप्रक्रियाव्याप्तिग्रहणप्रकारं
10 A चिन्ता
11 B प्रचक्ष्यते ( ? )
12 B अग्न्यङ्गारादिशब्दार्थः

स्वाभाविकं[1] संबन्धमवधारयति[2] निश्चिनोतीत्यर्थः । केन निश्चिनोतीत्यत आह—**तेन भूयोदर्शनेनेति** । तद्भूयोदर्शनं कुत्र भवतीत्[3]यत्राह—**महानसादाविति**[4] । भूयोदर्शनमेवा[5]विष्करोति—**भूयो भूय इति**[6] । व्याप्तिमभिनीय प्रदर्शयति—**यत्र[7] धूम इति** । यद्यपि धूमधूमध्वजयोः प्रथमदर्शनेन[8] संबन्धोऽवधारितस्तथापि संबन्धमात्रेणा[9] ( ण नां? ) विनाभावोऽपि[10] त्वनौपाधिकः[11] संबन्धः । स च भूयो भूयः[12] संबन्धग्रहणजनितसंस्कारसहकृतेन चरमप्रत्यक्षेणा[13]ध्यवसीयत इति भावः ।

ननु संबन्धावधारणेनालं किं स्वाभाविकग्रहणेनेत्याशङ्क्य स्वाभाविकपदस्योपयोगमाह—**यद्यपीत्यादिना** । धूमाग्निवन्मैत्रीतनयत्वश्यामत्वयोः[14] संबन्धे समानेऽपि[15] संबन्धः स्वाभाविको न भवति । किं त्वौपाधिकः । उपाधेरागत[16] इति भावः । कस्तत्रोपाधिस्तत्राह—**शाकादीति** । शाकाद्याहारपरिणतिभेदस्यौपाधिकत्वं प्रतिपादयितुं प्रतिजानीते—**तथाहीति** । कश्चिन्मैत्र्याः[17] प्राचीनान् सप्त पुत्रान् श्यामाननुभूयाष्टमः पुत्रो जात इत्याकर्ण्यैत्थमनुमानं[18] प्रयुङ्क्ते[19] । विमतोऽष्टमः[20] पुत्रः श्यामो भवितुमर्हति मैत्रीतनयत्वात् । प्राचीनमैत्रीतनयवदिति[21] । तत्रान्यो ब्रूते—श्यामत्वे मैत्रीतनयत्वं[22] न प्रयोजकं किं तु शाकाद्याहारपरिणाम एवेति भावः । ननु शाकाद्याहारपरिणतिभेदस्योपाधित्वं प्रतिपादयितुमुपक्रम्य प्रयोजकत्वप्रति[23]पादनमयुक्तमित्याशङ्क्य संज्ञाभेदो[24] न संज्ञिभेद इत्याह—**प्रयोजक इति** ।

---

1 B स्वाभाविकसंबन्धं
2 A adds केन निश्चिनोतीत्यर्थः
3 B भवतीत्याह
4 B महानसादौ इति
5 A omits एव
6 A omits इति
7 A यत्र भूय इति
8 B प्रथमदर्शनसंबन्धो
9 B संबन्धमात्रं
10 A संबन्धमात्रेणाविनाभावो
11 A तत्त्वनौपाधिकः
12 B स च भूयसंबन्ध
13 B प्रत्यक्षेणाध्यवसीयत
14 A स्यामत्वयो
15 B संबन्धेऽपि
16 B उपाधिना कृत इति भावः
17 A काश्चित्
18 A इत्याकर्णेत्थ
19 A प्रयुक्ते
20 A अष्टमपुत्रः; B विमता अष्टमपुत्रः
21 A मैत्रतनयवत्
22 A मैत्रतनयत्वं
23 A प्रयोजकप्रतिपादन
24 A संज्ञाभेदेन संज्ञिभेदः

'व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः[1] प्रयोजकः ।
अस्मिन् सत्यमुना भाव्यमित्याशङ्क्य[2] निरूप्यते ॥
समासमाविनाभावावेकत्र स्तो यदा तदा ।
समेन यदि नो व्याप्तिस्तयोर्हीनो[3]ऽप्रयोजकः ॥' इति ।

आभ्यां श्लोकाभ्यामुपाधिः[4] प्रयोजक उपाधिमानप्रयोजक इत्यभियुक्तै-रुच्यत इत्यर्थः । उपाधिर्नाम साधनाव्यापकत्वे सति साध्यसमव्याप्तिः । तदुक्तं वरदराजेन—

'साधनं (ना ?)[5] व्यापकाः साध्यसमव्याप्ता ह्युपाधयः[6]' । इति ।

साध्य[7]समव्याप्तिरुपाधिरित्युक्तेऽनित्यः शब्दः कृतकत्वाद् घटवदिति प्रयोगे सकर्तृकत्वमुपाधिः स्यात् । यत्र यत्र सकर्तृकत्वं तत्र तत्रानित्यत्वम् । यत्र यत्रानित्यत्वं तत्र तत्र सकर्तृकत्वमिति समव्याप्तेः सद्भावात् । अत उक्तं **साधनाव्यापकत्वे[8] सतीति** । तावत्युक्ते तत्रैव घटत्वमुपाधिः स्यात् शब्दे कृतकत्वस्य सत्त्वेऽपि घटत्वाभावात् । अत उक्तं--**साध्यव्याप्ति-रिति** । तावत्युक्ते[9] तत्रैवाश्रावणत्वमुपाधिः स्यात् । शब्देऽश्रावणत्वं नास्ति । यत्रा[10]नित्यत्वं तत्रा[11]श्रावणत्वमास्ति । तस्मादुक्तलक्षणसद्भावात्तस्योपाधित्वं व्यावर्तयितुं समग्रहणम् । यथा जपाकुसुमं स्वसंनिहिते स्फटिके स्वगतं[12] रक्तिमानमाधाय रक्तः[13] स्फटिक इति व्य[14]वहारं जनयति तद्वदुपाधिरपि स्वसंस्पृष्टे[15] साधनत्वाभिमते वस्तुनि स्वनिष्ठां व्याप्तिमासञ्जयति । अत एव स्वस्मिन्निव स्वसंसर्गिणि[16] स्वधर्मासञ्जक उपाधिरित्युपाधिशब्दार्थं निराहुः[17] ।

---

1 B क्वचिद्धर्मः
2 A इति शक्त्या
3 B तयो ही (र्ही ?) नो
4 A उपाधिप्रयोजकः
5 A साधनाव्यापकाः
6 A उपाधयः
7 A omits साध्य
8 A B साधनाव्यापक इति
9 A तावत्युच्यमाने
10 A यत्र यत्र
11 A तत्र तत्र
12 A स्वगतरक्तिमानं
13 A B रक्तस्फटिक
14 A इत्यव्यवहारं
15 A स्वसृष्टे; B स्वसंनिकृष्टे
16 A स्वसार्गीणि
17 A निराहुर्थे

अतस्तेन क्वचित् साध्येन सह दृष्टेनापि व्यापकावधारणा नेष्टा । यथाहु-राचार्याः—

'अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि[1] नैवेष्टा[2] व्यापकांशावधारणा' ॥ इति ।

ननु मैत्रीतनयत्वशामत्वयोः संबन्धे यथोपाधिरस्ति तथा[3] धूम-धूमध्वजयोः संबन्धे किमुपाधिरस्ति । नेत्याह—**न चेति** । उपाधिरस्तीति वदन्वादी प्रष्टव्यः किं योग्योऽस्त्ययुतायोग्यः । न चरमः । अयोग्यस्य शशविषाणवद्दुद्भावनारोहे शङ्काया[4] अनवकाशपराहतत्वादित्याह--**अयोग्यस्येति**[5] । अस्तु तर्हि प्रथमः । तत्राह—**योग्यस्येति** । उपलब्धुं योग्यश्चेद् घटादिवदुपलभ्येत[6] । न चोपलभ्यते तस्मान्नास्तीति निश्चीयत इति भावः । ननु उपलब्धुं[7] योग्यस्योपाधेरुपलभ्यमानत्वं[8] कुत[9] उपलब्धं तत्राह—**यत्रेति** । तादृशमुपाधिकमु[10]दाहरति-**यथेति** । यत्र धूमोऽस्ति तत्राग्निरस्तीति धूमस्याग्निसंबन्धो[11] निश्चेतुं पार्यते । धूमधूमध्वजयोः कार्य-कारणभावस्यान्वयव्यतिरेकाभ्यां निश्चितत्वेन कारणातिपाते कार्य-भावस्यासंभवात्[12] । यत्राग्निरस्ति तत्र धूमोऽस्तीति नियमो नास्ति[13] । अग्नेर्धूमसंबन्धस्यार्द्रेन्धनसंब[14]न्धि[15]निबन्धनत्वादिति भावः ।

'सर्वव्याख्याविकल्पानां द्वयमिष्टं प्रयोजनम् ।
पूर्वत्रापरितोषो हि विषयव्याप्तिरेव च[16] ॥'

इति सद्भावाद्विषयव्याप्त्यर्थमुदाहरणान्तरमाह[17]—**हिंसात्वस्येति**[18] ।

---

1 B तै दृष्टैरपि
2 B नैष्टव्या
3 A तद्व [ त ]
4 A शङ्कायां
5 A योग्यस्येति
6 B उपलभ्यते
7 A उपलब्धं
8 A अनुपलभ्यमानत्वं
9 A उत्वोपलब्धं; B कुत्रोपलब्धं
10 A उपाधिम; B omits उपाधिकम
11 A धूमाग्निसंबन्धो
12 A कार्यभावनस्य; B कार्यभवनस्याभावात्
13 A adds इति
14 B आर्द्रेन्धनसंबन्धनिबन्धनत्वादिति भाव
15 A संबन्धानबन्धनत्वाद् (?)
16 B विषयप्राप्तिरेव वा
17 A सद्भावाविषयाप्त्यर्थः (?)
18 A हिंसास्येति

अत्राहिंसा परमो धर्म इत्यभिमानवानार्हतः पण्डितंमन्यो मन्यते। अग्नी[1] ( ग्नि? ) ष्टोमीयहिंसा अधर्मो हिंसात्वाद् व्यर्थहिंसावदिति । तत्र[2] सकललोकानुग्राहको महाजनपरिगृहीतवेदधर्मपालको वैदिकशिरोमणि-र्ब्रूते—अधर्मत्वे हिंसात्वं न प्रयोजकं किं तु निषिद्धत्वमिति । यत्र निषिद्धत्वं तत्राधर्मत्वं यथाभक्ष्यभक्षणादाविति[3] व्याप्तेः सत्त्वात् । ननु यत्र हिंसात्वं तत्राधर्मत्वं यथा व्यर्थहिंसायामिति व्याप्तिरस्तीति चेत्[4] । तदेतत्पण्डितहृदयपुण्डरीकं नावलम्बते विकल्पासहत्वात्[5] । तथाहि व्यर्थ-हिंसायामधर्मत्वं केन प्रमाणेनावसितं देव( वा? )नां प्रियेण त्वया प्रत्यक्षेणानुमानेनागमेन[6] वा । नाद्यः । तस्यातीन्द्रियत्वेनेन्द्रियग्रहणा-नर्हत्वात् । न द्वितीयः । तद्व्याप्तलिङ्गाभावात् । अतो निषेधशास्त्र-गम्यमिति वक्तव्यम्[7] । तथा[8] सति निष( षि? )द्धत्वमेव अधर्मत्वेप्रयोज-कम्[9] । निषिद्धत्वव्यावृत्त्यामधर्मव्यावृत्तेर्देवपूजादौ[10] दृष्टत्वादिति भावः। निश्चितोपाधेरुदाहरणमभिधाय शङ्कितोपाधेरुदाहरणमभिधत्ते—**मैत्रीतन-यत्वस्येति** । श्यामत्वे साध्ये मैत्रीतनयत्वस्य हेतोः शाकाद्याहारपरि-णतिभेद उपाधिः । पक्षत्वेनाभिमते मैत्रीतनये शाकाद्याहारपरिणतिभेदा-[11]भावेऽपि बाधकाभावान्मैत्रीतनयत्वं प्रति[12] न व्यापक उपाधिः[13] । श्यामिकां प्रति कारणत्वेन व्यापकः । ननु यत्र श्यामत्वं[14] तत्र शाकाद्याहार-[15]परिणातिभेद इति न संगच्छते । श्यामेऽपि[16] नीलोत्पलदलादावुक्तोपाधे-रसंभवादिति चेत् । तदसमञ्जसम् । यतः श्यामत्वं मनुष्यधर्म इति

---

1 A अग्नीषोमीय; B अग्नीष्टोमीय।

2 A अत्र

3 A भक्ष (क्ष्य? ) भक्षणादावतिव्याप्तः सद्भावात्

4 A omits चेत्

5 A कल्पासहत्वात्

6 A प्रत्यक्षेणानुमानेना चेत् गमेन वा

7 A निषेधशास्त्रं गम्यं वक्तव्यम्

8 A तथा च

9 A अधर्मप्रयोजकं

10 A निषिद्धत्वव्यावृत्त्याधर्मत्वव्यावृत्तेः

11 A शाक्याद्याहार

12 A प्रति व्यापकः

13 A omits उपाधिः । श्यामिकां प्रति कारणत्वेन व्यापकः

14 B शा ( श्या? ) मत्वं

15 B शाक्यद्याहार

16 B शा ( श्या? ) मेऽपि

केचिदूचिरे । पुरुषस्य श्यामत्वमिति साध्यस्य[1] विशेषितत्वं परे मेनिरे । उक्तोपाधेर्मैत्रीतनयत्वं[2] प्रत्यव्यापकत्वानिश्चयाच्छङ्कितत्वं शङ्कितोपाधेरगमकत्वमुदितं तौतातितैः ।

' यावच्चाव्यतिरेकित्वं[3] शतांशेनापि[4] शङ्क्यते[5] ।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥ ' इति ।

ननु प्रकृते किं तादृश उपाधिरस्ति नेत्याह[6]—न चेति[7] । ननूपाध्यभावः केन प्रमाणेनावसीयते[8] तत्राह—**यद्यभविष्यदित्यादिना** । प्रत्यक्षेणैवावधार्यत इति प्रथमसमन्वयः[9] कर्तव्यः । ननु घटोपलम्भे सति घटाभाववदुपाध्युपलम्भेऽपि[10] तदभावो दुरवधारण इत्याशङ्क्याह-**अनुपलम्भेति** । लोके यथा सनाथः पुमान् कार्यं कर्तुं शक्नोति तद्वदनुपलम्भध्रीचीनं प्रत्यक्षमुपाध्यभावमध्यक्षयितुं[11] क्षमते इति भावः । ननूपलम्भसहितमपि[12] प्रत्यक्षं नोपाध्यभावग्रहणसमर्थं तथाऽदर्शनादित्याशङ्क्याह[13][14]—**तर्कसहकारिणेति** । तर्कं प्रदर्शयति—**यद्यभविष्यदिति** । क्रियातिपत्तौ लृङ्[15] । यथा दहनव्याप्ते धूमे सति दहनोऽस्त्येव[16] । तथोपलब्धुं[17] योग्यस्य भवनमुपलम्भेन व्याप्तमिति[18] भूतले दृष्टम् । ततश्च व्याप्ये सति व्यापकेन भवितव्यमिति भावः । विपर्यये पर्यवसानमाह[19]—**दर्शनाभावादिति** । तर्कानुपलम्भेन[20] सहायेन प्रत्यक्षेणोपाध्यभावस्यावधारणे सति किं फलं भवतीत्यत आह— **तथा चेति** । उपाध्यभावः[21] भूयः सहभावदर्शनजनितसंस्कार-

---

1 A साध्यविशेषित्वं
2 B उक्तं
3 B यावत्वाव्यतिरेकित्वं
4 A व्यतिरेकं त्वं
5 A शक्यते
6 A न्ये ( ने? ) त्याह
7 A नवेत्यादि
8 B अवसीयेत
9 A प्रथममन्वयः
10 A omits उपाध्युपलम्भेऽपि तदभावो दुरवधारण इत्याशङ्क्याह-अनुपलम्भेति । लोके यथा सनाथः पुमान् कार्यं कर्तुं शक्नोति तद्वदनुपलम्भसध्रीचीनं प्रत्यक्ष
11 A अध्यक्षयितु (तुं?) क्षम इति भावः
12 A नत्वनुपलम्भ
13 A तदादर्शनाद्
14 B omits आशङ्क्य
15 B लट्
16 A दहनोऽस्येव
17 A तथोपलब्धियोग्यस्य
18 A व्याप्तिमिति
19 A विपर्ययसानमाह
20 A तर्कानुपलम्भसहायेन
21 A B उपाध्यभावभूयः सह

सहायेन चरमप्रत्यक्षेण धूमसामान्यस्याग्निसामान्येन स्वभावमात्र-निबन्धनः संबन्धो[1]ऽवसीयते । इदमनेन नियतमिति भावः । उपपादितमुपसंहरति—**तेनेति** । येन कारणेन व्याप्तिग्राहकं प्रमाणं निरणायि तेनेत्यर्थः । पक्षान्तरं प्रतिक्षिपति—**न त्वौपाधिक इति** । व्याप्तिं निरूपयितुमुपक्रम्य स्वाभाविकसं[2]बन्धनिरूपणमरमणीयमित्याशङ्क्य संज्ञाभेदमात्रं न संज्ञिभेद इति कथयति—**स्वाभाविक इति** । अ[3]स्त्येवमविनाभावावधारणप्रकारः । प्रस्तुते किमुपन्यस्तं तत्राह—**तदनेनेति** । यस्माद् व्याप्तिग्रहणप्रकारः प्रदर्शितस्तस्मादनया रीत्या पूर्वोक्तेन चरमप्रत्यक्षेण व्याप्तौ गृह्यमाणायामित्यर्थः । तृतीयज्ञानस्य प्रथमद्वितीयसापेक्षत्वा[4]त्प्रथमं [ प्रथम ] ज्ञानं दर्शयति—**महानस इति** । किं द्वितीयज्ञानं तत्राह—**पर्वतादाविति** । यत्र सा[5]ध्यो धर्मः सिषाधयिषितस्तस्मिन् पक्ष इत्यर्थः । पक्षत्वेनाभिमते पर्वते पुनर्धूमज्ञानं तृतीयमित्याह—**त[6]त्र चेति** । परामृशत्यनुसंधत्त इत्यर्थः । अनुसंधानमाविष्करोति—**अस्त्यत्रेति** । व्याप्तिज्ञानाभावे कथमग्निना व्याप्तो धूम इत्यनुसंधानं संजाघटीति विशेषणज्ञानस्य प्र[7]तिपत्तावङ्गत्वात्तत्राह—**व्याप्तिं स्मृत्वेति** ।

स्मरणं ग्रहणमन्तरेण न संभवति अगृहीतस्य स्मरणादर्शनात् तत्राह—**गृहीतायामिति** । इदानीं ग्रहणं चे[8]न्नोपनीपद्यते कार[9]णभावादित्यत आह—**पूर्वेति** । लिङ्गदर्शनव्याप्त्यनुस्मरणाभ्यामेवानुमेयप्रतीतिरिति **कन्दलीकारो** जगाद । त[10]न्मतं प्रतिक्षेप्तुं तृतीयज्ञानस्याभ्युपेतव्यत्व-

1 A अध्यवसीयते; B व्य ( ध्य? ) वसीयते

2 A संज्ञभेद

3 A आस्त्येव

4 A प्रथमं प्रथमज्ञानं

5 A साध्यधर्मः

6 A तत्रेवेति

7 A विशिष्टप्रतीतौ; B विशिष्टप्रतीतावङ्गत्वात्

8 A omits चेत्

9 A कारणां भावात्

10 A तन्मदं

मुपक्षिपति[1]—**एतच्चेति**। नन्वभ्युपेतव्यमिति नियम्यते। केयं राज्ञामाज्ञा न विपक्षे दण्ड[2]सद्भावादभ्युपेतव्यमित्याह—**अन्यथेति**। अग्निव्याप्तो धूमोऽस्तीति तृतीयज्ञानानङ्गीकारे यत्र धूमस्तत्राग्निरस्त्विह तु कथमिति यदि कश्चिद् ब्रूयात् प्रत्यनङ्गीकारे वादी किं ब्रूयात्। अनुमेयस्यानियत-दिग्देशप्रतिपत्तिपरिहारायेहापि धूमोऽस्तीति तेनापि वक्तव्यमित्यर्थः। ततश्च तृतीयज्ञानमङ्गीकरणीयमित्याह—**तस्मादिति**। यस्मादनङ्गीकारे-ऽनुमेयप्रतिपत्तेरनियतदिग्देशता स्यात्तस्मादित्यर्थः[3] स्यात्। अस्त्वेत-त्तृतीयं ज्ञानं लिङ्गपरामर्शोऽनुमानमित्यत्र किमायातं तत्राह—**अयमेवेति**। तृतीयज्ञानमेव लिङ्गपरामर्श इत्यर्थः। अस्यानुमानत्वं[4] कथमित्या-शङ्क्योक्त[5] (क्तं?) मा विस्मार्षीरित्याह—**अनुमितीति**। अतिशयितं कारणं करणम्[6]। अतिशयश्चाविलम्बेन प्रमोत्पादकत्वं तत्तृतीयज्ञाने[7] जागर्तीत्याह—**तस्मादिति**। तृतीयज्ञानादित्यर्थः। प्रथमद्वितीययोर्ज्ञानयो-रनुमितिं प्रति करणत्वासंभवात्तृतीयज्ञानस्य करणत्वमभ्युपगन्तव्यमित्य-भिधातुं[8] प्रथमं प्रथमज्ञानस्य करणत्वशङ्कामुद्भावयति—**नन्विति**[9]। अस्त्येव प्राथमिकं ज्ञानं तत्तु नाग्न्यनुमितिं[10] जनयेदिति व्याप्तिग्रहणाभावादित्याह[11]—**सत्यमित्यादिना**।

नन्वसत्यपि व्याप्तिग्रहणे धूमज्ञानादग्न्यनुमितिरुत्पद्यतां को दोष इत्याशङ्क्य तद्भावाभावानुविधायित्वेन[12] कारणस्यातिपात एव कार्यस्य दोष इत्याह—**गृहीतायामिति**। ननु तर्हि गृहीतव्याप्तिकस्य महानस एव धूमज्ञानादग्न्यनुमितिरुदयमासादयत्विति शङ्कते—**अथ व्याप्तीति**। परिहरति—**मैवमिति**[13]। तत्रोपपत्तिं कथयति—**अग्नेरिति**। संदेहाभावे हेतु-

1 A मुपक्षे
2 A omits दण्ड
3 A तस्मात्यर्थः
4 B अस्यानुमानु (न?) त्वं
5 B आशङ्क्योक्तं
6 A करणमि (म?) तिशयश्चा
7 A तृतीयज्ञानस्य
8 A करणत्वमस्तु (भ्यु?) पगन्तव्यमत्य-भिधातुं।
9 A तन्विते
10 A नाग्न्यनुम (मि?) तिं जनयति
11 B व्याभि (प्ति?) ग्रहणाभावाद्
12 A विधायत्वेन
13 B नैवामिति

माह—**दृष्टत्वेनेति** । मास्तु संदेहस्तथाप्यनुमीयतामित्यत आह—**संदिग्ध इति** । उक्तार्थे[1] भाष्यकारोक्तिं[2] प्रमाणयति—**तथोक्तमिति**[3] । नरविषाण-[4] वदत्यन्ताज्ञाने[5] करतलामलकवन्निर्णीतेऽर्थे[6][7] न्यायोऽनुमानं[8] न प्रवर्तत इति[9] । तर्हि कुत्र प्रवर्तत इति जिज्ञासते[10]—**अपि तर्हीति** । उत्तरमाह—**स ( सं ? ) दिग्ध इति** । द्वितीयज्ञानस्य करणत्वं शङ्कते—**अथ पर्वतेति** । मात्रपदे[11] पर्वते ननु संदेहाभावान्नाग्न्यनुमितिरित्यत[12] आह-**अस्ति**[13] **चेति** । तत्र युक्तिं वक्ति—**साधकेति** । साधकं हि वस्तुनः सत्त्वं प्रत्याययति बाधकमसत्त्वम् । तदुभयाभावात्संदेहो न्याय्य इत्यर्थः । सत्यपि संदेहे व्याप्तिस्मरणाभावान्नानुमितेरुदय इत्यत[14] आह—**असत्यमित्यादिना** । कस्मात्पुनर्व्याप्तिस्मरणं जायत इत्यत[15] आह—**धूमदर्शनादिति** । व्याप्तिस्मरणप्रकारमाविष्करोति—**यो यो धूमवानिति** । भवतु नामैतत्तृतीयं ज्ञानं कदोत्पद्यत इत्यत[16] आह—**तेन**[17] **धूमदर्शन इति** । तृतीयज्ञानमभिनीय प्रदर्शयति—**धूमवांश्चायमिति** । अग्निव्याप्तो धूमः पर्वतेऽस्तीति ज्ञानं तृतीयमित्यर्थः[18] । अनुमितिकरणत्वं चास्य विद्यत इत्याह—**तदेवेति** ।

लिङ्गपरामर्शोऽप्ययमेवेत्याह—**तदेवेति** । पुनःकथनं विस्मरणशीलं प्रति न विस्मरणीयामिति सूचयितुमिति भावः । उपपादितं लिङ्गपरामर्शस्यानुमानत्वं निगमयति—**तेनेति** । येन प्रथमाद्वितीययोः करणत्वं न संभवति तेनेत्यर्थः । एतच्छद्वार्थमाह— **लिङ्गेति** ।

---

1 A नुक्तार्थे
2 A भाष्यकारोक्तं
3 A यथोक्तमिति
4 A शशविषाणवद्
5 A अत्यन्ताज्ञाते
6 A करतलामलकवह्नि ( न्नि ? ) र्णीतेऽर्थे
7 B विज्ञातेऽर्थे
8 A न्यायोनमानन
9 A इत्यर्थः
10 B जिज्ञासिते
11 A यत्र च
12 A संदेहाभावे
13 B अस्मि चेति
14 B omits अतः
15 A इत्या ( त्य ) त्राह; B इत्यत्र ह
16 B इत्यत्राह
17 A omits तेन
18 B तृती ( ती ? ) यमित्यर्थः

अनुमानं विभजते— **तच्चेति** । ते एव विधे दर्शयति— **स्वार्थमिति** । स्वयमेवाबुद्ध्य[1] पश्चात्परो बोधनीय इति स्वार्थस्य प्रथममुद्देशः । स्वस्यानुमेयप्रतिपत्तिलक्षणं प्रयोजनं यस्माद्भवति तत्[2] स्वार्थम् । परस्यानुमेयप्रतिपत्तिलक्षणं प्रयोजनं यस्माद्भवति[3] तत्परार्थमित्यर्थः[4] । इदमेव प्रवृत्तिनिमित्तं[5] हृदि निधाय स्वार्थस्य लक्षणमाह— **स्वार्थमिति** । तदेतदुपपादयति— **तथाहीति** । ननु लिङ्गपरामर्शोऽनुमानमित्युक्तम् । लिङ्गपरामर्शश्चाग्निव्याप्तो धूमः पक्षेस्तीति तृतीयज्ञानात्मकः । स च व्याप्तिज्ञानमन्तरेण न संभवति । विशेषणज्ञानाभावे विशिष्टज्ञानानुदयात् । तत्राह— **व्याप्तिं स्मरतीति**[6] । एतावन्तमनेहसमजायमानं व्याप्तिस्मरणं कथमिदानीं जातमित्यत्राह— **उद्बुद्धसंस्कार इति**[7] । उद्बोधो[8] नाम कार्योन्मुख्यम्[9] । ननु संस्कारस्योद्बोधः कुतो जायत इत्यत आह— **धूमदर्शनादिति** । ननु प्रशान्तेऽपि धूमध्वजे प्रतीयमानधूमज्ञानाज्जायमानं दहनज्ञानं किमनुमितिरित्याशङ्क्य विशिष्टधूमदर्शनेन भवितव्यमित्याह— **अविच्छिन्नेति** । संदिग्धे न्यायः प्रवर्तत इति न्यायात्[10] संदेहोऽप्यनुमानाङ्गम् । सोऽपि विद्यत इत्याह— **अग्नौ संदिहान इति** । ननु महानसादावग्नेर्दृष्टत्वेन संदेहो नोदयमासादयेदित्यत आह— **तद्वते चेति** । पर्वतनिष्ठ[11] इत्यर्थः ।

ननु स्वगृहस्थितस्य पर्वतादर्शनात्तन्निष्ठाग्निसंदेहः[12] कथं संबोभवीतीत्यत्राह— **पर्वतेति** । अन्यत्र धूमं दृष्ट्वान्यत्राग्निसंदेहः कथं जायत इति शङ्का[13]मपनयति— **पर्वतान्तर्वर्तिनीमिति**[14] । नन्वननुभूत[15]धूमधूमध्वजाविनाभावस्य

1 A स्वयमवबुद्ध्य
2 A त्स्वार्थं ( ? )
3 A गस्मराद्भवति
4 A तत्र परार्थमित्यर्थः
5 A प्रवृत्तनिमित्तं
6 A omits इति
7 A उद्बुद्धसंस्कार
8 B उद्बुद्धो
9 A कार्यौन्मुख्यं;
10 B न्यायसंदेहो
11 B पर्वतनिष्ट ( ष्ठ ? )
12 B तन्निष्टा ( ष्ठा ? )
13 A सका
14 A पर्वतवर्तिनीमिति
15 A ननु अनुभूत

तत्र स्मरणं[1] न संपनीपद्यते । अननुभूते स्मरणायोगादित्यत आह-**धूमाग्न्योरिति** । व्याप्तिः पूर्वं केन प्रमाणेन गृहीतेत्यत आह—**विशिष्टेनेति**[2] । उक्तसंस्कारद्वयसनाथेन प्रत्यक्षेणेत्यर्थः । कुत्रेत्यत आह—**महानसादाविति** । अन्यानुभूतेऽन्यस्मरणं न संजाघटीति शङ्कां[3] वारयति—**स्वयमिति** । व्याप्तिस्मरणमभिनीय प्रदर्शयति[4]— **यत्रेति** । विशेषणज्ञानसद्भावाद्विशिष्टज्ञानमुत्पद्यत इत्याह-**अत्रापीति** । अग्निव्याप्तो धूमोऽस्तीति प्रतिपत्तिर्जायत इत्यर्थः । ततः किमित्यत आह—**तस्मादिति** । लिङ्गपरामर्शादग्न्यनुमितिरुत्पद्यत इत्यर्थः । उक्तमर्थमुपसंहरति—**तदिति** । स्वप्रतिपत्तिहेतुत्वात्स्वार्थानुमानमित्यर्थः । स्वार्थानुमानं निरूप्य क्रमप्राप्तं परार्थानुमानं निरूपयति—**यत्त्विति** । यच्छब्दस्य तत्परार्थानुमानमित्यत्र स्थितेन तच्छब्देनान्वयः । किं तदिति तत्राह—**पञ्चावयवमिति** । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्च अवयवा यस्य तत्तथोक्तम् । अनुमानवाक्यैकदेशत्वादवयवा इवावयवाः[6] प्रतिज्ञादय इत्युपचारः । ननु स्वप्रतिपत्तये कोपि वाक्यं न प्रयुङ्क्ते परप्रतिपत्त्यर्थत्वाद्वाक्यप्रयोगस्येत्यत[7] आह—**परं बोधयितुमिति** । ननु स्वयमप्रतिपन्नः कथं परं[8] बोधयितुं शक्नुयादित्यत आह—**स्वयं धूमादिति** । तदुदाहरति—**तद्यथेति** । तत् पञ्चावयवस्य वाक्यस्यानुमानत्वं यथा स्पष्टं भवति तथोच्यत इत्यर्थः । पर्वतोऽग्निमानिति प्रतिज्ञा । धूमवत्वादिति हेतुः । यो[9] यो धूमवान् स[10] सोऽग्निमानिति[11] यथा महानस[12] इत्युदाहरणम् । तथा चायमित्युपनयः । तस्मात्तथेति निगमनमिति विभागः । ननु लिङ्गपरामर्शोऽनुमानमित्यनुमानसामान्यलक्षणम् । तस्य विशेषानुगमेन[13] भवितव्यम् । न च परार्थानुमाने-

1 A omits ण

2 A विशिष्टतेति

3 A शङ्का वारयति

4 B प्रवर्तयति

5 A उपपद्यते इत्यत्राह; B उपपद्यत इत्यत आह

6 A omits इवावयवाः

7 A परप्रातिएत्यर्थःत्वात्

8 B omits परं

9 B omits one यो

10 B omits one स

11 A omits इति

12 A महानसं

13 B विशेषानुगमनेन

ऽनुर्गतिरस्ति । तस्य वाक्यत्वेन लिङ्गपरामर्शीत्वाभावादित्याशङ्क्य वाक्यस्य साक्षादनुमितिसाधनत्वाभावेऽपि तत्समर्थलिङ्गप्रतिपादकं वाक्यमनुमानमित्युपचारादुच्यत इति मनसि निधायाह—**अनेन हीति**। संबन्धस्तादर्थ्यमनुपपत्तिस्तु दर्शितैवेत्युपचारनिदानं प्रसिद्धमिति द्योतयितुं हिः प्रयुक्तः। पक्षधर्मत्वादीनि पञ्च रूपाणि। तद्युक्ताल्लिङ्गात्तृतीयज्ञानविषयीकृतात्परस्याप्यग्न्यनुमितिर्जायत इत्यर्थः। उक्तमर्थमुपसंहरति—**तेनेति**। परप्रतिपत्तिहेतुत्वेनेत्यर्थः। अत्र साध्यसाधनविभागं करोति—**तत्रेति**। तस्मिन्ननुमान इत्यर्थः। ननु धूमवत्त्वं हेतुः किमन्वयी व्यतिरेकी अन्वयव्यतिरेकी वेति संशये निर्णयमाह—**स चेति**। तत्र हेतुमाह—**अन्वयेनेति**। यदा व्याप्तिशब्देन व्याप्यव्यापकभावो विवक्ष्यते तदान्वयेन व्यतिरेकेण चेति तृतीया इत्थंभावे वर्तते। तदयमर्थः—द्विविधो व्याप्यव्यापकभावः। अन्वयरूपो व्यतिरेकरूपश्चेति। तथा च **भूषणे भासर्वज्ञग्रन्थः**। ‘तत्र साधनसामान्यं व्याप्यं साध्यसामान्यं व्यापकमित्ययं व्याप्यव्यापकभावोन्वयः। साध्यसामान्याभावो व्याप्यः साधनसामान्याभावो व्यापक इत्ययं व्याप्यव्यापकभावो व्यतिरेकः’ इत्युभयरूपव्याप्तेः सद्भावादित्यर्थः। यदा तु व्याप्तिशब्देनाविनाभावापरपर्यायः साहचर्यनियमो विवक्ष्यते तदान्वयेन व्यतिरेकेण चेति तृतीया चक्षुषा रूपं पश्यतीतिवत्करणार्थे वर्तते। तथा चायमर्थः—अन्वयव्यतिरेकौ व्याप्तिनिश्चायकाविति। तथा च **न्यायकुसुमाञ्जलावुदयनग्रन्थः**—

1 B गतिरिति
2 A तादर्थ्यः
3 A हि प्रयुक्तः
4 A धर्मपक्षत्वादीनि
5 A तद् युक्तालिंगतृतीय
6 A तत्र
7 A व्यतिरेकान्वयव्यतिरेकी च
8 A B संशयनिर्णयमाह
9 B तदा अन्ययेन ( ? )
10 B भूषणा
11 B साध्यस्या ( सा ? ) मान्यं
12 A इत्यर्थः
13 A व्याप्यव्यापकभावान्वयः
14 A इत्युभयरूपो व्याप्तेः सद्भावात्
15 A तृतीय ( ? )

‘साध्यधर्मेणा[1]विनाभवनमन्वयिन इव व्य[2]तिरेकिणोऽप्यविशिष्टं तन्निश्चयश्चान्वयव्यतिरेकाभ्यामन्यतरेण च’ इति ।

अन्वयव्यतिरेकाभ्यां व्याप्तेर्निश्चितत्वादित्यर्थः । अथवान्वयोऽनुगमो व्यतिरेको व्यावृत्तिः । उभयथा व्याप्य[3]त्वात्संबन्धत्वादित्यर्थः । एत[4]देव प्रपञ्चयति—**तथाहीत्यादिना व्यतिरेकसद्भा[5]वदर्शना**दित्यन्तेन । व्याप्तिर्व्याप्यं व्यापकं चापेक्षते तदुभयपरतन्त्रत्वात्त[6]स्याः । अतः किं तदुभयमित्याका[7]ङ्क्षायां तदुभयं विभजते—**व्यतिरेकेति** । अधिकवृत्ति व्यापकं न्यू[8]नवृत्ति व्याप्यम् । अङ्गारावस्थायां धूमाभावेऽप्यग्नेः सत्त्वादग्निर्व्यापको धूमो व्याप्यः । तत्रैवाग्न्य[9]भावभावे सति धूमाभावस्य सत्त्वाद्धूमाभावो व्यापकोऽग्न्यभावो व्याप्य इत्यर्थः । उक्तेऽर्थेऽभियु[10]क्तोक्तिं प्रमाणयति—**तदुक्तमिति** । भावयोर्धूमाग्न्योरित्यर्थः । तयोरभावयोरग्न्यभावधूमाभावयोरित्यर्थः । शब्दो गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वात् । यदुक्तसाधनं तदुक्तसाध्यम् । यथा रूपादि । तथा चायं तस्मात्तथेति । इत्यादयो द्रष्टव्या इति भावः । साधितमर्थं निगमयति—**तदेवमिति** । ननु स[11]त्यपि व्याप्तिद्व[12]ये प्रयोगवेलायां केवलमन्वयव्याप्तिरेव प्रदर्शिता न तू[13]भयव्याप्तिरित्याशङ्क्याह—**यत्त्विति** । प्रदर्श्यत इति यत्त[14]त्प्रदर्श[15]नमित्यन्वयः । युक्तमिति शेषः । तत्र युक्तिमाह—**एकेनेति** । नन्वेकेन फल[16]सिद्धिर्भविष्यति चेत्तर्हि व्यतिरेकव्याप्तिः प्र[17]दर्श्यतां किमन्वयव्याप्तौ पक्षपातस्तत्राह-**तत्रापीति** । तयोर्मध्य इत्यर्थः । विध्यध्यवसायपूर्वकत्वान्निषेधाध्यवसायस्येत्यर्थः । ननु क्वचिद्व्यतिरेकव्याप्त्यापि

---

1 B ह्यविनाभवन
2 A व्यतिकरणाप्यविशिष्ट
3 A व्याप्तत्वात्
4 A एतावदेव
5 A सद्भावादर्शनादित्यनेन
6 A omits तस्याः
7 A इत्याङ्क्षयां
8 A अन्यूनवृत्ति
9 A अग्न्यभावाभावे सति
10 B अभिमूखोक्तिं
11 A omits सत्यपि
12 A व्याप्तिद्वयो
13 B उभयी व्याप्तिः
14 A B omit तत्
15 B प्रदर्शितमित्यन्वयः । तद् युक्तमिति शेषः ।
16 B कृत्यसिद्धिः
17 A प्रदर्शतां

फलसिद्धिर्दरीदृश्यत इत्यत आह—**ऋजुमार्गेणेति** । यत्रर्जुमार्गेण नेष्ट-सिद्धिस्तत्र वक्रमार्ग आश्रयणीय एव । यत्रर्जुमार्गेणेष्टसिद्धिस्तत्र वक्रमार्गाश्रयणमयुक्तमित्यर्थः । प्रतिपादितमर्थं निगमयति—**तदेवमिति** ।

**' व्यावृत्तं यद्विपक्षेभ्यः सपक्षेषु कृतान्वयम् ।**
**व्याप्त्या पक्षे वर्तमानमन्वयव्यतिरेकि तत् ॥ '**

इत्यन्वयव्यतिरेकिलक्षणलक्षितत्वादित्यर्थः । उक्तन्यायमन्यत्राप्यतिदिशति—**एवमिति** । अनित्यः शब्दः, कृतकत्वात्, यद्यत्कृतकं तत्तदनित्यं यथा घटः । तथा चायम् । तस्मात्तथेति । पञ्चरूपोपपन्नमन्वयव्यतिरेकिणं हेतुं निरूप्य चतूरूपोपपन्नं केवलव्यतिरेकिणं निरूपयति—**कश्चिद्धेतुरिति**। उक्तमर्थमुदाहरति—**तद्यथेति** । साध्यसाधनविभागं विदधाति—**सात्मकत्व इति** । अत्र प्राणादिशब्देन प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानीति तृतीयाध्याये द्वितीयाह्निके कणादसूत्रोक्ताः प्राणादयो विवक्षिताः। प्रयोगप्रकारं दर्शयति—**यथेत्यादिना** । देहातिरिक्तमात्मानमङ्गीकुर्वाणं चार्वाकं वराकं प्रति देहातिरिक्त आत्मा साध्यते । शरीरमात्रपक्षीकरणे मृतशरीरे प्राणादिमत्त्वाभावेन भागासिद्धः स्यादत उक्तम्—**जीवदिति** । प्रतिज्ञाद्यवयवविभागप्रकारास्तु प्रागेव दर्शिताः ।

ननु प्राणादिमत्त्वहेतोः केवलव्यतिरेकित्वं कथमित्याशङ्क्यान्वयव्याप्तेरभावादित्याह—**अत्र हीत्यादिना** । तदेतदुपपादयति—**तथाहीति** । धूमानुमाने महानसवह्निश्चितसाध्यो धर्मी नास्ति **चार्वाकमते** । सर्वस्य

1 A विफलसिद्धिः
2 A आनाथश्रयणीय एव
3 A omits इष्ट
4 B विपक्षेभ्य ( : ? )
5 B has यत् once only
6 B has तत् once only
7 A अन्वयव्यतिरेकणं ( ? )
8 B हेतु ( तुं ? )
9 A वत्तरूपोपपन्नं ( ? )
10 A सात्मक इति
11 B इन्द्रियान्तर्विकाराः
12 A द्वितियेह्निके
13 A B प्रदर्शयति
14 A B तथेत्यादिना
15 A चार्वाकवराक; B omits वराकं
16 A B प्रकारस्तु प्रागेव दर्शितः
17 A केवलव्यतिरेकत्वं
18 B निश्चित्य

जीवच्छरीरस्य पक्षकुक्षिनिक्षिप्तत्वादित्यर्थः। ननु दृष्टान्ते धर्मिणि दृष्टो धर्मस्तद्व्याप्तेन हेतुना पक्षे विधीयते विपक्षे वा साध्यनिवृत्त्या साधननिवृत्तिः प्रदर्श्यते। अत्र तु सात्मकत्वं प्राणादिमत्त्वव्यापकत्वेन क्वापि न दृष्टम्। अतः कथं जीवच्छरीरे प्राणादिमत्त्वेन सात्मकत्वसिद्धिः कथं च घटादिषु सात्मकत्वनिवृत्त्या प्राणादिमत्त्वनिवृत्तिरिति चेत्। उच्यते। श्रूयतामवधानेन। लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं[1] स दृष्टान्त इति **गौतमेन** भगवता प्रथमाध्यायप्रथमाह्निके दृष्टान्तलक्षणमभिहितम्। घटादिषु[2] नैरात्म्यं[3] प्राणादिमत्त्वं चेत्यस्मिन्नर्थे सर्वसंप्रतिपत्तिरस्ति। अतः कथंकारं नायं दृष्टान्तः[4]। व्याप्तिनिश्चयश्च[5] क्वचिदन्वयव्यतिरेकाभ्यां क्वचिदन्यतरेणेति[6] प्रागेव प्रपञ्चितम्। ततश्च व्याप्तस्य हेतोर्गमकत्वात् साध्यसिद्धिं[7] को[8] वारयेदित्यलम्। असाधारणधर्मत्वाद्व्यतिरेक्येवं[9] लक्षणमिति **तार्किकरक्षोक्तन्यायाचार्यरीतिमवलम्ब्य**[10] शिष्यव्युत्पादनाय प्रसक्तं किंचिदभिधत्ते—**लक्षणमिति**।

> **'असपक्षं विपक्षेभ्यो व्यावृत्तं पक्षभूमिषु।**
> **सर्वासु वर्तमानं यत् केवलव्यतिरेकि तत्॥'**

इति व्यतिरेकिलक्षणलक्षितत्वाल्लक्षणस्यापि व्यतिरेकित्वमुपपद्यत[11] इति भावः। सर्वद्रव्यादिभूतायाः पृथिव्या लक्षणस्य व्यतिरेकित्वं[12] दर्शयितुं तल्लक्षणं च[13] दर्शयति—**गन्धवत्त्वमिति**। गन्धात्यन्ताभावानधिकरणत्वमित्यर्थः[14][15]। लक्षणस्य व्यतिरेकित्वं[16] दर्शयति—**विवाद-**

---

1 A बुद्धिसाम्यत्वं
2 B घटादिषु च
3 B नैरात्मा (?)
4 A दृष्टान्तव्याप्तिनिश्चयः
5 B व्याप्तिनियमश्च; A omits च
6 A चेति
7 A साध्यसिद्धं
8 A को वा वारयेत्
9 A एव
10 A तार्किकरक्षोक्तं
11 A व्यतिरेकत्वं
12 A व्यतिरेकत्वं
13 A omits च
14 B भावानि (न ?) धिकरणत्वमित्यर्थः
15 A नधिकरणमिति भावः
16 A व्यतिरेकत्वं

**पदमिति** । पृथिवी भवति न वेति विवादास्पदं[1] पृथिवीति व्यवहर्तव्यम् । इतरेभ्यो भिद्यत इति वा साध्यनिर्देशः कर्तव्यः । व्यावृत्तिर्व्यवहारो वा लक्षणार्थ इत्यभियुक्तोक्तेरन्यथासाध्या[2] विशिष्टता दोषप्रसङ्गाच्चेति । त्रीनुदाहरणान्तान्[3] वा यद्वोदाहरणादिकानिति न्यायात् प्रतिज्ञादयस्त्रयोऽवयवा दर्शिताः । आ परमाणोरा च भूगोलकं पृथ्वीमात्रस्य[4] पक्षीकृतत्वात् सपक्षाभावः । पृथिवीस्वरूपस्य प्रमाणसिद्धत्वान्नाश्रयासिद्धिः । लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति तयोः[5] कृत्यं वर्णयन्ति वृद्धाः । प्रमाणं वस्तुस्वरूपं ज्ञापयति—**लक्षणमितरव्यावृत्तिमिति** । ननु केवलव्यतिरेकि[6] साध्यं क्वचित् प्रसिद्धमप्रसिद्धं[7] वा । प्रसिद्धौ केवलव्यतिरेकित्वभङ्गप्रसङ्गोऽप्रसिद्धावप्रसिद्धविशेषणत्वमिति चेत् मैवम् । यतोऽप्रसिद्धविशेषणत्वं[8] केवलव्यतिरेकिणो भूषणं न तु दूषणमित्यन्ये । यद्येवं तर्हि शशविषाणोल्लिखिता भूर्भूत्वान्न यदेवं न तदेवं यथा गगनमित्यादेरपि साध्यसिद्धिः स्यादिति चेत् । मैवं विपक्षे बाधकसाधक[9]तर्कसाहित्यराहित्याभ्यां साध्यासिद्ध्यसिद्ध्योरुपपत्तेरिति । अन्ये तु संदिग्धसिद्धावपि विशेषतः साध्यमानत्वान्नाप्रसिद्धविशेषणत्वं नापि साधनवैयर्थ्यमित्याचक्षते । विषयव्याप्त्यर्थं[10] लक्षणान्तरस्य केवलव्यतिरोकित्वं प्रदर्शयाति—**प्रमाणेति** । यथा पृथिवीलक्षणं गन्धवत्त्वं केवलव्यतिरेकि तथा प्रमाणलक्षणमपीति वा शब्दार्थः । प्रयुज्य प्रदर्श्यतामित्यत[11] आह—**तथाहीत्यादिना**[12] । पक्षादीत्यादिशब्देनानुमानोपमानशब्दानां[13] ग्रहणम् । ननु पर्वतोऽग्निमान् भवितुमर्हतीत्यादिव-

1 A विवादस्यास्पदं
2 A साध्यविशिष्टता
3 A हरणां । तन्वा
4 B पृथिमी (वी ?) मात्रपक्षीकृतत्वात्
5 A तक्तोक्तं यं च
6 B केवलव्यतिरेकसाध्यं
7 A प्रसिद्धं च
8 B अप्रसिद्धं विशेषणत्वं
9 B omits साधक
10 A विषयाव्याप्त्यर्थलक्षणान्तरस्य
11 A B प्रदर्श ( र्श्य ? ) तां
12 A omits तथाहीत्यादिना इत्यारभ्य व्यवहारसाध्यत्वेनेत्यत आह इति पर्यन्तम्
13 B अनुमानोपमानागमानां

दत्रापि प्रत्यक्षादि प्रमाणं भवितुमर्हतीति साध्यनिर्देशः क्रियताम् । किं व्यवहारसाध्यत्वेनेत्यत आह—**अत्र तु व्यवहार इति** । तत्र युक्तिमाह-**तस्येति** । प्रमाणत्वस्य साध्यस्य प्रमा[1]करणत्वहेतोर्भेदाभावेन साध्याभेद[2]दोषः प्रसज्येत । साध्यं हि तद्भवति यत्साधनमर्हति । हेतुश्च सिद्ध एव साध्यं साधयितुं क्षमते । भेदसमानाधिकरणयोः सिद्ध[3]त्वसाध्यत्वयो-रेकत्रावस्थानं न संगच्छते । अतः साध्या[4]वैशिष्ट्यं दोष इत्यर्थः । साधितमर्थं निगमयति—**तदेवमिति** । एवमन्येऽप्येवं[5]विधा हेतवः केवल-व्यतिरेकिणो द्रष्टव्या इति ।

' सर्वेषु केषुचिद्वापि सपक्षेषु समन्वयि ।
विप[6]क्षशून्यं पक्षस्य व्यापकं केवलान्वयि ॥ '

इति लक्षणलक्षितं केवलान्वयिहेतुं निरूपयति—**कश्चि[7]दिति** । प्रयोग-प्रकारमाविष्करोति—**यथेत्यादिना** । अत वैशेषिकैः पञ्चमपदार्थत्वेना-भिमतो विशेषो यदवलम्बनेन तेषां वैशेषिकव्यवहारभा[8]क्त्वं जातम् । अत्र हेतुसाध्यविभागं विधत्ते—**अत्रेति** । ननु कथमस्य विपक्षाभावः । स्तम्भकुम्भादिशब्दानभिधेयानामप्रत्यक्षप्रमेयाणां पर्वतगुहान्तवर्तिनामने[9]केषां जागरूकत्वादित्याशङ्क्या[10]भिधातृमात्रस्यानभिधेयस्य प्रमातृमात्रस्य प्रमाणमात्रापेक्षया अ[11]प्रमेयस्यार्थस्यासंभवादविद्यमानविपक्षत्वं युक्तमि-त्यभिप्रेत्य परिहारमाह—**स चेति** । नन्वस्तु पुरुषमात्रस्यानभिधेयोऽप्रमे-यश्च नरविषाणादिः स भवतु विपक्ष इत्यत आह—**सर्वत्रेति** । अप्रामाणि-कस्य निषेधानर्हत्वमुक्तमाचार्यैः ।

1 A प्रमाणकरणत्वहेतोः
2 A साध्यादोषभेद
3 A सिद्धसाध्यत्वयोः
4 A साध्यावैशिष्टं; B साध्यावैशिष्यं (ष्ट्यं ?)
5 B अन्येऽप्येतं (वं ?) विधा
6 B विपक्षसू (शू ?) न्यं
7 A क्वचिदिति
8 B भाक्तं (क्त्वं)
9 A एषां
10 शङ्क्याविधानतृ
11 B अप्रमेयार्थस्य त्वा

‘ लब्धरूपं[1] क्वचित् किंचित् तादृगेव निषिध्यते ।
विधानमन्तरेणातो[2] न निषेधस्य संभवः ’ ॥ इति ।

नन्वनेन हि वाक्येन प्रतिपादितार्थात् पञ्चरूपोपपन्नाल्लिङ्गात्[3] परोऽप्यग्निं प्रतिपद्यत इति[4] प्राक् प्रतिपादितम् । तत्र कानि[5] तानि रूपाणीत्याकाङ्क्षायां तानि रूपाणि विवरीतुं प्रसङ्गं संपादयति—**एतेषां चेति** । एवकारस्य[6] व्यवच्छेद्यमाह—**नन्विति**[7] । तानि[8] पञ्च रूपाणि निरूपयति—**तानि पञ्चेति**[9] । अनुपदमेव पक्षसपक्षविपक्षाणां लक्षणं वक्ष्यति । सिद्धं हि साधनं स्वसाध्यं साधयितुं शक्नोति । अतः प्रथममसिद्धत्वं निरसितुं पक्षधर्मत्वमुद्दिष्टम् । ततो विरुद्धत्वं[10] व्युदसितुं सपक्षे सत्त्वम् । अनन्तरमनैकान्तिकतां निराकर्तुं विपक्षाद्व्यावृत्तिः । समनन्तरं[11] कालात्ययापदिष्टतां प्रत्यादेष्टुमबाधितविषयत्वम् । पश्चात्प्रकरणसमतां प्रतिक्षेप्तुमसत्प्रतिपक्षत्वम् । तदनेन रूपपञ्चकेन हेत्वाभासपञ्चकं निरस्तं[12] वेदितव्यम् । नन्वेतानि पक्षधर्मत्वादीनि धूमवत्त्वादिहेतौ[13] किं विद्यन्ते । विद्यन्त एवेत्याह—**एतानि रूपाणीति** । तत्र प्रथमरूपस्य सद्भावं दर्शयति—**धूमवत्त्वं हीति** । धूमवत्त्वं[14] पर्वतनिष्ठतया प्रतीयमानत्वात् संदिग्धसाध्यस्य पर्वतस्य धर्मस्ततो धूमवत्त्वे पक्षधर्मत्वं विद्यत इत्यर्थः । द्वितीयरूपस्य सत्तां[15] प्रदर्शयति—**एवमिति** । यथा पक्षधर्मत्वमस्ति तथा सपक्षे सत्त्वमपीत्येवंशब्दार्थः । एवमुत्तरत्राप्येवंशब्दार्थो[16] द्रष्टव्यः । निश्चितसाध्ये महानसे तस्य सत्त्वादित्यर्थः । तृतीयचतुर्थपञ्चमरूपाण्यपि[17] क्रमेण

---

1 A लब्धरूपे
2 A ते
3 पञ्चरूपोपपादितान्
4 A omits इति
5 A प्राक्प्रणगादिति; B प्राक् ण्य-(न्य ?) गादि
6 A तानि कानि
7 A B एवकारव्यवच्छेद्यमाह
8 A नान्विति
9 B तानि रूपाणि निरूपयति
10 B विरुध ( द्ध ) त्वं
11 A समनन्तरकालात्ययापदिष्टतां
12 B पराकृतं
13 धूमवत्वादिति हेतौ
14 A धूमत्वं
15 A सत्त्वं
16 A omits एवं
17 A पञ्चरूपाण्यपि

प्रदर्शयन् **विशदयति**–**विपक्षादित्यारभ्य धूमवत्वमित्यन्तेन** । धूमवत्त्वस्यासत्प्रतिपक्षत्वं[1] प्रतिपादयितुं प्रतिजानीते–**तथाहीति** । प्रतिपक्षस्वरूपानवगमे असत्प्रतिपक्षत्वं दुरवगममित्याशङ्क्य प्रतिपक्षस्य लक्षणमाह–**साध्येति** । साध्यविरुद्धधर्मप्रतिपादको हेतुः प्रतिपक्ष इत्यर्थः । अस्तु प्रस्तुते किमायातं तदाह–**स चेति** । योग्यानुपलब्धिबाधितत्वात्सत्प्रतिपक्षः प्रकृते नास्तीत्यर्थः । उपपादितां[2] रूपपञ्चकसंपत्तिमुपसंहरति–**तदेवमिति** । यतः पञ्च रूपाणि प्रदर्शितानि तत इत्यर्थः । फलितमाह–**तेनेति** । गम्लृ सृप्लृ[3] गतावित्येतस्माद्धातोर्निष्पन्नत्वाद्गमकशब्दस्य[4][5] प्रापकत्वे भ्रान्तिर्माभूदित्याह–**अग्निमत्त्वस्येति** । धूमवत्वं हेतुरग्निमत्त्वं[6] साधयति ज्ञापयतीत्यर्थः । ननु धूमवत्वं[7] हेतुरग्निमत्त्वं साधयतीत्युक्तं तदयुक्तम् । विकल्पासहत्वात् । तथाहि किमत्राग्निसामान्यं साध्यं किं वा पर्वतनिष्ठोऽग्निराहोस्वित्[8][9] त्तार्णत्वपार्णत्वादिविशिष्टः । नाद्यः । अग्निसामान्यस्याविवादास्पदत्वेन सिद्धसाधनत्वात्[10] । न द्वितीयः । पर्वतनिष्ठेनाग्निना[11] धूमस्य क्वचिदन्वयादृष्टावविनाभावस्य दुर्ग्रहत्वात् । न तृतीयः । तार्णपार्णादीनामनन्तत्वेन[12] ग्रहणानुपपत्तावुक्तदोषानतिवृत्तेः । अत[13] उक्तम्–

‘ **विशेषेऽनुगमाभावात्[14] सामान्ये सिद्धसाधनात्** ।
**तद्वयानुपपन्नत्वादनुमानकथा[15] पुनः ( कुतः? )** ॥ इति ।

तदेतत्पराकर्तुमाह–**अग्नेः पक्षधर्मत्वमिति[16]** । धूमस्य पर्वतनिष्ठत्वेन वह्निरपि पर्वतनिष्ठ एव सेत्स्यति[17] । व्याप्तिस्तु सामान्यनिष्ठा । अतो नोक्त-

---

1 सात्प्रि ( त्प्र ? ) तिपक्षत्वम्
2 B उपपादितरूप पञ्चसंपत्तिं
3 A सृप्
4 B धातोनिष्पन्नत्वात्
5 गमकत्वशब्दस्य
6 A धूमत्वहेतु; B धूमवत्वहेतुः
7 A धूमवत्वहेतुः
8 B पर्वतनिष्टो ( ष्ठो ? )
9 A अहोश्वित्
10 B सिद्धसाधनत्वान् त्वद्वितीयः ( ? )
11 B पर्वतनिष्टे ( ष्ठे ? ) नाग्निना
12 A तार्णादीनां
13 A B तदुक्तम्
14 A विशेषनुगमाभावात् ।
15 A तद्वतोनुपपन्नत्वात्
16 A पक्षे धर्मत्वमिति
17 A सेस्यति

दोषप्रसङ्ग इति भावः। उक्तमर्थमुपपादयितुं प्रतिजानीते—**तथाहीति**। अनुमानस्य द्वयं साध्यमित्युक्तम्। किं तद् द्वयमित्यत आह—**सामान्यमिति**। अग्निसामान्यं पर्वतनिष्ठत्वलक्षणो विशेष[1]श्चेत्यर्थः। किं केन सिद्ध्यतीत्यत आह—**तत्र व्याप्त्येति**। अनुमानस्य द्वयं सामर्थ्यं व्याप्तिः पक्षधर्मता चेति पाठान्तरम्। तदा व्याप्ति[2]र्नाम उभयविधोपाधिविधुरः संबन्धः। पक्षधर्मता नाम पक्षीकृतसकलव्यक्तिनिष्ठत्वम्। [3]तत्र व्याप्त्येति तयोरुपयोग उक्तः। पक्षधर्मताबलाद्विशेष[4]सिद्ध्यनङ्गीकारे बाधकमाह—**अन्यथेति**। व्याप्तिग्राहकप्रमाणादेव सामान्यासिद्धेरनुमानस्य वैफल्यं स्यात्। अतो व्याप्त्या सामान्यसिद्धिः। पक्षधर्मताबलाद[5]भिमतविशेषसिद्धिरित्यर्थः। अत एवाह **भूषणकारः**—बहिर्व्याप्त्यन्तर्व्याप्ति[6]प्रसादादुभयसिद्धिरिति पूर्वाचार्याः। यतः पक्षबहिर्देशे महानसादा[7]वग्निमात्रेण धूमस्य व्याप्तिः प्रतिपन्ना ततो धूमादग्निः सामान्येन सिद्ध्यति। यतस्तु पक्षान्तर्देशे धूम उपलभ्यते। ततस्तत्संबन्धादग्निविशेष एव सिद्ध्यति। न तार्णादिस्तत्सिद्धौ प्रतिबन्धानुपलब्धेः[8]। तार्णादिविशेषाविनाभूतं धूमविशेषं[9] यो[10] विवेचयितुं[11] शक्तस्तस्य तद्विदस्तार्णादिविशेषानुमानं भवतीति[12]। धूमवत्त्वं[13] हेतुरेक एव सम्यग्[14]हेतुरिति भ्रमं व्युदसितुं धूमवत्त्वहेतुवदन्योऽपि सर्वोऽन्वयव्यतिरेकी पञ्चरूपोपपन्नश्चेति सद्धेतुरित्याह—**यस्त्वित्यादिना**। तत्र पक्षधर्मता[15]हीनश्चेदसिद्धो भवति। पक्षधर्मताहीनस्यासिद्धत्वमुदितमुदयनेन। व्याप्तस्य पक्षधर्मताप्रतीतिः सिद्धिस्तदभावोऽसिद्धिरिति। तथा सपक्षे सत्त्वेन हीनस्य पक्षविपक्षयोर्वर्तमानत्वेन विरुद्धता स्यात्।

---

1 B विशेषश्चेति
2 B व्याप्तिनाम
3 A तच्च व्याप्तेतिः B तत्वव्याप्तेः
4 A विशेषसिद्धमङ्गीकारे
5 B बलादि ( द ? ) भिमत
6 A वहिर्व्याप्त्यंतव्याप्ति
7 A महानशादा
8 B प्रतिबन्धानुपलब्धे [ : ]
9 B विनाभूतधूमविशेषं
10 A omits यो
11 B वेदयितुं
12 A omits इति
13 धूमवत्वहेतु
14 A सम्यकहेतु
15 A पक्षधर्मतया हीनत्वे प्रसिद्धो

विपक्षव्यावृत्तिरहितस्य पक्षत्रयवर्तित्वेनानैकान्तिकता स्यात् । सत्प्रति-[1]पक्षत्वे प्रकरणसमता स्यात् । बाधितविषयत्वे कालात्ययापदिष्टता स्यात्। अत एकेनापि रूपेण हीनो हेत्वाभासो भवति । हेतुलक्षणरहितो हेतुव-दाभासमानो[2] हेत्वाभासो भवतीत्यर्थः । एतावता किमुक्तं भवतीत्या-[3]शङ्क्यासाधकत्वमुक्तं भवतीत्याह[4]—**अहेतुरिति यावदिति** । अहेतुशब्देन यावदुक्तं भवति तावदुक्तं भवतीत्यर्थः । ननु केवलान्वयिनोऽपि किं पञ्चरूपोपपत्त्या भाव्यम्[5] । नेत्याह[6]—**केवलान्वयीति** । तत्रोपपत्तिमाह—**तस्य हीति** । केवलान्वयिसाध्यस्य[7] सर्वपदार्थानुस्यूतत्वेन[8] साध्याभाववतः पदार्थस्याभावादिति भावः[9] । केवलव्यतिरेकिसाध्यस्य क्वचिदप्यभावेन सपक्षे सत्त्वाभावाच्चतूरूपोपपत्त्या तस्य साधकत्वमित्याह—**केवलव्यति-रेकीति** । पक्षादीनां स्वरूपमजानानस्तज्जिज्ञासुः[10] पृच्छति—**के पुनरिति** । पुनःशब्दो वाक्यालंकारे । लक्षणोदाहरणाभ्यां क्रमेण तावन्निरूपयितु-[11]मारभते—**उच्यन्त इत्यादिना तत्रैव ह्रद इत्यन्तेन** । तत्र साध्यधर्मा[12] पक्ष इत्युक्ते सपक्षेऽतिव्याप्तिः । अत उक्तम्—**संदिग्धेति** । तथा सपक्ष-लक्षणगतनिश्चितग्रहणं पक्षातिव्याप्तिपरिहारार्थम् । केनचिन्मन्दधिया[13] समारोपितसाध्याभावस्य सपक्षस्यापि[14] विपक्षतां निवारयितुं विपक्षलक्षणे निश्चितग्रहणम् सर्वत्र 'धर्मादनिच् केवलात्'[15] (५।४।१२४) इति बहुव्रीहौ धर्मशब्दादनिच् । धर्मिग्रहणं पक्षादीनां प्रमाणसिद्धत्वं द्योतयितुम् । अन्यथा सर्वत्र प्रमाणशून्यस्य[16] वचनमात्रस्य संभवे[17] हेतुर्हेत्वाभासो[18] वेति

1 A सप्रतिपक्षत्वे
2 B अवभासमानो
3 B भवतीत्याशङ्क्य साधकत्वं
4 B भवत्याह
5 B भावं ( व्यं ? )
6 B नैत्याह
7 A साधकस्य
8 A सर्वपदार्थस्यत्वेन
9 B भावाः ( वः ? )
10 A अजाननः
11 B निरूपय ( यि ? ) तुं
12 B साध्यधर्मपक्ष इत्युक्ते
13 B मन्दधियारोपितसाध्यभावस्य
14 A पक्षस्यापि
15 B omits केवलादिति बहुव्रीहौ धर्मशद्बादनिच्
16 A प्रमाणशून्यवचनमात्रस्य
17 B संभवहेत्वाभासविभागो
18 A हेतुहेतुर्हेत्वाभासो वा

विभागो न स्यादिति भावः । संदिग्धसाध्यः[1] पक्षः, निश्चितसाध्यः सपक्षः, साध्यरहितो विपक्ष इति लक्षणसंग्रहः । इयता प्रबन्धेनोपपादितमर्थमुपसंहरति—**तदेवमिति** । सम्यग्हेतुत्व[2]परिज्ञप्तावत्यन्तोपयुक्तानां हेत्वाभासानां स्वरूपं निरूपयितुमुपक्रमते—**ततोऽन्य इति** । उक्तलक्षणेभ्यस्त्रिभ्यो हेतुभ्योऽन्ये इतरस्वरूपसंपत्ता[3]वप्येकेन रूपेण हीना हेतवो हेत्वाभासाः । तदनेन हेत्वाभासव्यावृत्ता हेतवः[4] सम्यग्हेतव[5] इति व्यतिरेकि[6]णोऽपि सम्यग्हेतुपरिज्ञप्तिः सुकरेत्यर्थः । ते कतिप्रकारा इत्याकाङ्क्षायामवान्तरभेदविवक्षया बहुप्रकारा इत्याह—**ते चेति** । तथापि राशीकरणे[7] कियन्ते राशयो[8] भविष्यन्तीत्यत आह—**असिद्धेत्यादिना**[9] । केचित् सर्वेषां हेत्वाभासानामसिद्धा[10]वेवान्तर्भावं मन्वाना एकविधमेव हेत्वाभासं मन्वते । अपरे त्रिविधमन्ये षड्विधमिति वादिविवादिप्रत्यादेशार्थमयोगान्ययोगव्यवच्छेदकमेवकारं प्रायुङ्क्त[11] । तदुक्तम्—

‘ **अयोगं योगमपरैरत्यन्तायोगमेव च ।**
**व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेकि (च)कः**[12] ’ ॥ इति ।

एकविधत्वं तावन्न संभवति । अनेक[13]विधत्वव्यवहार[14]दर्शनात् । लोके यथा व्यवहारस्तथैव लक्षणं कर्तव्यं नान्यथा । तदुक्तम्—

‘ **सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।**
**न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम्** ॥ ’ इति ।

अत एव न त्रिविधत्वं पञ्चविधत्वव्यवहारदृष्टेः । नापि षड्विधत्वमनध्यवसितस्य सव्यभिचार एवान्तर्भावात् । अत एवोक्तम्—

---

1 A संदिग्धसाक्षपक्षः
2 A सम्यग्घेतुत्व
3 A अन्यतमरूपसंपत्तौ
4 B हेतुः सम्यक् हेतुः
5 A सम्यग्घेतवः
6 A व्यतिरेकेणापि
7 A रासीकरणे
8 A रासयो
9 B इ ( अ? ) सिद्धेत्यादिना
10 A omit एव
11 A प्रयुङ्क्त
12 A व्यतिरेकिक
13 B अनेकविधव्यवहारदर्शनात्
14 A omits दर्शनात् । लोके यथा व्यवहार

' हेतोः केनापि रूपेण रहिताः कैश्चिदन्विताः ।

हेत्वाभासाः प[1]ञ्चविधा (धा ते?) गौतमेन प्रपञ्चिताः ॥' इति ।

गौतमोऽप्यसूत्रयत्— ' स[2]व्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः'। इति । अतः पञ्चैवेति सुष्ठूक्तम् । तत्र व्याप्तस्य हेतोः प[3]क्षधर्म [ ता ? ] प्रतीतिः सिद्धिस्तद[4]भावोऽसिद्धिरिति तल्लक्षणे विचार्यमाणे सपक्षाद्यनपेक्षया पक्षमात्रोपजीवनेन संभवतोऽसिद्धस्य प्रथमं ततः पक्षाविपक्षवृत्तेर्विरुद्ध[5]स्य ततः पक्षत्रयवृ[6]त्तिमुपजीवतोऽनैकान्तिकस्य पश्चात् स[7]मबलत्वेनाभिमतस्य प्रकरणसमस्यानन्तरमवशिष्टस्य न्यूनबलस्य कालात्ययापदिष्टस्योद्देश इति विभागः । असिद्धं वि[8]भागेनोद्दिशति— तत्रेति । ते[9]षु पञ्चसु म[10]ध्य इत्यर्थः । सति धर्मिणि धर्माश्चिन्त्यन्त इति न्यायेनाश्रयोपजीवनेन प्रवर्तमानस्याश्रयासिद्धस्य ततो हेतोः स्वरू[11]पोपजीवनेन प्रवर्तमानस्य स्वरूपासिद्धस्य पश्चात्तद्धर्मव्याप्यत्वोपजीवनेन प्रवर्तमानस्य व्याप्य[12]त्वासिद्धस्येति क्रमः । व्याप्तस्य पक्षधर्मता[13]प्रतीतिः सिद्धिः । ततश्च व्याप्त्य[14] (प्या ?) भावे व्याप्यत्वासिद्धिः, पक्षाभावे आश्रयासिद्धिः, तद्धर्महेत्व[15]भावे स्वरूपासिद्धिरिति तिस्रोऽसिद्धयो भवन्तीति भावः । सर्वत्र बहुव्रीहावाहिता[16]ग्न्यादित्वात् अग्न्याहितवन्निष्ठायाः परनिपाते आश्र[17]यासिद्ध्यादिशब्दा उपपत्स्यन्ते । तृतीयासमासेन वा तेषामुपपत्तिः । प्रथमं प्रथमस्योदाहरणमाह—**आश्रयेति** । आश्रयासिद्धत्वमेव स्पष्टयति— **अत्र हीति** । द्वितीयस्योदाहरणमाह—**स्वरूपेति** । यद्यपि चा[18]क्षुषत्वं रूपादावस्ति तथापि पक्षत्वेनाभिमतस्य शब्दस्य श्रोत्रत्वान्नेत्रत्वं नास्तीति

---

1 B पञ्चधा ते
2 B सव्यभ ( भि? ) चार
3 A पक्षधर्मताप्रतीतिः
4 A तदाभावो
5 A विरुद्धस्यान्तः
6 omits वृत्ति
7 A समवेततत्वेनाभिमतस्य
8 A विभागोनोद्दिशति
9 A तत्रेषु
10 A omits मध्य
11 A स्वरूपेण जीवनेन
12 A व्याप्यस्वासिद्धस्येति
13 A सिद्धितश्च
14 A व्याप्याभावे
15 B सव्यभ ( भि? ) चार
16 A वाहिताग्न्यादि इति
17 A आश्रयासिद्धा शब्दा; B आश्रयासिद्धादि शब्दा
18 A चाक्षुकत्वं

हेतोः स्वरूपत्वं पक्षेऽसिद्धमित्यर्थः। तृतीयं विभजते—**व्याप्यत्वेति**। कुत इत्यत आह—**एक इत्यादिना**। तत्र प्रथममुदाहरति—**तत्रेति**। सौगतसमयावलम्बनेनावयवद्वयोपन्यासो युक्तः। तदुक्तम्—सौगतास्तु सोपनीतिमुदाहृतिमिति वदन्ति। ननु सत्त्वहेतोर्व्याप्तिग्राहकप्रमाणाभावाद्व्याप्यत्वासिद्धतेत्युक्तमुपाधिसद्भावाद्व्याप्यत्वासिद्धता किमिति नोच्यते तत्राह—**सोपाधिकतयेति**। यथाऽधर्मवत्त्वं हिंसात्वप्रयुक्तं न भवति किं तु निषिद्धत्वप्रयुक्तमितिवत् क्षणिकत्वं सत्त्वप्रयुक्तं न भवति किं तु परप्रयुक्तमित्युच्यमाने ब्रह्महननादावधर्मत्वमिव क्वचित् क्षणिकत्वमभ्युपगतं स्यात्। तच्चानिष्टम्। क्षणमात्रावस्थायित्वं निर्हेतुको विनाशो वा क्षणिकत्वमिति सौगतमतानुसारिभिः कक्षीकृतत्वात्। तस्मादेतादृशं क्षणिकत्वं क्वापि न दृष्टं नेष्टमिति सत्त्वक्षणिकत्वयोर्व्याप्तिग्राहकप्रमाणाभावादेव सत्त्वहेतोर्व्याप्यत्वासिद्धत्वमित्यर्थः। सोपाधिकस्य व्याप्यत्वासिद्धस्योदाहरणमाह—**द्वितीय इति**। 'अहिंसा परमो धर्मस्त्वधर्मः प्राणिनां वधः' इति प्रतिजानाना जैनैर्जनाः पक्षान्तरमजानाना इत्थमनुमानं प्रयुञ्जते—**क्रत्वन्तरवर्तिनी हिंसेति**। सोपाधिकत्वादिदमनुमानं नोदयमासादयेदित्याह—**अत्र हीति**। उपाधेः किं लक्षणमित्याकाङ्क्षायामुपाधिलक्षणमाह—**साध्येति**। यावत्साधनदेशमवर्तमानो यावत्साध्यदेशवृत्तिरुपाधिरिति निष्कर्षः। तत्रोपाधेः साध्यव्यापकतां दर्शयति-**तच्चेत्यादिना**। साधना-

1 A समयावलम्बेन
2 A सोपनीतमुदाहृतमिति
3 A omits वदन्ति
4 B सत्त्वे हेतौ
5 A तत् आह
6 B अधर्मत्वंहिंसात्वप्रयुक्तं
7 A निषिद्धत्वं
8 B प्रयुक्तिमिति तद्वत्
9 A परयुक्तं
10 A अधर्ममिव
11 A अभ्युपतं; B अभ्युपगं ( गं ? ) तं
12 B क्षणिकत्वंमिति
13 A दृष्टान्तेनेष्टं
14 B omits एव
15 B व्याप्यत्वमसिद्धमित्यर्थः
16 B अहिंसा परमो धर्म अधर्म्म प्राणिनां वद्ध इति
17 B जैना जनाः
18 A कथं
19 A क्रत्वन्तर्वर्तिनी
20 B तत्रोपाधे [ : ]

व्यापकतां दर्शयति—**एवं साधनमिति**[1] । यथा निषिद्धत्वोपाधिः साध्यमधर्मत्वं व्याप्नोति तथा साधनं हिंसात्वं न व्याप्नोति। पक्ष एव सत्यपि हिंसात्वे तस्योपाधेरभावात्[2]। नन्वग्नीषोमीयहिंसा निषिद्धा हिंसात्वाद् द्विजहिंसादिवदिति[3] साधनव्यापकत्वेनोपाधित्वं नोपपद्यत इति चेत्तदेतद्[4]श्विकभयात्पलायमानस्याशीविष[5]मुखनिपातमनुसरति[6]। प्रयुक्तानुमानस्यौपाधिकभीत्या[7] वैद्यहिंसायां[8] निषिद्धत्वं साधयतस्तव[9] शिरसि सकलमहाजनपरिगृहीतनिर्णीतप्रमाणभाववेदविरोधलक्षणवज्रप्रहारनिपातापातात्[10]। अतो वैद्यहिंसायां[11] ब्रह्मस्वहरणादौ च परस्परपरिहारेण वर्तमानयोर्हिंसात्वानिषिद्धत्वयोर्ब्रह्महननादावेकेनाधर्मत्वेन संबन्धे[12] सत्यपि निषिद्धत्वाभावस्याधर्मत्वाभावेनैव हिंसात्वाभावस्याधर्मत्वाभावेनाविनाभावाभावान्निषिद्धत्वस्योपाधित्वमुपपद्यते[13] । अत एवोदितमुदयनाचार्येण[14]—

> ' **एकसाध्याविनाभावे मिथः संबन्धशून्ययोः ।**
> **साध्याभावाविनाभावी स उपाधिर्भवत्ययम्[15] ॥** '

इति समपदप्रक्षेपेण प्रागेवोपाधिलक्षणगतविशेषण[16]व्यावर्त्यानि कीर्तितानीति[17] । प्रयुक्तो हेतुरुपाधिनिष्ठं[18] व्याप्यत्वमुपजीवतीति[19] वदता समव्याप्तिरङ्गीकृतैवेति[20] भावः। तस्मान्निषिद्धत्वस्योपाधित्वाद्व्याप्यत्वासिद्धं[21] हिंसात्वमित्युपसंहरति—**अन्यप्रयुक्तेति** । अत्र व्याप्तिर्नाम व्याप्यत्वमित्यर्थः । साध्यविशिष्टः[22] साध्यत्वात्साध्यसम इति सूत्रलक्षितमसिद्धं

---

1 B एव साधनामिति
2 A तस्योपाधारिभावात्
3 A B द्विजहिंसावत्
4 A तदेनत्
5 A आसीविष
6 A अनुहरति
7 B औपाधिकत्वभीत्या
8 A वैदहिंसायां
9 A साधयन्
10 A निपातापात्
11 A वैदहिंसायां
12 A धर्मत्वेनासंबन्धे
13 A अविनाभावात्
14 A adds इति
15 A B उपाधिर्यदत्ययः
16 A विशेषेण
17 B omits इति
18 A हेतुरूपाद्धिनिष्ठं
19 B उपाधिनिष्ठव्याप्यत्वं
20 B अङ्गीकृतेति भावः
21 A व्याप्यत्वसिद्धं
22 B साध्यविशिष्टस्या (सा?) ध्यात्वत्

वर्णयित्वा[1] न्यायाचार्योदीरितं विरुद्धलक्षणं वर्णयति—**साध्येति**। लक्ष्ये[2] लक्षणस्यानुगतिं दर्शयति—**स यथेत्यादिना**[3]। साध्यविपर्यय[4]व्याप्तत्वाद्विरुद्धं कृतकत्वमिति निगमयति—**अत इति**। सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध इति सूत्रलक्षितं विरुद्धलक्षणोदाहरणाभ्यां[5] क्रमेण प्रदर्श्य 'अनैकान्तिकत्वलक्षणम[6]नैकान्तिकः सव्यभिचारः'[7] इति सूत्रं[8] व्यत्यासेन पठति—**सव्यभिचार इति**। विभागेनोद्दिशति—**स द्विविध इति**। तत्र साधारणस्य लक्षणमाह—**तत्रेति**। तयोर्मध्य इत्यर्थः। उदाहरति—**स यथेति**। प्रयुक्ते[9] हेतौ लक्षणानुगतिं[10] दर्शयति—**अत्र हीति**[11]। अस्मिन्ननुमान इत्यर्थः। असाधारणानैकान्तिकं लक्षणोदाहरणाभ्यां प्रपञ्चयति[12]—**सपक्षेति**। ननु स्वोचितस्थलमतिक्रम्यान्यत्र वर्तनं व्यभिचार इति लोके प्रसिद्धं[13] तत्तु साधारणे विद्यते। अनुचित[14]स्थलविपक्षावृत्तेः पक्षमात्रवृत्तेस्त्वसाधारणस्य कथं सव्यभिचारितेति[15] चेदेतावत्तावदाकर्णय। अनुचितस्थले वर्तमानमिवो[16]चितस्थलेऽवर्तमानमपि[17] व्यभिचार एव। अतो विपक्षवृत्तेः साधारणस्येव सपक्षव्यावृत्तस्याप्य[18]साधारणस्य सिद्धा सव्यभिचारितेति। तदुक्तं **भासर्वज्ञेन**[19]—'हेतोरुभयत्र[20] वृत्तिर्व्यभिचारस्तथोभयतो व्यावृत्तिरपि व्यभिचारः' इति। क्रमप्राप्तस्य प्रकरणसमस्य लक्षणमाह—**प्रकरणसम इति**। पक्षान्तरव्यावृत्त्यर्थस्तुशब्दः[21]। स्वपरपक्षसिद्धावपि

1 A वर्णित्वाथाचार्योदीरितं
2 A B लक्षे ( क्ष्ये ? )
3 A स चेत्यादिना
4 A साध्यावपर्यए
5 A विरुद्धलक्षणोदाहरणा
6 A omits अनैकान्तिकत्वलक्षणम्
7 A B अनैकान्तिकसव्यभिचार इति
8 B सूत्रव्यत्यासेन
9 B प्रयुक्तहेतोः
10 A लक्षणानुमाति
11 B तत्र हीति
12 A प्रदर्शयति
13 B लोकप्रसिद्धं
14 A अनुचितस्थले विपक्षेऽपि वृत्तेः
15 B व्यभिचारिता
16 B वर्तनमिव
17 A अवर्तनमपि; B अवर्तनमिव
18 A सपक्षव्यावृत्तस्यापि
19 B भानसर्वज्ञेन
20 B उभयवृत्तिः
21 A omits पक्षान्तरव्यावृत्त्यर्थस्तुशब्दः इत्यारभ्य प्रकरणसम इति इति पर्यन्तम्

त्रिरूपो हेतुः प्रकरणसम इति **भूषणकारो** बभाषे तदसंभवि । एकस्य हेतोरुभयत्र त्रैरूप्यासंभवात् । तस्मात् प्रतिज्ञातार्थविपरीतार्थज्ञापकहेतुमान् हेतुः प्रकरणसमः । उक्तं च **सूत्रकारेण**—

'यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः' इति । अस्यार्थः— यस्मात्[1] प्रयुक्ताद्धेतोरुपरि[2] प्रकरणस्य प्रतिज्ञातार्थविपरीतार्थज्ञापकस्य हेतोश्चिन्तासंभवः स निर्णयार्थं स्वसाध्यनिश्चयायापदिष्टः[3][4] प्रकरणसम इति । उक्तमर्थमुदाहरणनिष्ठं कृत्वा दर्शयति—**यथेति** । नित्यधर्मरहितत्वान्नित्यत्वज्ञापकधर्मरहितत्वादनित्यधर्मानुपलब्धेरनित्यत्वज्ञापकधर्मरहितत्वादित्यर्थः । ननु सत्प्रतिपक्षो नाम हेत्वाभासान्तरं[5] विद्यते स किमिति नोच्यते तत्राह—**अयमेवेति** । सत्प्रतिपक्षो हेतुः[6] प्रकरणसम इति विद्वद्भिर्न्यायाचार्यैरुच्यत[7] इत्यर्थः । नन्विमौ हेतू समबलौ हीनाधिकबलौ वा । नाद्यः । वस्तुनो द्वैरूप्यासंभवेन तुल्यबलवत्त्वायोगात् । न द्वितीयः । प्रबलेन हीनस्य बाधितत्त्वेन कालात्ययापदिष्टतया प्रकरणसमत्वानुपपत्तेरिति चेन्नैवम् । वस्तुवृत्त्या द्वयोः समानबलत्वाभावेऽप्य[8]गृहीतविशेषत्वेनाभिमानिकं[9] समबलत्वमादाय प्रकरणसमत्वोपपत्तेरिति । अवशिष्टस्य कालात्ययापदिष्टस्य लक्षणमाह—**पक्ष इति** । यस्य विषयः साध्यधर्मः प्रमाणान्तरेण बाधितः । बाधो नाम तद्विपरीतप्रवेदनम् । स बाधितविषयः । साधनजन्यज्ञानाविषयत्वात् साध्यस्य साधनविषयत्वमुपचारादुच्यते । कालात्ययापदिष्टः कालातीत इति सूत्रे निर्दिष्टपक्षोपन्यासानन्तरं हेतूपन्यासस्य कालस्तस्यात्ययेऽतिक्रमे सति अपदिश्यते[10]

---

1 A तस्मात्
2 A प्रयुक्तहेतोः
3 A निस्त्चयाय; B निश्चयाय दिष्टः
4 A adds प्रयुक्तः
5 A omits हेत्वाभासान्तरं विद्यते स किमिति नोच्यते- तत्राह अयमेवेति। सत्प्रतिपक्षो ।
6 A हेतुप्रकरणसम
7 A वदद्भिः; B बवाद्भिः
8 A समानबलाभावेऽपि; B समबलत्वाभावेऽपि
9 B गृहीतविशेषत्वेन
10 A अपि दिश्यते

प्रयुज्यत इति कालात्ययापदिष्टः । कालमतीतः कालातीत इत्युक्तं लक्षणमपि संगृहीतं भवतीत्यभिप्रेत्याह—**कालात्ययेति** । उदाहरति—**यथेति** । अत्रानुष्ण इत्युष्णस्पर्शप्रतिषेधोऽयम् । प्रमितं च तत्[1] प्रतिषिद्ध्यते नाप्रमितम् । न चोष्णत्वस्य[2] कृष्णवर्त्मनोऽन्यत्रोपलम्भसंभवः । तस्मादुष्णत्वग्राहिणोपजीव्यत्वेन[3] बलीयसा स्पर्शनप्रत्यक्षेण बाधितमनुमानमित्यमुमेवार्थं हृदि निधायाह[4]—**अत्र हीत्यादिना उष्णतोपलम्भादित्यन्तेन** । तत्पूर्वकं त्रिविधमनुमानं[5] पूर्ववच्छेषवत्सामान्यतो दृष्टं चेति सूत्रोक्तं त्रिप्रकारमनुमानं सप्रपञ्चं निरूपितमित्याह—**व्याख्यातमिति** ।

अनुमानं सप्रकारं[6] निरूप्य क्रमप्राप्तमुपमानं निरूपयति—**अतिदेशेति** । अतिदिश्यते प्रतिपाद्यतेऽनेन साधर्म्यादिरित्यतिदेशः । स चासौ वाक्यं चेति समानाधिकरणसमासः[7] । न च पुंनपुंसकयोः[8] कथं सामानाधिकरण्यमिति वाच्यम् । परोपदेशस्तु पञ्चावयवं वाक्यमित्यादिवदुपपत्तेः[9][10] । अत एव ( धर्म? ) प्रसिद्धसाधर्म्यात्साध्यस्य[11][12] साधनमुपमानमित्यामनन्त्याचार्याः । अतिदेशवाक्येन प्रमितात्[13] साधर्म्यादनन्तरं साध्यस्य संज्ञासंज्ञिसंबन्धस्य साधनं ज्ञापकं सादृश्यविशिष्टपिण्डप्रत्यभिज्ञानमुपमानमिति सूत्रार्थः । तदुक्तम्—

> ' **अव्युत्पन्नपदोपेतवाक्यार्थस्य च सांज्ञिनि ।**
> **प्रत्यक्षप्रत्यभिज्ञानमुपमानमिहोच्यते** ' ॥ इति ।

सूत्रगतसाधर्म्यग्रहणं वैधर्म्यादेरुपलक्षणम् ।

---

1 B omits तत्
2 A न चानुषाकृषावर्त्मनो
3 A उपजीवात्वेन; B उपजीवत्वेन
4 A निधाय प्राह
5 A विविधमन ( नु? ) मानं
6 A अनुमानप्राकारं
7 A सामानाधिकरण्यमिति समासः
8 A omits पुं
9 A B पञ्चावयववाक्यं
10 A मित्यादिद्रुपपत्तेः
11 A प्रसिद्धधर्मसाधर्म्यात्
12 B साध्यसाधनं
13 B प्रति ( ती? ) तात्

'तत्रातिदेशवाक्यार्थस्त्रिविधः परिकल्प्यते[1] ।
साधर्म्यं धर्ममात्रं च वैधर्म्यं चेति भेदतः ॥ इति ।

अतिदेशवाक्यार्थत्रैविध्योक्तेरित्युदाहरति—**यथेति**। लक्षणस्य लक्ष्येऽनुगमनं यथा स्पष्टं भवति तथोच्यत इत्यर्थः । सर्वत्रैवंविधस्य यथाशब्दस्यायमेवार्थः । पिण्डज्ञानमुपमानमित्युक्ते यत्किंचित् पिण्डज्ञानमुपमानं प्रसज्येत[2] तन्मा प्रसाङ्क्षीदिति गोसादृश्यविशिष्टेत्युक्तम् । कश्चिद्वनेचरो नगरे गामुपलभ्य पश्चाद्वनं गतो गोसादृश्यविशिष्टं[3] पिण्डमनुभवति तज्ज्ञानस्योपमानतां वारयितुमुक्तम्—**तद्वाक्येति** । तदेत्युक्तं कदेत्याकाङ्क्षायामाह—**वाक्यार्थं[4] स्मरन् यदेत्यादिना**। ननु नगरस्थपिण्ड[5]दर्शनं न संबोभवीतीत्यत आह—**वनं गत इति** । अश्रुतवाक्यस्य वाक्यार्थस्मरणं न संपनीपद्यते तत्राह—**पुरुषाच्छ्रुत्वेति** । ननु नागरिकस्य गवयमजानानस्य नातिदेष्टव्यं[6] (ष्टत्वं ?) तेनाह—**कुतश्चिदारण्यकादिति** । अतिदेशवाक्यं[7] दर्शयति—**यथा गौरिति** । गवयं जानानस्याकाङ्क्षाया अभावादतिदेशो व्यर्थ इत्यत्राह—**गवयमिति**। उक्तज्ञानोपमानस्योपमानत्वे[8] युक्तिमाह—**उपमितीति** । उपमितिस्वरूपमाह—**गोसादृश्येत्यादिना** । संज्ञासंज्ञिसंबन्धप्रमितिमभिनयति—**अयमसावित्यादिना** । गोसादृश्यस्यातिदेशवाक्यानुभूतस्य संप्रति पुरःस्थिते पिण्डे प्रत्यभिज्ञायमानत्वादयमसावित्युक्तं तदा( द ? )यमर्थः[9] । क्वचित् कर्मणि गवयस्योपयोगं विदित्वा[10] तं जिज्ञासमानेन नागरिकेण[11] कीदृशो गवय इति पृष्टो वनेचरः

---

1 B परिकल्प्पते
2 B प्रसज्यते
3 A विशिष्टपिण्डं
4 B वाक्यार्थ ( र्थं ? )
5 A B नगरस्थस्य
6 B ना अतिदिष्टव्यं
7 A omits अतिदेशवाक्यं दर्शयति-यथा गौरिति । गवयं जानानस्याकाङ्क्षाया अभावादातिदेशो व्यर्थ इत्यत्राह-गवयमिति । उक्तज्ञानोपमानस्योपमानत्वे युक्तमाह-उपमितीति । उपमितिस्वरूपमाह गोसादृश्येत्यादिना । संज्ञासंज्ञिसंबन्धप्रमितिमभिनयति-अयमसावित्यादिना । गोसादृश्यस्याति
8 B उक्तज्ञानोपमानत्वे
9 A B तदयमर्शः
10 A omits तं
11 B नागरिकेन

समाचारं[1] समाचष्टे यथा गौस्तथा गवय इति । अनन्तर[2]मारण्यकादति-देशवाक्यमाकर्ण्याटव्यामटतो गोस्वामिनः कंचन वृत्तकण्ठं गोसादृश्य-विशिष्टं[3] पिण्डमनुभवतः स्मरतश्च वाक्यार्थमयमसौ गवयशब्दवाच्य[4] इति भवति प्रतीतिः । सा तावदु(दु?)रपलापा[5] सर्वानुभवसिद्धत्वात् । न च वाक्यस्य फलमननुभूतपिण्डस्यापि संज्ञासंज्ञिसंबन्धप्रतिपत्तिप्रसङ्गात् । नापि प्रत्यक्षफलम् । अनाकर्णितातिदेशवाक्यस्यापि तत्प्रसङ्गात् । नापि समाहारफलम् । नगरस्थस्य[6] वाक्यं वनस्थस्य प्रत्यक्षमिति तयोर्भिन्न-कालत्वेन समाहारासंभवात्[7] । तस्माद्वाच्यवाचकभावज्ञानमुपमानफलम् । तदुक्तम्—

**‘ संबन्धस्य परिच्छेदं[8] संज्ञायाः[9] संज्ञिना सह ।**
**प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ ’** इति ।

नन्वतिदेशवाक्यादेवावगतो वाच्यवाचकभावः । केवलमिदानीं प्रत्य-भिजानाति—**अयमसौ गवयशब्दवाच्य इति** । गवयशब्दो गवयत्वस्य वाचकः । असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् । गोशब्दवदित्य-नुमानाद्वावसीयते वाच्यवाचकभावः । किमुपमानेनेति चेन्मैवम् । यत आहुः—

**‘ सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।**
**समयो दुर्ग्रहः पूर्वं शा ( श? ) ब्देनानुमयापि[10] च ॥ ’** इति ।

न्यायकुसुमाञ्जलिपरिश्रमशालिनामुपमानस्य पृथक् प्रामाण्यं सुगम-मित्युपर्ग( र ? )म्यते[11] ।

---

1 A B omit समाचारं
2 A अन्तरं
3 A विशिष्टपिण्डं
4 A काव्य इति
5 B सातावद्दुरपलापा
6 A वनस्थस्य नगरस्थस्य
7 A समभवात
8 A परिच्छेदसंज्ञायाः B परिच्छेदः
9 B संज्ञाया [ :? ]
10 B शब्देन
11 B उपरम्यते

प्रसिद्धसाधर्म्यात् साध्यसाधनमुप[1]मानमित्युपमानलक्षणमभिधाय सूत्र-कारेणाप्तोपदेशः शब्द इत्यागमलक्षणमभ्यधायि । तत्र[2] उपदिश्यतेऽनेनेति करणव्युत्पत्त्योपदेश[3]ः (श?) शब्दस्य वाक्यपर्यायत्वं मनसि निधाया-गमप्रमाणस्य लक्षणमाचष्टे–**आप्तवाक्यमिति** । वाक्यं[4] शब्द इत्युक्ते भ्रान्त-विप्रलम्भकवाक्यस्याप्यागमता[5] स्यादत उक्तम्–**आप्तेति** । कोऽयमाप्तो य[6]स्य वाक्यमागमः स्यात्त[7]त्राह–**आप्ता[8] (प्त?) स्त्विति** । तुशब्दो भ्रान्तविप्रलम्भक-योराप्तत्वनिराकरणार्थः । यथा[9]भूतस्याबाधितस्यार्थस्योपदेष्टा पुरुष आप्तः । ततश्च भ्रान्तोक्तवाक्यार्थस्य बाधितत्वेनाबाधितत्वं नास्ति । भ्रान्तस्य यथार्थदर्शित्वाभावात् । विप्रलम्भोक्तवाक्यार्थस्याऽपि बाधितत्वेनाबा[10]धितत्वं नास्ति । विप्रलम्भकस्य यथार्थद[11]र्शितत्वेऽपि यथार्थवा[12]दित्वाभावादिति भ्रान्तविप्रलम्भकयोरा[13]प्तत्वं पराकृतमित्यर्थः । नन्वाप्तवाक्यं शब्द इत्युक्तं त[14]त्राप्तस्वरूपमवसितं वाक्यस्वरूपं नाव[15]सीयत इत्यत आह–**वाक्यं त्विति** । अत्र तुशब्द आकाङ्क्षादिराहितस्य पदसमूहस्य वाक्यत्वनिवृत्त्यर्थः । आकाङ्क्षा नाम प्रतिपत्तुर्जिज्ञासा । परस्परान्वयसामर्थ्यं योग्यता । संनि-धिस्त्वविलम्बेनोच्चार्यमाणत्वम् । एतत्त्रितयोपेतानां पदानां समूहो वाक्य-मित्यर्थः । ननु पदानां समूहो वाक्यमित्येतावदेवास्तु किमवशिष्टेनेत्याशङ्क्य यस्मादाका[16]ङ्क्षादिग्रहणं कृतं तस्माद्गौर[17]श्व इत्यादिपदसमूहस्य वाक्यता निरस्ता नो [18]चेदस्यापि वाक्यत्वं स्यात् । तच्चानिष्टमित्यभिप्रेत्याह–**अत इति** । उदाहृतस्य पदसमूहस्यागमप्रमाणत्वाभावे हेतुमाह–**परस्परेति** ।

---

1 B omits उपमानमिति
2 B अत्र
3 B उपदेशशब्दस्य
4 A वाक्यशब्द
5 A आगममा
6 B कस्य
7 B अत्राह
8 A आप्तास्त्विति
9 B तथाभूतस्य
10 B बाधितत्व (त्वं?)
11 A यथार्थदर्शित्येपि
12 A यथार्थस्य वादितत्वाभावादिति
13 A आप्तत्वपराकृतमित्यर्थः
14 A तन्नामस्वरूपमवलम्बितं
15 A चावसीयते
16 A B omit आदि
17 A गौरश्वश्च
18 A न चेत्

तर्ह्याकाङ्क्षावतां पदानां समूहो वाक्यमित्यस्तु किं योग्यताग्रहणेनेत्याशङ्क्य योग्यताग्रहणस्योपयोगमाह—अग्निनेति । अत इत्यनुषज्यते । यस्मादयोग्यताग्रहणं कृतं तस्मादित्यर्थः । योग्यताविरहः कथमित्यत आह—न[1] हीति । तदेवोपपादयति—तथाहीति । ‘ कर्तृकरणयोस्तृतीया[2] ’ इति करणार्थे तृतीयाया[3] विहितत्वात्तया करणत्वं प्रतिपादितं चेद्भवतु को दोष इत्यत आह—न चेति । अभूततद्भावे च्विं[4] ( च्विः ) प्रत्ययः । अयोग्यत्वात् करणत्वं न संभवतीत्यतः फलितमाह—तेनेति । येन कारणेन सेकं प्रत्यग्नेः करणीभवतुं योग्यता नास्ति तेनेत्यर्थः । संनिधिग्रहणस्य प्रयोजनमाह—एवमिति । यथा गौरश्व इत्यादिपदसमूहस्य न वाक्यत्वं तथा विलम्बेनोचार्यमाणस्य गामानयेत्यादिपदसमूहस्येत्येवंशब्दार्थः । अत्राप्यत इत्यनुषङ्गः पूर्ववत् । तत्र[5] युक्तिं वक्ति—सत्यामिति[6] । एवमाकाङ्क्षादित्रयस्य[7] प्रयोजनत्वादेतात्त्रितयविशिष्टानि[8] पदानि वाक्यमिति फलितमाह—यानीति । वाक्यं द्विविधं लौकिकं वैदिकं चेति[10] । तत्र परमाप्तप्रणीतत्वेन प्रधानत्वात् प्रथमं वैदिकवाक्यमुदाहरति—यथेति । अनेन वाक्येन स्वर्गकामस्य काम्यमानं[11] स्वर्गं प्रति यागः[12] साधनमिति[13] स्वर्गयागयोः साध्यसाधनभावप्रतिपत्तिः क्रियते । अतः परस्पराकाङ्क्षावदन्वययोग्यार्थप्रतिपादक[14]संनिहितपदकदम्बकत्वाद्[15]वाक्यमित्यर्थः[16] । लौकिकं वाक्यमुदाहरति—यथा चेति । फलानि सन्तीत्युक्ते कतीत्याकाङ्क्षा जायते । ततः पञ्चेत्युपदिष्टे[17] ते कुत्रेत्याकाङ्क्षायां तीर इति । पुनः

---

1 A नवेति
2 A तृतीयो करणार्थे
3 A तृतीया विहितत्वात्
4 B च्विः
5 A omits तत्र
6 A सत्यामिति
7 A त्रयस्यवत्त्वात्
8 B प्रयोजनत्वाद्दनत्रयविशिष्टानि
9 A omits इति
10 A B omit इति
11 A काम्यमानस्वर्गं
12 A योगः
13 A omits साधनमिति स्वर्गयागयोः
14 B प्रत्यायक
15 B पदनिकुरम्बकत्वाद्
16 B वाक्यमित्यलौकिकवाक्यम्
17 A पञ्चेत्युपतिष्ठते

कस्या इत्याकाङ्क्षायां नद्या इति । एवमन्योन्याकाङ्क्षावदन्वययोग्यार्थ-प्रत्यायकसंनिहित[1]पदनिकुरम्बकत्वाद्[2]वाक्यत्वमित्यर्थः । ननु गौरश्वः[3] पुरुषो हस्ती अग्निना सिञ्चेदित्यादिपदवृन्दवद् गामानयेत्यादिपदसमूहोऽपि कदाचिदपि वाक्यतां किं न प्रतिपद्यत इत्याशङ्क्या विलम्बेनोच्चार्यमाणानां तेषां पदानां वाक्यत्वं युज्यत इत्याह—**यथा तानीति** । यान्याकाङ्क्षा-[4]योग्यतावन्त्यपि प्रहरे प्रहरे[5] उच्चार्यमाणानि[6] वाक्यत्वं न प्रतिपद्यन्ते तानीत्यर्थः । नन्वाकाङ्क्षाया[7] इच्छारूपत्वेन चेतनधर्मत्वादचेतनानां पदानामाकाङ्क्षावत्ता न[8] संगच्छत इत्यनेनाशयेनाशङ्कते—**नन्वत्रेति**[9] । उदाहृतेषु वाक्येषु स्थितानि पदानि[10] न[11] साकाङ्क्षाण्यचेतनत्वादित्यर्थः । तर्हि कानि साकाङ्क्षाणीति जिज्ञासते—**किं त्विति** । उत्तरमाह—**अर्था इति**[12] । अर्थानां साकाङ्क्षत्वे युक्तिमाह—**फलादीनामिति** । आधेयानि फलान्या-[13]धारभूतं तीरमाकाङ्क्षन्ति तीरं च संबन्धित्वेन नदीमपेक्षते । एवमन्यो-न्यसाकाङ्क्षा[14] अर्था इत्यर्थः । पदानां साकाङ्क्षत्वं यथा युक्त्या न संभवत्यर्थानामपि तथैव युक्त्या साकाङ्क्षता न संभवतीत्याह[15]—**न चेति**[16] । वस्तुवृत्त्या[17] विचार्यमाणेऽर्थानामचेतनत्वेन न[18] साकाङ्क्षतेत्यर्थः । आकाङ्क्षाधारत्वेन[19] साकाङ्क्षत्वाभावेऽप्याकाङ्क्षाजनकत्वेन साकाङ्क्षता संभवतीत्यभिप्रेत्य[20] परिहरति—**सत्यमिति** । अस्त्यर्थानां[21] साकाङ्क्षत्वं पदानां

---

1 A omits संनिहित ; B omits संनिहितपद
2 A निकुरुम्बत्वात्
3 A अश्वपुरुषो
4 A य ( या ? ) न्या
5 B omits one प्रहरे
6 A adds तानि
7 A नन्वाकाङ्क्षया; B नन्व ( न्वा ? ) काङ्क्षाया
8 B न शब्दात्
9 A नन्वन्यत्रेति
10 B omits पदानि
11 A omits न
12 B omits अर्था इति
13 A आधारं; B फलान्याधारं तीरं
14 A अन्योन्यं
15 A B न समस्तीत्याह
16 A नत्वेति
17 B वस्तुवृत्तेः
18 A omits न
19 A आकाङ्क्षाधारवत्वेन
20 B अभिप्र ( प्रे ? ) त्य
21 A omits अर्थानां

साकाङ्क्षत्वे किमायातमत आह—**तद्द्वारेणेति** । नन्वाकाङ्क्षाजनकत्वेन साकाङ्क्षत्वकक्षीकारे पदानामपि तथा संभवात्[1] किमन्तर्गडुनार्थद्वारेणेत्यपरितोषात् पक्षान्तरं[2] कक्षीकरोति—**यद्वेति** । ननु पदानां यथाकथंचित् साकाङ्क्षत्वमस्त्वन्वययोग्यता कथं स्यादित्याशङ्क्यार्थद्वारा[3] भविष्यतीत्याह—**एवमर्था इति** । आकाङ्क्षाजनकत्वेन साकाङ्क्षाणामर्थानामन्योन्यान्वययोग्यता स्वाभाविकी तादृगर्थप्रतिपादकत्वेन पदानामपि परस्परान्वययोग्यता संभवतीति भावः । संनिधिस्तु पदानां स्वभावत एव सेत्स्यतीति वक्तुं संनिधिशब्दार्थमाह—**संनिहितत्वं त्विति** । तुशब्दः पूर्वस्माद्वैलक्षण्यं द्योतयति । ननु संनिहितत्वं किमाकाङ्क्षादिवदौपचारिकम् । नेत्याह—**तच्चेति** । साक्षादव्यवधानेनेत्यर्थः । साक्षाच्छब्दव्यावर्त्यमाह[4]—**नार्थद्वारेति** । फलितमाह—**तेनायमिति** । येन पदानामाकाङ्क्षादित्रितयोपेतता साधिता तेन तादृशानां[5] पदानां समूहो वाक्यमित्यर्थः । ननु पदानां समूहो वाक्यमित्युक्तं पदं नाम किं तत्राह—**पदं चेति** । ननु वर्णसमूहः[6] पदमित्युक्तं तन्न घटते वर्णानां समूहीभावासंभवात्[7] । तत्र हि समूहव्यपदेशो यत्र पदार्था एकस्मिन् प्रदेशे सहावस्थिता बहवोऽनुभूयन्ते । यथैकस्मिन् प्रदेशे सहावस्थिततयानुभूयमानेषु[8] धवखदिरपलाशादिषु समूहव्यपदेशो यथा वा गजनरतुरङ्गादिषु[9] । न च ते वर्णास्तथानुभूयन्त उत्पन्नप्रध्वस्तत्वात् । अतो वर्णानां समूहो न संभवतीत्याशङ्क्य वास्तवसमूहासंभवेऽपि[10] बौद्धः समूहः संभवतीत्याह[11]—**एकज्ञानेति** । नन्वेक-

---

1 A संभवेत्
2 A संज्ञान्तरं
3 A omits कथं स्यादित्याशङ्क्यार्थद्वारा भविष्यतीत्यत आह-एवमर्था इति । आकाङ्क्षाजनकत्वेन साकाङ्क्षाणामर्थानामन्योन्यान्वययोग्यता
4 B साक्षाच्छब्दस्याव्यावृत्तिमाह
5 A सादृश्यं
6 B वर्णसमूह [ : ? ] पदं
7 B समूहभावासंभवात्
8 A सहावस्थितया
9 A गजतुरगादिषु; B तुरगादिषु
10 A सति
11 A omits संभवतीत्याह

ज्ञानविषयत्वं नामैको वर्ण[1] इति ज्ञानविषयत्वं चेत्तन्न[2] संभवति[3] । अनेकेषु घटेष्वेको घट इति ज्ञानवदनेकेषु वर्णेष्वेको वर्ण इति ज्ञानस्यानुदयात् । अतो वास्तववत् काल्पनिकोऽपि समूहो वर्णानां[4] न संभवतीत्याशङ्क्यैक-[5]ज्ञानविषयत्वं नामैकं पदमिति ज्ञानविषयत्वं तत्तु वर्णानां न[6] संभवत्येवे-त्यभिप्रेत्य परिहारं प्राह—**एवं तत्रेत्यादिना पदप्रतीतिर्न जन्यत** इत्य-न्तेन । एवं वक्ष्यमाणेन प्रकारेण पदप्रतीतिर्जन्यत इति संबन्धः । नन्वेकं पदमिति प्रतीतिः स्फोटमवलम्बते । न च तत्र प्रमाणाभावः प्रत्यक्षार्थापत्त्योः संभवात् । तथाहि गौरित्येकं पदमिति नानावर्णाति-रिक्तैकपदावगतेः सार्वजनीनत्वात्[7] । न ह्यसति बाधके पदानुभवः शक्यो मिथ्येति वक्तुम् । पदार्थप्रतीत्यन्यथानुपपत्त्यापि स्फोटोऽभ्युपगन्तव्यः । अथ मन्यसे वर्णेभ्य एवार्थप्रत्ययो जायत इति[8] तदा वक्तव्यं व्यस्ता वर्णा अर्थं प्रत्याययन्ति[9] समस्ता वा । नाद्यः इतरवर्णवैयर्थ्यप्रसङ्गात् । एकैकस्मा-द्वर्णादर्थप्रतीतेरदर्शनाच्च नापि द्वितीयः । उत्पन्नप्रध्वस्तानां वर्णानां समस्त-त्वासंभवात् । न च व्यस्तसमस्ताभ्या[10]मन्यः प्रकारः संभवति[11] । तस्मा-द्वर्णानां वाचकत्वानुपपत्तौ यद्बलादर्थप्रतिपत्तिः[12] स स्फोटः । वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः स्फोट इति तद्विदो वदन्ति । अत एव स्फो (स्फु ?) ट्यते[13] व्यज्यते[14] वर्णैरिति स्फोटो[15] वर्णाभिव्यङ्ग्यः । स्फुटति स्फुटीभवत्य[16]स्मादर्थ[17] इति स्फोटोऽर्थप्रत्यायक[18] इति स्फोट-शब्दार्थमुभयथा निराहुः । तथा चोक्तं भगवता **पतञ्जलिना** महाभाष्ये—

---

1 A वर्णाविति
2 A omits तत्
3 A adds इति
4 A वर्णानासगच्छत्
5 B संगच्छते
6 A omits न
7 A सर्वजनीनत्वात्
8 A omits इति
9 A प्रत्यायाययन्ति
10 A व्यास
11 B संभद्दी
12 B यद ( द् ? ) बलात्
13 A स्फुटयते
14 B व्यञ्ज्यते
15 A स्फोटवर्णाभिव्यङ्ग्यः
16 A स्पष्टीभवति
17 A यस्मादर्थः
18 B omits स्फोटोऽर्थप्रत्यायक इति; A अर्थःप्रत्यायक

'अयं[1] गौरित्यत्र कः शब्दः। येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणानां संप्रत्ययो[2] भवति स शब्दः। अथवा प्रतीति[3] ( त ? ) पदार्थको लोके ध्वनिः[4] शब्द इत्युच्यते' इति॥ तस्मादेकं पदमिति प्रतीतिः स्फोटावलम्बनेनेति[5] वैयाकरणस्याशङ्कामपनयति[6]—वर्णावगाहिनीति। अयमाशयः—पदप्रतीतिर्वर्णातिरिक्त[7]लौकिकस्फोटाख्यपदार्थावगाहिनी न भवति स्फोटे प्रमाणाभावात्। न तावत् प्रत्यक्षमत्र[8] क्रमते। गौरित्युक्ते गकारौकारविसर्जनीयवर्णातिरिक्तस्य कस्याचिदप्यनुभवानारोहात्। भवानपि चक्षुषी निमील्य परिभावयतु। गौरित्युक्ते वर्णा एवानुभूयन्ते ततोऽतिरिक्तं किंचिन्ने[9] (किंचने ?) ति। तस्मात् स्फोटे न प्रत्यक्षं प्रमाणम्। नाप्यर्थापत्तिर्वर्णेभ्य एवार्थप्रतिपत्त्युपपत्तावर्थापत्तेरन्यथैवोपपत्तेः। किं च किमभिव्यक्तः[10] स्फोटोऽर्थं प्रत्याययत्यनभिव्यक्तो वा। न चरमः। सर्वपदार्थप्रत्ययलक्षणकार्योत्पादकप्रसङ्गात्[11]। स्फोटस्य नित्यत्वाभ्युपगमेन[12] निरपेक्षस्य हेतोः सदा सत्त्वेन कार्यस्य विलम्बायोगात्। अथैतद्दोषपरिजिहीर्षयाभिव्यक्तः स्फोटोऽर्थं[13] प्रत्याययतीति[14] चेत्तदाभिव्यञ्जयन्तो[15] वर्णाः किं प्रत्येकमाभिव्यञ्जयन्ति संभूय वा। पक्षद्वयेऽपि भवता वर्णानां वाचकत्वपक्षे ये दोषा भाषितास्त एव स्फोटाभिव्यञ्जकत्वपक्षेऽपि[16] व्या ( आ ? ) वर्तनीयाः। तदुक्तम्—

**'यस्यानवयवः[17] स्फोटो व्यज्यते वर्णबुद्धिभिः।**
**सोऽपि पर्यनुयोगेन[18] नैकेनापि विमुच्यते॥'** इति।

---

1 A omits अयं
2 A संप्रयोगो
3 A प्रतीतपदार्थको
4 B ध्वनिशब्दः
5 B स्फोटालम्बनैवेति; A एवेति
6 A सङ्का
7 A B वर्णातिरिक्ता
8 A प्रत्यक्षमात्रं
9 A किंचिन्नेति; B किंचनेति
10 A अभिव्यक्तस्फोटो
11 B कार्योत्पादप्रसङ्गत
12 A नित्यत्वाभ्युपगमने
13 B स्फा ( स्फो ) टो
14 B प्रत्यायतीति
15 A चेत्त अभिव्यञ्जयन्तो
16 B omits अपि
17 A B नवयवस्फोटो
18 A वर्यनुयोगेन

तथा च—

'यत्रोभयोः समो दोषः परिहारोऽपि[1] वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥'

इति न्यायाद्भवतस्तूष्णींभाव[2] एव शरणम् । किंच स्फोटः[3] कल्पनीयस्तस्य वाचकत्वशक्तिः[4] कल्पनीया ततो वरमुभयसिद्धानां वर्णानां वाचकत्वशक्तिकल्पना । तस्मात् पदप्रतीतिर्वर्णावगाहिनी[5] न तु वर्णातिरिक्तं शशविषाणकल्पं स्फोटमवगाहत इति सिद्धम्[6] । नन्वेकस्मिन् वर्णे पदप्रतीतिर्न जायते[7] तथात्वे तावतैवार्थप्रतिपत्त्युपपत्ता[8]वितरवर्णवैयर्थ्यप्रसङ्गात् । तत्राह—**अनेकेति** । ननु चरमवर्णश्रवणकाले तदितरवर्णाभावात् कथमनेकवर्णावगाहनमित्यत आह—**सदसदिति** । चरमवर्णः सन्[9] प्राञ्चो वर्णा असन्त इत्यर्थः । क्रमेण सदसदनेकवर्णावगाहन[10]सत्त्वेऽपि पदप्रतीतिर्न जायत इत्यत आह— **एकदैवेति** । यदा युगपत्सदसदनेकवर्णावगाहनं तदा पदप्रतीतिर्जायत एवेत्यर्थः[11] । नन्वेवंविधा प्रतीतिः केन जायत इत्यत आह—**श्रोत्रेणेति** । ननु श्रोत्रेन्द्रियं सन्तमेवार्थं गृह्णाति नासन्तं बाह्येन्द्रियत्वात् संप्रतिपन्नवदित्याशङ्क्य सहकारिसामर्थ्यादसद्ग्रहणमुपपद्यत[12] इत्यभिप्रेत्याह—**पूर्वपूर्वेति** । प्रत्यभिज्ञायमानविषयग्राहके चक्षुरादावनैकान्तिकत्वमनुमानस्य दूषणमिति भावः । ननु पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतेन श्रोत्रेण सदसदनेकवर्णप्रतीतिरुत्पद्यतां पदप्रतीतिः कथमुत्पद्यत इत्यत आह—**पदव्युत्पादनेति** । विभक्त्यन्तेषु[13] वर्णेषु 'सुप्तिङन्तं पदम्—' इति पाणिनिना[14] 'विभक्त्यन्तं पदम्' इति[15] गौतमेन च पदसंज्ञाया विहितत्वात् । तत्संकेतग्रहणानुगृहीतेन श्रोत्रेण

---

1 B परिहारोऽथवा
2 B तूष्णीभाव
3 B स्फोटं कल्पनीयं
4 A B वाचकशक्तिः
5 A पदप्रतीतिवर्णावगाहिनी
6 B इति सिद्धमिति
7 A जन्यते
8 A B तावतैवार्थप्रतीतौ
9 B चरमवर्णा सन्
10 A वर्णावगाहने
11 B इवेत्यर्थः
12 B अभ्युपपद्यते
13 B विभक्तं तेषु
14 B पाणिनिमतं
15 B विभक्त्यन्तपदमिति

वर्णेष्वेव पदबुद्धिर्भवतीति भावः। ननु सन्त[1] ( संकेतमेव ? ) मेव चरम-वर्णं[2] गृह्णातीत्युक्तं तत्कथमित्याशङ्क्याह—**अन्त्यवर्णेति**। नन्वन्त्यवर्णस्य प्रागेव श्रुतत्वेन तत्संबन्धत्वं[3] न घटते[4] तत्राह—**अन्त्यवर्णश्रवणेति**। ननु यदाकदाचित्[5] ( पूर्व ? ) पूर्ववर्णानुभवे[6] जाते तज्जनितसंस्कारसहकृतं[7] श्रोत्रमनेकवर्णग्रहणं करोतीति चेत् तन्न संगच्छते तथादर्शनादित्यत आह—**पूर्वपूर्वेति**। अनुभूयेत्यनेन[8] पूर्वपूर्ववर्णानुभवान्त्यवर्णश्रवणयोरव्यव-हितत्वं विवक्षितमित्यर्थः[9]। ननु किमनया क्लिष्टकल्पनया[10] युगपदनुभूय-मानेषु वर्णेषु पदप्रतीतिर्जायतामित्यत[11] आह—**एकदानेकेति**। ननु वर्णानां नित्यत्वाभ्युपगमे युगपदनेकवर्णानुभवः संभाव्यते। वर्णनित्यत्वे चानु-मानमस्ति शब्दो[12] नित्योऽद्रव[13] ( मूर्तद्र ? ) व्यत्वादाकाशवदिति चेत्तत्राह—**आशुतरेति**। गुणत्वस्य प्रागेव प्रसाधितत्वाद्धेतुरासिद्ध इत्यर्थः। नन्व-नेकेषु वर्णेषु पदप्रतीतिर्जायत इत्युक्तं तर्हि सर[14] इत्येतस्मिन् पदे[15] यावन्तो वर्णास्तावन्त एव रस[16] इत्यत्रापि। एवं वनं[17] नवं नदी दीनो मारो रामो राजा जारेत्यादिष्वर्थभेदप्रतीतिर्न[18] स्यात्तत्राह—**क्रमवतामिति**[19]। क्रमः[20] पौर्वा-पर्यं तच्चोत्पत्तिमतां[21] वर्णानां संभवतीत्यक्षरार्थः। अयं भावः—न हि विपरीतक्रमाणां वर्णानां वाचकशक्तिरभ्युपगम्यते येनैवमुपालभ्येत किं तु कार्योन्नेयत्वाच्छक्तेर्यथा तेभ्यः कार्यं दृश्यते तथा तेषां शक्तिः कल्प्यते[22]। तदुक्तम्—

---

1 A संकेतमेव
2 A चरमं वर्णं
3 B तत्संबध ( न्ध ? ) त्वं
4 B युज्यते
5 B omits यदा
6 A पूर्वपूर्व
7 B संस्कारसंस्कृतं
8 A अनुभूयत इत्यनेन
9 B विवक्षित इत्यर्थः
10 A कष्टकल्पनया
11 A जायत इत्यत आह; B जायतामि-( इ ) त्यत
12 A शब्दे ( ब्दो ? ) नित्यः
13 A अद्रव्यद्रव्यत्वात्; B अमूर्तद्रव्य-त्वात्
14 A रस
15 A omits पदे
16 A सर
17 A वननवनदीदीनमारोरोमाराजारे-त्यादिषु
18 B प्रतीतिन ( र्न )
29 A क्रमतामिति
20 A क्रमपौर्वापर्यं
21 A तत्रोत्पत्तिमतां
22 A कल्पते

' यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः[1] प्रज्ञान (त ?) सामर्थ्यास्ते तथैवावबोधकाः ' ।। इति ।

अनेन प्रकारेण तत्र वाक्येषु स्थितानामुच्चरितप्रध्वंसित्वेन[2] युगपदनुभवासंभवादुक्तसहकारिसहकृतेन श्रोत्रेणोनेकेषु वर्णेषु पदप्रतीतिर्जायत इति । ननु श्रोत्रेन्द्रियस्यैवंविधप्रतीतिजननसामर्थ्यं सत् कुतः समायातमित्याशङ्क्य सहकारिबलादायातमित्याह—**सहकारिदार्ढ्यादिति** । ननु पूर्वपूर्ववर्णानुभवसंस्कारबलात् श्रोत्रेन्द्रियं सदसदनेकवर्णालम्बनां[3] पदप्रतीतिमुत्पादयतीत्युक्तं तन्न युज्यते संस्कारा हि यद्विषयानुभवसमुत्पादितास्तद्विषयस्मरणसंपादनसमर्थास्तत्कार्यान्तरं कर्तुमुत्सहन्ते । अत एव स्फोटसिद्धौ प्रयतमानो **मण्डनमिश्रः** प्राह—

' संस्काराः खलु यद्वस्तुरूपप्रख्याविभाविताः ।
फलं तत्रैव जनयन्त्यतोऽर्थे धीर्न कल्प्यते[4] ' ।। इति ।

तस्मात्संस्कारसनाथस्य श्रोत्रस्य पदप्रतीतिजनकत्वं न युक्तमिति शङ्कितत्वात्[5] म (न्म ?) ण्डनवचनं गगनकुसुममण्डनाडम्बरं विलम्बयति[6] । संस्कारसहकृतस्य चक्षुषः स्मृतिव्यतिरिक्तप्रत्यभिज्ञानजननं सामर्थ्यस्य दृष्टत्वात् । उक्तं च न्यायाचार्यैः—

' यद्यपि स्मृतिहेतुत्वं संस्कारस्य व्यवस्थितम् ।
कार्यान्तरेऽपि सामर्थ्यं तस्य न प्रतिहन्यते ।। ' इति ।

तस्मात् संस्कारसहकृतश्रोत्रेन्द्रियजनितायाः प्रतीतेः प्रत्यभिज्ञानवत् सदसदनेकवस्त्ववगाहित्वं संभाव्यत इत्यभिसंधानमभिधत्ते[7]—**प्रत्याभिज्ञानवदिति** । ननु सोऽयं देवदत्त इति प्रत्यभिज्ञानस्य पूर्वापरकालीनवस्तुपरामर्शित्वं[8] न संगच्छते । प्रत्यभिज्ञायां ग्रहणस्मरणात्मकत्वेनैकज्ञान-

---

1 A वर्णाः प्रज्ञातसामर्थ्याः
2 A उच्चारितप्रध्वंसितत्वेन
3 A वर्णालम्बना पदप्रतीतिः
4 A कल्प्य इति
5 A शङ्कित्वात देतन्मण्डन
6 A विडम्बयति
7 A अभिसंधिं
8 A परामर्षित्वं

त्वाभावात् । तथाहि [1]इन्द्रियं संनिहितं विषयमवगाहते । [2]नन्वसंनि-
हितं पूर्वं देशं कालं चावगाहितुं [3]न शक्नोति । अत एवेन्द्रिया-
ज्जायमानायां प्रतीताविदंतैव परिस्फुरति । न [4]तत्तासंस्कारोऽपि
पूर्वानुभवभाविनं[5]( त ? )स्तद्विषयामेव स्मृतिं जनयितुमीष्टे नापरदे[6]शकाल-
विषयां प्रतीतिम् । अत एव तत्र तत्तैवावभासते नेदंता । तस्मादिन्द्रि-
यस्य संनिहितमात्रविषयत्वात् संस्कारस्य च पूर्वानुभूतमात्रविषयत्वा[7]त्तत्ते-
दंतोभयविषयज्ञानजनने तयोः सामर्थ्याभावात् ग्रह[8]णस्मरणात्मके द्वे
इमे ज्ञाने न त्वेकं विज्ञानम् । तथा [9]च नायं दृष्टान्त इत्याशङ्क्याह—
**प्रत्यभिज्ञानेति** । अयमाशयः—सोऽयं देवदत्त इति विज्ञाने पूर्वापर-
कालावच्छिन्नमेकं वस्तुतत्त्वं तावच्चकास्ति । न चैतदस्य विषयो [10]न [11]भव-
तीति समस्ति सर्वजनीनानुभवविरोधात् । ग्रहणस्म[12]रणेन [13]चानेकविषय-
मवगाहते । तस्मादेकमेवेदं विज्ञानमिति प्रतीतिसामर्थ्यादास्थे[14]यमिति । तदु-
क्तम्—‘ संविदेव हि भगवती विषयसत्त्वोपगमे शरणम् ’ । इति । इन्द्रिय-
संस्कारयोः प्रत्येकं सामर्थ्याभावेऽपि[15] मिलितयोस्तयोः सामर्थ्यसंभवात् ।
तस्मादेकमेव विज्ञानमनुभवात्मकम् । अनुमानं च । विमतमनुभवात्मकं प्रत्य-
क्षत्वात् संम[16]तवदिति । अनेनाभिप्रायेण प्रत्यभिज्ञानं प्रत्यक्ष इत्यत्र परमतं
निरासितुं[17] प्रत्यक्षग्रहणं परिक्षि[18]प्तम् । तस्मात्सं[19]स्कारसहकृतेन्द्रियजन्यत्वात्

1 A इन्द्रियं हि संनिहितविषयं
2 A नत्वसंनिहितं
3 A omits न
4 A तत्रासंस्कारोऽपि
5 A पूर्वानुभवभावितः
6 B देशकालाविषयां
7 A तत्रेदंतो; B विषयत्वात्तत्वेदंतोभय
8 B स्मरणाभावाग्रहणस्मरणे
9 B omits च
10 B न च तदस्य
11 B संभवतीति
12 B ग्रहणस्मरणे च नैकं विषयमवगा-
हेते
13 A चनैकं वस्तु
14 B omits इति
15 A उभयो [ : ] सामर्थ्यसंभवात्
16 A संमतविदिति; B संमतवदिति
17 A प्रतिक्षेप्तुं B प्रक्षेप्तुं
18 A B प्रक्षिप्तम्
19 B सस्का ( संस्कार ? )

प्रत्यभिज्ञानस्योभयविषयत्वमुपपत्स्यते[1] । प्रतिपत्स्यते च प्रत्याभिज्ञानस्य[2] प्रत्यभिज्ञा विषयेन्द्रियसामर्थ्यानुविधानात् । ततश्च न कदाचिदनुपपत्ति-रिति प्रत्यभिज्ञानं भवति दृष्टान्तः । यथा संस्कारसहकृतेन्द्रियजन्यं प्रत्यक्षज्ञानमसन्तं[3] कालं[4] देशं चावगाहते सन्तमेकं[5] कालं देशं च । तद्वत प्रतीतिरपि[6] सदसदवगाहिनीति । ननु नानापदेष्वेकं[7] वाक्यमिति प्रतीतिः संजायते । सा च नानापदातिरिक्तवाक्यस्फोटानङ्गीकारे न संभवति । परस्परविलक्षणेषु पुष्पेषु विना सूत्रं मालाप्रत्ययवत्पदमालाया-मन्तरेणाभिन्नं[8] निमित्तमेकप्रतीतेरयोगात्[9] । वाक्यार्थप्रत्ययानुपपत्त्या च वाक्यस्फोटोऽङ्गीकरणीय इत्याशङ्क्य वर्णानां वाचकत्ववर्णनया[10] पद-स्फोटस्य विघटितत्वाद् वाक्यस्फोटो विघटित एवेति मत्वा वाक्यप्रतीत्यु-त्पादनप्रकारमाह[11]—**तत इति** । यतः पदस्फोटो निराकृतस्ततो वर्णेष्वेव पदप्रतीतौ जातायां पदेष्वेव वाक्यप्रतीतिः । तत्संस्कारसहकृतेनान्त्यपद-संबन्धे(द्धे?)न[12] श्रोत्रेन्द्रियेण क्रियत इत्यर्थः ।

[13]अप्रतीतपदार्थकस्य पुंसः पदश्रवणेऽपि वाक्यप्रतीतेरनुदयात् वाक्यप्र-तीतौ पदार्थप्रतीतिरङ्गमिति[14] दर्शयति—**पदार्थेति**[15] । इयता प्रबन्धेनोपपादित-मर्थमुपसंहरति—**तदिदमिति** । यतो वर्णानां समूहः पदं पदसमूहो वाक्य-मिति साधितं[16] तस्मादिदं पदसमूहरूपं वाक्यमाप्तेन यथार्थदर्शिना[17] यथार्थ-वादिना पुरुषेण प्रयुज्यमानं शब्दाभिधं[18] प्रमाणम् । शब्द्यतेऽनेनेति

1 A उपपत्स्य
2 A प्रत्यभिज्ञानं प्रत्यक्षतां; B प्रत्याभि-ज्ञानं प्रत्यक्षतां
3 A B प्रत्यभिज्ञानमसतं
4 B देशं कालं चावगाहते
5 B सन्तमेतं काल ( लं? ) देशं च
6 A B पदप्रतीतिरपि
7 A एवं
8 A माल्यमन्तरेण
9 A भिन्ननिमित्त
10 B वर्णिततया
11 B प्रकारं प्राह
12 A B संबद्धेन
13 A अप्रतीतपदार्थस्य
14 A पदार्थप्रतीतिरङ्गम्
15 A पदार्थ इति यता
16 A साधतं
17 A यथार्थदर्शना यथावादिना
18 A शब्दाभिध प्रमाण शप्यते

करणव्युत्पत्त्या निष्पन्नः शब्दः[1] शब्द इति भावः। यद्येवं करणस्य फलवत्त्वनियमात् फलं वक्तव्यं तत्राह—**फलं त्वस्येति**[2]। केचन[3] पदानि पदार्थान् प्रतिपादयन्ति[4] ते च पदार्था वाक्यार्थज्ञानं जनयन्ति[5] तथा च वाक्यार्थज्ञाने पदार्था एव करणं पदार्थप्रतिपादने पदानामुपयोग इत्याचक्षते। तदपि वाक्यस्य फलं वाक्यार्थज्ञानमिति वदता प्रत्युक्तम्। पदार्थाना-[6]मवगतादिरूपतया कारणत्वानुपपत्तौ तद्विशेषकारणत्वायोगात्[7]। पदानां तु पूर्वभावनियमेन[8] पदार्थप्रतिपादनमवान्तरव्यापारीकृत्य[9] वाक्यार्थप्रतीतिजनकत्वोपपत्तेः। न हि स्वाङ्गं स्वस्य व्यवधायकमिति न्यायेन व्यापारस्याव्यवधायकत्वाच्च। तदुक्तम्[10]—

**'साक्षाद् यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्।**
**वर्णास्तथापि नैतस्मिन्[11] पर्यवस्यन्ति निष्फले॥**
**वाक्यार्थमितये तेषां[12] प्रवृत्तौ नान्तरीयकम्[13]॥**
**पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्'** ॥ इति।

प्रभाकरमतानुसारिणः केचन वैदिकवाक्यस्य पृथक् प्रमाणत्वमास्थाय[14] लौकिकवाक्यस्यानुमानान्तर्भावमास्थिषत[15]। तन्निराकर्तुकामो[16] वेदवल्लोकेऽप्याकाङ्क्षादिमत्तया वाक्यार्थप्रतिपादने निर्णीतशक्तेर्[17]वाक्यादेव वाक्यार्थ-[18]प्रतिपत्त्युपपत्तौ य एव वैदिकास्त एव लौकिका[19] इति लोकवेदाधिकरणन्यायेन लौकिकवाक्यस्य वैदिकवाक्यसमानयोगक्षेमतया नानुमानेऽन्तर्भाव[20]

1 A omits शब्दः
2 A तस्येति
3 A केचिन
4 A प्रतिपादयांति
5 A जयंति
6 A पदार्थना
7 B तद्विशेषकरणत्वायोगात्
8 B पूर्वभावित्वनियमेन
9 A व्यापारीकृतं
10 A यदुक्तम्
11 A ते तस्मिन्
12 A षांते ( तेषां ? )
13 A नान्तरायकम्
14 A आख्याय; B आस्ता ( स्था ? ) य
15 B आस्ति ( स्थि ? ) षत
16 A तान्निराकर्तुकामो
17 B निर्नीत ( र्णीत ? ) शक्तेः
18 B वाक्यादेवार्थ
19 B य एव लौकिकास्त एव वैदिकाः
20 A B नानुमानान्तर्भाव

इत्यभिसंधायाभिधत्ते—**तच्चेति** । तदाप्तवाक्यं शब्द इत्युक्तम् । एतदुक्तेन प्रकारेणोदाहरणनिष्ठतया[1] प्रदर्शितम् । शब्दाह्वयप्रमाणस्य लक्षणमसाधारणो धर्म आप्तवाक्यत्वं लौकिकवैदिकवाक्ययोः[2] साधारणम् । वेदवल्लोकेऽपि वाक्यत्वेनैव प्रमाणं नानुमानत्वेनेत्यर्थः । ननु लोकवेदयोः किं सर्वात्मना समानमित्याशङ्क्य विशेषं वक्तुं लोके तावदाप्तानाप्तविभागं विदधाति—**लोके त्विति** । यथार्थदर्शी[3] यथार्थवादी चाप्तो भवति । भ्रान्तो विप्रलम्भकश्चाप्तो[4] न भवतीति भावः । फलितमाह[5]—**अत इति** । लोके पुरुषेषु भ्रान्तिविप्रलम्भयोः[6] संभवात् किंचिदेव लौकिकं वाक्यं प्रमाणं न सर्वमित्यर्थः । किं तल्लौकिकं वाक्यं यत् प्रमाणभावं भजते तत्राह—**यदिति** । ननु लोकवद्वेदेऽपि किंचिदेव वाक्यं किं प्रमाणमिति शङ्कमानं[7] प्रत्याह—**वेदे त्विति** । ननु वेदस्य परमेश्वरप्रणीतत्वेन[8] निराशङ्कं प्रामाण्यं न लभ्यते । पुरुषेषु[9] रागद्वेषसंभावनया[10]ऽयथार्थवाक्यप्रणयनस्य संभवात् । तदुक्तम्—

> ' **रागद्वेषादिकालुष्यं पुरुषेषूपलभ्यते ।**
> **अतः[11] प्रामाण्यशङ्कापि निष्कलङ्के प्रसज्यते ॥** इति ।'

तस्माद्वेदस्य निर्विचिकित्सप्रामाण्यलाभाय नित्यत्वमास्थेयमितीमां शङ्कां पराकर्तुमुक्तम्—**परमाप्तेति** । अत्र चाप्तत्वं प्रक्षीणरागादिदोषत्वे सत्युपदेष्टृत्वम् । तच्च द्विविधं परमपरं च । तत्र परं सर्वविषयं सर्वज्ञस्यैव संभवेत्[12] । अपरं पुनरसर्वविषयमार्यम्लेच्छादेरसर्वविद एवेति । यथार्थतः सर्वार्थदर्शित्वेन परमाप्तः प्रक्षीणरागद्वेषादिदोषः कृपावान् परमेश्वरः परोपदेशाय प्रवृत्तो यथार्थमुपादिशतीति[13] च[14] संभाव्यते । अतस्तत्प्रणीतं

---

1 B प्रकरणोदाहरणनिष्ठतया
2 B लौकिकवैदिकयोः
3 A omits यथार्थदर्शी
4 B omits च
5 B फलतिमाह
6 B भ्रान्त
7 A इत्याशङ्कमानं
8 B प्रणीतत्वे
9 B पुरुषे
10 A रागद्वेषादिसंभावनया
11 A B अतोऽप्रामाण्यशङ्कापि
12 B संभवति
13 A अनन्यर्थ (?)
14 A न

सर्ववाक्यं प्रमाणमेवेत्यक्षरार्थः । इदमत्राकूतम् । यदवादि पूर्ववादिना वेदस्य नित्यत्वे न प्रामाण्यमास्थेयमिति तदसारम् । प्रामाण्यस्य दोषाभावप्रयुक्तत्वेन नित्यत्वप्रयुक्तत्वाभावात् । सत्यपि नित्यत्वे मनसः श्रवणस्य वागन्तुकदोषेण संशयविपर्ययोत्पादनवेलायामप्रामाण्यदर्शनात् । असत्यपि नित्यत्वे निर्धूत[1]दोषाणां चक्षुरादीनां प्रामाण्योपलम्भात् । दोषास्तु पुरुषधौरेये न संभावनामर्हन्ति । यत आहुः—

'क्लेशकर्मविपाकाशयैरपरामृष्टः[2] पुरुषविशेष ईश्वरः ।' इति ।

न चेत्थंभूते परमेश्वरे प्रमाणाभावः । अङ्कुरादिकं सकर्तृकं कार्यत्वात् कुम्भवदित्यादीना[3]मनादीनां[4] नवानामीश्वरसाधकानामनुमानानां जागरूकत्वात् । तदुदितमुदयनेन ।

**कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः[5] ।**
**वाक्यात् संख्याविशेषाच्च[6] साध्यो विश्व[7]विदव्ययः ॥** इति ।

न च वेदवाक्यानाम[8]नादित्वे प्रमाणाभावः । वेदवाक्यान्यनित्यानि वाक्यत्वात् कालिदासादि[9]वाक्यवदित्यादेः संभवात् । ननु वेदवाक्यानि नित्यान्यस्मर्यमाणकर्तृकत्वादाकाशवदिति नित्यत्वेऽपि प्रमाणमस्तीति चेन्नैवम् । अननुभूयमानकर्तृकै[10]र्घटादिभिर्व्यभिचारात् । अथाज्ञायमानकर्तृकत्वं[11] हेतुः क्रियते तदाऽसिद्धिरेव । अनुमानागमाभ्यां तज्ज्ञानस्य[12] संभवात् । अथवा यथाश्रुतमेवास्तु । तथापि जीर्णकूपारामादौ व्यभिचारः । अथैतद्दोषपरिजिहीर्षया संप्रदायाविच्छेदे सतीति विशेष्यते । एवमपि गाथादि[13]शब्दैः सुभाषितश्लोकैश्च व्यभिचारस्तदवस्थ एव । किं च

---

1 A निर्हृत
2 B o परामृष्टपुरुषविशेषः
3 A कुम्भवादिति इत्यादीनां
4 B अनादीनवानां
5 A प्रत्ययश्श्रुतेः
6 A न च
7 B विश्वंविद्
8 B अनित्यत्वे
9 B omits आदि
10 A अनुभूयमानकर्तृकैः
11 B कर्तृत्वं
12 B तत्त्वज्ञानस्य
13 B काव्यादिशब्दैः

संप्रदायो नाम वृद्धव्यवहारानुगतपदवर्णस्वरानियमः । तस्याविच्छेदो नाम[1] यथापूर्वमुच्चारणम् । तस्य[2] च सपक्षे विपक्षे[3] चावर्तमानतया दृष्टान्तासिद्धिः । तस्मात् परमाप्तेन परमेश्वरेण प्रणीतत्वाद्वेदस्य प्रामाण्यं सिद्धम् । अत एव कणादः प्रणिनाय—'तद्वचनादाम्नायप्रामाण्यमिति'[4] । महता प्रबन्धेन प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रोक्तं प्रमाणचतुष्टयं व्याख्यातमित्युपसंहरति—**वर्णितानीति** । एवमिति शेषः । नन्वन्यान्यप्यर्थापत्त्यादीनि प्रमाणानीति परिसंचक्षते परीक्षकाः । अतः कथमित्थं कथ्यत इत्याशङ्क्य तेषां यथायथमुक्तेष्वेव[5] प्रमाणेष्वन्तर्भावान्न कश्चिच्छङ्काशूक इत्याह—**एतेभ्योऽन्यदिति**[6] । प्रत्यक्षादिचतुष्टयव्यतिरिक्तं पृथक् प्रमाणं न भवतीत्यर्थः । अप्रमाणस्य प्रमाणान्तर्भावो दुर्वच इति सूचयितुं प्रमाणस्य[7] सत इत्युक्तम् ।

उक्तमन्तर्भावमुपश्रुत्य तदमृष्यमाणो मीमांसकः[8] प्रत्यवतिष्ठते[9]—**नन्वित्यादिना** । अर्थापत्तेः पृथक् प्रमाणत्वमुपपादयति—**तथाहीति** । अनुपपद्यमानार्थदर्शनात्तदुपपादकभूतार्थान्तरकल्पनमर्थापत्तिः । स च दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यनुपपद्यमानार्थस्य दृष्टत्वश्रुतत्वभेदेन[10] दृष्टार्थापत्तिः[11] श्रुतार्थापत्तिरिति[12] द्विविधेति । एतत्सिद्धि ( द्ध ? )[13] वत्[14] कृत्वोदाहरणनिष्ठं कृत्वा प्रदर्शयति[15]—**पीनो देवदत्त इति** । कल्पनाप्रकारं दर्शयति—**दिवा अभुञ्जानस्येति** । दिवाभोजनरहितस्य पुष्टत्वं रात्रिभोजनेन विना नावकल्पत इति रात्रिभोजनं[16] कल्प्यत[17]

---

1 A omits नाम
2 A omits तस्य
3 A B omit विपक्षे च
4 A आम्नायप्रामाण्यं
5 B यथायथमुक्तेष्वपि
6 A तेभ्योऽन्यदिति
7 B प्रामाण्यस्य
8 A मीमांशकः
9 A प्रत्यवतिष्ट
10 A दृष्टश्रुततत्वभेदेन
11 B दृष्टार्थापत्ति [ः] श्रुतार्थापत्तिश्चेति
12 A श्रुतार्थापत्तिश्चेति
13 B सिद्धवत्
14 A सिद्धवत्
15 B प्रदर्शयति
16 A रात्रिभोजनकल्पना इत्यर्थः
17 B कल्पत इत्यर्थः

इत्यर्थः । फलितमाह— **अत इति** । नन्वर्थापत्त्याख्यं[1] प्रमाणं प्रत्यक्षादीनामन्यतमं भवात्वित्याशङ्क्य[2] रात्रिभोजनस्य प्रत्यक्षाद्यविषयत्वान्नैवमित्याह— **प्रत्यक्षादिभ्य इति** । रात्रिभोजनस्य केवलव्यतिरेक्यनुमानविषयत्वेनार्थापत्तेरनुमानानतिरेकान्न पृथक् प्रमाणत्वमिति परिहरति— **नैतदिति** । तदुपपादयति[3]— **तथाहीति** । पञ्चावयवमनुमानवाक्यं प्रयुङ्क्ते— **अयं देवदत्त इति** । दिवाऽभुञ्जानस्य पीनत्वं रात्रिभोजनमन्तरेणानुपपद्यमानं रात्रिभोजनं कल्पयतीति वदता भवतैव पीनत्वरात्रिभोजनयोः कार्यकारणभावेन धूमधूमध्वजवन्नियम्यानियामकभावो दर्शितः । न ह्यनियम्यस्य नियामकं विना[4] किंचिदनुपपन्नमतिप्रसङ्गात् । तदुक्तम्—

**'अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः'** । इति[5] ।

**'नचानयोर्विरोधोस्ति प्रत्यक्षे[6] चाप्यसौ समः'** । इति ।

नन्वन्वयाभावान्नेदमनुमानमिति चेन्न । व्यतिरेकाभावेनान्वयिनोऽप्यननुमानत्वप्रसङ्गात्[7] । तस्माद् व्यतिरेकमुखेन[8] निरूप्यां व्याप्तिमुपजीव्य प्रवर्तमानत्वादर्थापत्तिरनुमानान्नातिरिच्यते । ततश्चार्थापत्तेः पृथक्प्रमाणत्वकल्पना नावकल्प्यते[9] इति[10] भावः ॥

नन्वभावाख्यं प्रमाणान्तरमस्तीति षष्ठप्रमाणगम्याभाववादी भाट्टः प्रत्यवतिष्ठते— **नन्वित्यादिना** । प्रमेयाभावप्रतीतौ भावग्राहकप्रत्यक्षादिप्रमाणपञ्चकव्यावृत्तिरूपमभावाख्यं प्रमाणान्तरमङ्गीकरणीयम्[11] । अन्यथा अभावप्रतीतिरेव नोदयमासादयेदित्याद्यभिप्रेत्याह[12]— **तच्चाभावेति** । तदेतदुप-

1 A नन्वर्थाप्रत्याख्यं
2 A omits त्वित्याशङ्क्य रात्रिभोजनस्य प्रत्यक्षा
3 A ते (त?) देतदुपपादयाति
4 B वि (दि?) वा
5 A B omit इति
6 A omits न चानयोर्विरोधोऽस्ति प्रत्यक्षे चाप्यसौ समः । इति ।
7 B व्यतिरेकाभावेऽन्वयिनो
8 B व्यतिरेकमुखनिरूप्यां
9 A नावकल्प्या
10 B omits इति भावः
11 B अन्वेषणीयम्
12 A omits आद्यभिप्रेत्य

पादयति— **तथाहीति** । ननु घटाद्यनुपलब्ध्या घटाद्यभावो गृह्यत इत्युक्तं तत्रानुपलब्धिर्नाम नास्तीति ज्ञानं विवक्ष्यते[1] चेत्तदा घटादिनास्तित्वज्ञानेन[2] घटादिनास्तित्वज्ञानं जातमिति स्यात् । तन्न संभवति । पूर्वापरभावलक्षणस्य[3] कार्यकारणभावस्य भेदसमानाधिकरणत्वेनैकस्यासंभवादित्याशङ्क्य विवक्षितमर्थमाह[4]— **अनुपलब्धिश्चेति** । उपपादितमर्थमुपसंहरति— **इत्यभावप्रमाणेनेति** । न चेह भूतले घटो नास्तीत्यत्राभावग्रहणमिन्द्रियान्वयव्यतिरेकानुविधायित्वादैन्द्रियकमिति[5] वाच्यम् । अधिकरणग्रहणोपक्षीणत्वादिन्द्रियव्यापारस्य । तथाहि[6] धूमज्ञानोपक्षीणस्येन्द्रियव्यापारस्य कार्यं न भवति पश्चाद्भवदपि धूमध्वजज्ञानं तथाधिकरणग्रहणोपक्षीणस्येन्द्रियव्यापारस्य कार्यं न भवति पश्चाद्भवदप्यभावग्रहणमिति भावः । तदुक्तम्[7]—

> **' अन्वयाधी ( न ? ) जन्मत्वमनुमाने व्यवस्थितम् ।**
> **अर्थापत्तेरियं त्वन्या व्यतिरेकप्रवर्तिनी ॥ '** इति ।

अघटं भूतलमित्यत्राभावस्य तर्कानुपलम्भसहायेन प्रत्यक्षेणैव गृह्यमाणत्वादुपलम्भाभावस्य पृथक् प्रमाणत्वं नास्थेयमिति समाधत्ते— **नैतदित्यादिना अभावग्रहणादित्यन्तेन** । न हि यद्[8] येनोत्पद्यते तत्सर्वं तस्य व्यापारः । किं तु येन विना यस्य[9] यदुत्पादनं न संभवति स एव तस्य कारणं स्यात्[10] तस्मिन् कार्ये जनयितव्येऽवान्तरव्यापारः । न च धूमज्ञानेन विना चक्षुर्दहनज्ञानं जनयितुं नेष्टे । पुरोवर्तिनि वह्नौ धूमोपलम्भमन्तरेण तदुत्पत्तिदर्शनात् । प्रकृते त्वधिकरणग्रहणस्य व्यापारलक्षणस्य[11] व्यापारलक्षणलक्षितत्वेनावान्तरव्यापारतया न व्यवधायकत्वमिति

---

1 A विविक्ष्यतेः B विवक्षते चेत्
2 A घटादिना ज्ञानेन
3 A लक्ष्यस्य
4 A विवाक्षितार्थ
5 B अनुव्यधायित्वात्
6 A यथा हि
7 A B omit तदुक्तम् and अन्वयाधीन stanza
8 B यद् तेन येन नोत्पद्येत
9 A B omit यस्य
10 B omits स्यात्
11 B omits व्यापारलक्षणस्य

दृष्टान्तदार्ष्टान्तिकयोर्न साम्यमिति भावः। ये तु निवृत्तः कोलाहल इति शब्दप्रध्वंसस्य प्रत्यक्षत्वं मन्वते[1] तेऽधिकरणग्रहणमवर्जनीयसंनिधिकत्वेनाभावप्रतीतावङ्गमिति[3] नाङ्गीकुर्वते। तन्मते त्वयमङ्गीकारवादोऽनुमानं च। विमतमभावग्रहणमिन्द्रियजन्यमनन्यत्रोपक्षीणेन्द्रियव्यापारभावभावित्वाद् रूपादिज्ञानवदित्यलम्। नन्विन्द्रियाभावयोः संबन्धाभावादभावस्येन्द्रियग्राह्यत्वं न संगच्छते[5]। तस्मादनिच्छतापि[6] स्थूलमतिना[7] षष्ठप्रमाणगम्यत्वमभावस्याभ्युपगन्तव्यमित्यभिधातुमिन्द्रियाणां प्राप्तप्रकाशकत्वं तावदाह—**नन्वित्यादिना**। तदेतदुपपादयति—**तथाहीति**। अनुमानप्रयोगप्रकारं दर्शयति—**इन्द्रियाणीति**[8]। ननु ज्ञानकरणत्वादिति हेतोः स्मृतिज्ञानजनके[9] मनस्यनैकान्तिकता। मनसः स्मर्यमाणैरर्थैः सह संबन्धाभावादिति चेन्नैवम्। संस्कारलक्षणप्रत्यासत्त्यपेक्षया[10] मनसोऽपि प्राप्यकारित्वात्। अत एवाह **कुसुमाञ्जलावुदयनः**।

'असाक्षात्कारित्वेऽपि स्मृतेर्मन[11] एव करणमभ्युपागमन्[12] धीराः संस्कारस्त्वर्थविशेषप्रत्यासत्तावुपयुज्यते'। इति।

ये तु संस्कारमात्रजं[13] ज्ञानं स्मृतिरित्यभिधीयत[14] इति मतमवलम्ब्य मनसः करणत्वं नाभ्युपगच्छन्ति तान् प्रति स्मृतिज्ञाने[15] मनसः करणत्वाभावान्न कोऽपि यत्नः कर्तव्य इति भावः। ननु चक्षुःश्रोत्रयोः प्राप्यकारित्वं न संभवति। तथाहि[16]-किं चक्षुरर्थदेशं गत्वा संबध्यतेऽथवार्थश्चक्षुर्देशम्। नाद्यः। प्रतीतिविरोधात्। न हि शरवद्[17]दर्थदेशं गतं चक्षुः

---

1 A मन्यंते
2 A ग्रहणवर्जनीय
3 A वाङ्ग
4 A संबंधाभावेनाभावस्ये
5 B संगस्यते
6 A अनिच्छताप्यमतिना
7 B अच्छमतिना
8 A इन्द्रियाणिनीति
9 B स्मृतिजनके
10 A प्रत्या प्रत्यासायपेक्षया; B प्रत्यासायपेक्षतया
11 B स्मृतेम (र्म ?) न
12 A अभ्युपागमं; B भ्युपगमनधीराः
13 A संस्कारमात्रसंज्ञानं
14 B अभिधाय तन्मत
15 A omits स्मृति
16 B तथाहीति
17 B सरवद्

केनचिदुपलभ्यते । नापि द्वितीयः[1] । वह्निक्षुरिकादिदर्शनेन दाहपाटनादिप्रसङ्गात् । इतोऽपि चक्षुर्न प्राप्यकारि । नयनोन्मीलनानन्तरं शाखाशीतमयूखयोः समसमयमुपलम्भसंभवात्[2] । काचाभ्रपटलस्फटिकाद्य[3]न्तरितोपलब्धेश्च । तर्हि वीचीतरङ्गन्यायेन श्रवणपथमवतीर्णस्य शब्दस्योपलम्भः संभविष्यतीति चेन्नैवम् । श्रूयमाणः[4] शब्दः प्राच्यः प्रतीच्य उदीच्योऽवाच्य[5] इति दिग्विशेषव्यपदेशानुपपत्तेः[6] । अतश्चक्षुःश्रोत्रयोः प्राप्यकारित्वं न सेत्स्यतीति शङ्कमानं प्रति चक्षुःश्रोत्रे पक्षयित्वानुमानेन प्राप्यकारित्वं साधयामीत्यभिसंधायाभिधत्ते—**यद्वेति** । स्मृतिं प्रति मनसः करणत्वाङ्गीकारवादे[7] बाह्येन्द्रियत्वादिति हेतुः प्रयोक्तव्यः[8] । अप्राप्तप्रकाशकत्वे[9] सर्वार्थस्योपलम्भः स्यादिति विपक्षे बाधकस्तर्कः । चक्षुष[10]स्तावद्रश्मिद्वारार्थसंबन्धोपपत्तेः । समसमयस्योपलम्भस्यासिद्धेरिन्द्रियवृत्तेराशुतरसंचारित्वेनोत्पलपत्रशतव्यतिभेदवद् यौगपद्याभिमानस्य कालसंनिकर्षोपपत्तेः[11] स्वच्छद्रव्यत्वेन काचाभ्रादीनां[12] तेजोगतिप्रतिघातकत्वासंभवाच्च । अनेनाभिप्रायेणाक्षेपसमाधाने सूत्रकारोऽपि चकार—

'अप्राप्य[13] ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः[14][15] कुड्यादिव्यवहि[16]तानुपलब्धेरप्रतिषेधः[17] । अप्रतिघातात् संनिकर्षोपपत्तिः[18]' । इति ।

यच्चोक्तं शब्दग्रहणपक्षे दिग्विशेषव्यपदेशानुपपत्तिरिति । तन्न । दिग्विशेषानुसंधानवतः पुंसस्तदुपपत्तेः । तदनुसंधानविधुरस्य कुतो वायं शब्द इति

1 B adds न हि
2 B उपलं संभवात्
3 B स्फुटिका
4 B श्रूयमाणशब्दः
5 B अपाच्य इति
6 A व्यवदेशानुपपत्तेः
7 A करणत्वानङ्गीकारवादे
8 A प्रयोगक्तव्यः (?)
9 B अप्राप्तः प्रकाशकत्वेन
10 A चाक्षुषः
11 B कालसंनिकर्षणोपपत्ते
12 B काचादीनां
13 B अत्र प्राप्य
14 A स्फाटिका
15 B adds अप्रतिषेधात्
16 B कुड्यादिव्यपहिता न्यायसूत्रेषु च कुड्यान्तरितानुपलब्धेः
17 B अप्रतिषेधात्
18 B संनिकर्षोपपत्तेरिति

संदेहदर्शनाच्च । तस्माच्चक्षुःश्रोत्रयोः प्राप्यकारित्वं सिद्धमिति[1] भावः । दृष्टान्तस्य साध्यविकलतां परिहरति—**त्वगादीनामिति**। ननु भवतु भवदुक्तरीत्या[2] प्राप्यकारित्वमिन्द्रियाणाम् । अत एवाभावग्राहकमपीन्द्रियं संबद्धमेवाभावं गृह्णातु ततश्चाभावस्य किं षष्ठप्रमाणगम्यत्वकल्पनयेत्यत आह—**न चेन्द्रियेति**[3] । इन्द्रियाभावयोः[4] संबन्धाभावं दर्शयितुं प्रसिद्धौ द्वावेव संबन्धावित्याह—**संयोगेति** । नन्वनयोः संबन्धयोरन्यतरः[5] संबन्धो भवत्विन्द्रियाभावयोरित्यत आह—**न तावदिति**[6] । न तावदिन्द्रियाभावयोः संयोगः संगस्यते[7] । संयोगस्य द्रव्यमात्रनिष्ठत्वेनाभावस्य द्रव्यत्वाभावात् । नापि समवायः । इन्द्रियाभावयोरवयवावयव्यादीनामन्यतमत्वाभावादिति भावः । ननु संयोगसमवायाविन्द्रियाभावयोर्न[8] संभवतश्चेन्मा संभूतां नाम[9] विशेषणविशेष्यभावस्तु संभाविष्यत्येवेत्याशङ्क्याह—**विशेषणेति** । सत्यम् । इन्द्रियाभावयोर्विशेषणविशेष्यभावः संभवति परं तु तस्य संबन्धत्वमेव न संभवतीति भावः । न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशङ्क्य[10] तत्रोपपत्तिं[11] कथयति—**भिन्नेति** । भिन्नोभयाश्रितत्वाभावे[12] कथंकारं संबन्धत्वं न स्यादित्याशङ्क्य विशेषण[13]विशेष्यभावस्य संबन्धलक्षणलक्षितत्वाभावात्[14] संबन्धत्वं नास्तीति वक्तुं संबन्धलक्षणं प्रथमं कथयति—**संबन्धो हीत्यादिना**। उदाहरणनिष्ठं कृत्वा दर्शयति—**यथेति** । भेरीदण्डसंयोगे लक्षणानुगतिं विशदयति—**स हीति** । ननु विशेषणविशेष्यभावो[15]ऽप्येतल्लक्षणलक्षितत्वात्[16] संबन्धो भवत्वित्याशङ्क्य तल्लक्षणलक्षितत्वं नास्तीत्याह—**न चेति** । तदेतदुपपादयति—**तथा हीति** । ननु यथा घटघटत्वयोर्भेदः स्फुटमुपलभ्यते तद्वद्दण्ड-

1 A सिद्धमिति
2 B भवदुक्तया रीत्या
3 B न चेन्द्रियाभावयोरिति
4 B इन्द्रियाभावयो [ : ]
5 A अन्यातरः
6 B न ताविति
7 A संगस्यते
8 A संयोगसमवायविन्द्रियाभावयोः
9 B संभूता नाम
10 A omits अर्थ
11 A अत्रोपपत्तिं
12 B भिन्नोभयाश्रितैकत्वाभावे
13 A omits विशेषण
14 A लक्षतत्वाभावात
15 B विशिष्यभावो
16 A भावोऽपि तल्लक्षण

तद्गतविशेषणत्वयोरित्यत आह—**न हीति**। विशेषणत्वस्य दण्डादन्यत्वे बाधकमस्ति। घटत्वस्य घटादन्यत्वे बाधकं नास्तीति भावः। तर्हि विशेषणत्वं दण्डस्य किं न भवतीति पृच्छति—**अपि त्विति**। उत्तरमाह—**स्वरूपमिति**। विशेषणत्वं दण्डस्य स्वरूपमित्यर्थः। कुत[1] इत्यत आह—**अभावस्यापीति**। भाववदभावस्यापि विशेषणत्वादित्यर्थः। नन्वभावस्यापि[2] विशेषणत्वे तस्यार्थान्तरत्वं भवतु को दोष इत्याशङ्क्य विशेषणत्वस्यार्थान्तरत्वे द्रव्यादीनामन्यतमेन तेन[3] भवितव्यं तदन्यतमत्वमभावे[4] न संभवत्यभावस्य भावाधिकरणत्वासंभवादित्याह[5]—**न चाभाव इति**। नन्वभावस्य विशेषणत्वं स्वरूपं चेत् स्वरूपत्वं[6] कदाचिदपि विशेष्यत्वं न स्यात्स्वरूपस्यानपायादित्याशङ्क्य यथैकः पुमांस्तेन तेनोपाधिनोपाधीयमानः[7] पिता माता भ्राता चेति[8] व्यवहारभाग्[9] भवति तद्वदेकमेव स्वरूपं तेन तेनोपाधिनोपाधीयमानं[10] तथा[11] व्यवहारभाग्[12] भविष्यतीति परिहरन्नुक्तमर्थमुपसंहरति—**तस्मादिति**। यस्मादर्थान्तरत्वं[13] न संभवति तस्मात्स्वोपरक्तबुद्धिजनकत्वं[14] यत्स्वरूपं कलशशून्यमवनितलमित्यत्र कलशाभावस्य[15] स्वविशिष्टप्रत्ययजननयोग्यता सैव विशेषणता[16] नार्थान्तरमिति भावः। उक्तन्यायमन्यत्राप्यतिदिशति[17]—**एवमिति**। ऊह्या[18] इत्युक्तम्। कथमूह्या[19] इत्यत आह—**स्वप्रतिबद्धेति**। अग्निव्याप्तो धूम इत्यत्राग्नेः स्वव्याप्तेर्बुद्धि[20]जनन[21]योग्यता सैव व्यापकत्वमित्यर्थः।

---

1 B कुतत (?) इत्यत आह
2 B नन्वभावस्य विशेषणत्वेऽपि
3 B omits तेन
4 B तदन्यतममभावे
5 A संभवतिदित्याह
6 A omits स्वरूपत्वं
7 A उपधीयमानः
8 A भ्रातेत्यादि
9 B व्यव्यवहारभाग (ग् ?) भवति
10 B omits उपाधिना
11 A तथा तथा
12 B व्यवहारभाक्; A व्यवहार (भा ?) ग्भविष्यति
13 A अर्थतरत्वं
14 A स्वोपक्त
15 A कलसाभावस्य
16 B विशेषणं
17 A अतिदिश्यते
18 A उषा इत्युक्तं
19 A कथमुषा
20 A स्वव्याप्तं
21 A बुद्धिजनयोग्यता

तन्त्वादेः कारणत्वस्वरूपं निरूपयति— **कारणत्वमपीति** । व्यापकत्वादे- रर्थान्तरत्वाभावे युक्तिमाह— **अभावस्यापीति** । ननु यथा घटत्व- पटत्वादिशब्दानां घटपटादिगतसामान्यवाचकत्वं तद्व्[1]व्यापकत्वादिशब्दानां[2][3] सामान्यवाचकत्वमस्त्वित्[4]याशङ्क्याह— **न ह्यभाव इति** । विशेषणविशेष्य- भावस्य[5] साधितमर्थान्तरत्वाभावं निगमयति— **तदेवमिति** । यथा भिन्नत्वं न संभवत्येवमुभयाश्रितत्वमपीत्याह- **नापीति** । तत्र युक्तिं वक्ति-**विशेषण इति** । यथा घटत्वं घटमात्रनिष्ठं न पटनिष्ठं तद्वद्विशेषणत्वं[6] विशेषणमात्रनिष्ठं न विशेष्यनिष्ठम् । एवं विशेष्यत्वमपीति[7] भावः । एकत्वमपि नास्तीत्याह— **नाप्येक इति** । द्वन्द्वान्ते श्रूयमाणो भावशब्दः[8] प्रत्येकमभिसंबद्ध्यत इति न्यायेन भावशब्दस्योभयत्र संबन्धे[9] द्वावेतौ धर्माविति भावः । इयता प्रबन्धेन संसाधितं[10] विशेषणविशेष्यभावस्य संबन्धत्वाभावमुपसंहरति— **तस्मादिति** । भिन्नोभयाश्रितत्वाभावादिति भावः । उक्तं न्यायमन्यत्रा- प्यतिदिशति— **एवमिति** । तर्हि विशेषणविशेष्यभावादिषु वृद्धैः प्रयुज्य- मानस्य संबन्धशब्दस्य का गतिरित्याह— **संबन्धस्त्विति**[11] । संयोग इत्युक्ते कयोरित्याकाङ्क्षा जायते । एवं[12] विशेषणविशेष्यभाव इत्युक्ते कयोरित्याकाङ्क्षा जायते । तस्मादुभाभ्यां निरूप्यमाणत्वसाधर्म्येणो[13]- पचारात् संबन्धव्यपदेश[14] इति भावः । फलितमाह— **तथा चेति** । इन्द्रियाभावयोः संबन्धासंभवाद[15]भावस्यै[16]न्द्रियकत्वाभावाच्छष्ठप्रमाणगम्यत्व- मभ्युपगन्तव्यमिति भावः । यद् यदिन्द्रियं तत्[17] तत्संबद्धमेव प्रकाशयतीति

---

1 B तथा
2 B व्यापकत्वादिशब्दस्य
3 A शब्दसामान्यवाचकत्व
4 A B अस्तीत्याशङ्क्याह
5 A विशेष्यभाविस्य
6 A तद्वशेषणत्वं
7 A विशेष्यत्वभीतिभावः
8 A B omit भावशब्दः
9 B भावशब्द उभयत्र संबध्यते
10 A साधितं
11 A संबन्धशब्दस्त्विति
12 B omits एवं विशेषण
13 B निरूप्यमाणत्वेन
14 A omits व्यपदेश
15 A संबन्धाभावात्
16 B अभावा (वः) स्य
17 B omits तत्

यदुक्तं तदङ्गीक्रियत एव । परं त्वस्यां[1] व्यवस्थाया भावमात्रविषयत्वादसंबद्धस्याप्यभावस्यै[2]न्द्रियकत्वं न हीयत इत्यभिप्रेत्य परिहारमाह—**सत्यमिति** । कुत इत्यत आह—**भावावच्छिन्नत्वाद्व्याप्तेरिति** । तस्या व्याप्तेर्भावमात्रविषयतया संकोचनीयमानत्वादित्यर्थः । एतदेव विशदयति[3]—**भावं प्रकाशयादिति** । अभाव[4]ग्रहणव्यावृत्तिमाह—**नन्विति** । तर्ह्यभावं प्रकाशयदिन्द्रियं कथं प्रकाशयतीत्यत आह—**अभावमिति** । ननु सामान्यतः प्रवृत्ताया व्याप्तेर्बाधकमन्तरेण भाव[5]विषयतया संकोचो[6] न युज्यते । अन्यथा सर्वव्याप्तीनां भावमात्रविषयतया प्रसज्येते[7]ति चेन्नैवम्[8] । अभावग्रहणस्यै[9]न्द्रियकत्वानङ्गीकारेऽकारण[10]कार्योत्पादप्रसङ्गस्यैव बाधकतया जागरूकत्वात् । ननु प्रतियोग्यनुपलब्धौ सत्यामेवाभावग्रहणमिति त्वयाङ्गीकर्तव्यम् । [11]तर्हि सैवा[12]नुपलब्धिरभावमुपल[13]म्भयति । तथा च बाधकाभावान्नोत्सर्गस्यापवादो युक्त इति चेन्न[14] । अनुपलब्धेः कारणत्वानिराकरणात् । तथा ह्यनुपलब्धिः किं ज्ञाताभा[15]वमुपलम्भयत्यज्ञाता वा । नाद्यः । अनुपलब्धेरप्यभाव[16]रूपत्वेनानुपलब्ध्यन्तरा[17]पेक्षया तत्रापि ज्ञातत्वाज्ञातत्वविकल्पे क्रियमाणे तत्रापि प्रथमपक्षस्वीकारे च तत्र तत्राप्येवमित्यन[18]वस्थाप्रसङ्गात् । न द्वितीयः । अभावग्रहणस्याज्ञातकरण[19]त्वाङ्गीकरणे ऐन्द्रियकत्वानुमानस्य सुवच[20]त्वात् । प्रयोगश्च । विमतमिन्द्रियजन्यमज्ञात[21]करणत्वात् संप्रतिपन्नवदिति । अन्यथा रूपाद्यु[22]पलम्भस्याप्यनुपलम्भकरणत्वप्रसङ्गो विपक्षे बाधक[23]-

---

1 B परं त्वस्य व्यवस्थायां
2 A भावस्येन्द्रियकत्वं
3 A दर्शयति
4 A भावग्रहणव्यावर्त्यमाह; B भावग्रहणव्यावृत्तिं
5 A भावमात्रविषयतया
6 A संकोचनीयत्वं
7 B प्रसज्यतेति चेत्
8 A omits नैवम्
9 A अभावग्रहणस्येन्द्रियकत्वानङ्गीकारे
10 B अकारणक
11 B तत्र
12 A सेवानुपलब्धि
13 A B उपलम्भयतु
14 A omits न
15 A अभ.वमुपलम्भयति
16 A अभावत्वेन
17 A B अन्तरापेक्षायां
18 A इत्यनुवस्थाप्रसङ्गात्
19 A करणकत्वाङ्गीकरणे
20 A सुलभत्वात्
21 A अज्ञातकरणकरणत्वात्
22 B रूपाद्य ( द्यु ? ) पलम्भस्य
23 B बाधकस्त ( ? ) चकः

स्तर्कः । अभावोपलम्भे भावानुपलम्भवद्भावोपलम्भेऽप्यभावानुपलम्भस्य वज्रलेपायमानत्वात् । तस्मादनुपलब्धिसहकृतमिन्द्रियमभावं गृह्णाती-त्यभ्युपगन्तव्यम्[1] । तमर्थं मनसि निधायाभिधत्ते– **इति सिद्धान्त इति** । प्रामाणिकैः प्रमाणवत्तयाऽयमर्थोऽभ्युपगतस्त्वया[2] निवारयितुं न पार्यते । तदुक्तम्–

' **प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते** । ' इति ।

नन्विन्द्रियस्यासंबद्धार्थग्राहकत्वाभ्युपगमे कुड्यादिव्यवहितार्थग्रहण-प्रसङ्ग इत्याशङ्क्याह–**असंबद्धेति** । ननु दण्डी कुण्डली[3] कमण्डलु-मान्नीलमुत्पलमित्यादौ[4] दण्डादेर्विशेषणत्वं संबन्धान्तरपूर्वकं दृश्यते । न चाभावेनेन्द्रियस्य संबन्धः संयोगः समवायो वा संभवति । तस्मा-न्मूलसंबन्धाभावाद्विशेषणत्वेनातिप्रसङ्गदोषो दुःपरिहर[5] इत्याशङ्क्य षष्ठेनापि प्रमाणेनाभावः कस्यचिद्विशेषणत्वेन ग्रहीतव्यः । ततश्च षष्ठप्रमाण-वादिनोऽप्येतत्समानमित्याह–**समश्चेति** । यथा खलु गोमान्, अश्व-वानित्यादौ संयोगसमवायाभावेपि देवदत्तस्य[6] विशेष्यत्वं गवाश्वादीनां विशेषणत्वं भवदपि[7] नानुपपन्नं तद्वदत्रापि मूलसंबन्धाभावेऽपि[8] संयुक्तादे-र्विशेषणत्वेन विशेष्यत्वेन[9] वा प्रत्यक्षयोग्यार्थानुपलब्धौ तदभावः प्रत्यक्षः । अनुमेयाभावस्त्वनुमानगम्यः कौरवाद्यभावश्चागमगम्य इति प्रत्यक्षादि-ष्वेव यथासंभवमन्तर्भावान्नानुपलब्धेः पृथक् प्रमाणत्वमिति सिद्धम् । संभवैतिह्ययोः पृथक्प्रमाणत्वं निराकृतप्रायमेवेत्युपेक्षितम् । तन्निराकरण-[10]प्रकारास्तु प्रदर्श्यन्ते । संभवो द्विविधः[11] संभावनारूपो निश्चितरूपश्चेति[12] । तत्राद्योऽप्रमाणमेव[13] । तद्यथा ब्राह्मणे चतुर्वेदाभिज्ञत्वं संभवतीति ।

1 A इत्यसुपगन्तव्यम्; B गृह्णातीत्यु (त्य?) भ्युपगन्तव्य
2 B अतस्त्वया
3 A omits कुण्डली
4 B कमण्डलुमान (न्) नील
5 A दुःपरिहार
6 A omits देवदत्तस्य विशेष्यत्वं
7 A भवतापि
8 A भावोऽपि
9 A विशिष्यत्वेन
10 B निराकरणप्रकारस्तु प्रदर्श्यते
11 B द्विविध [ : ]
12 B निश्चयरूपश्चेति
13 A तत्राद्यप्रमाणमेव; B न प्रमाणमेव

द्वितीयस्तु[1] प्रमाणम् । तदनुमानान्नातिरिच्यते[2] । तद् यथा शतं[3] सहस्रे संभवतीति । सहस्रं[4] शतेनाविनाभूतमित्यविनाभावपूर्वकत्वात् । अनिर्दिष्ट-प्रवक्तृकं प्रवादपारंपर्यमैतिह्यम्[5] । तद् द्विविधं वितथमवितथं चेति[6] । तत्राद्यं[7] न प्रमाणं द्वितीयं त्वाप्तोपदेशरूपत्वादागमान्न[8] भिद्यते । तद्[9] यथा—इह वटे यक्षस्तिष्ठतीति न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात्[10] । 'शब्द[11] ऐतिह्या[12]नर्थान्तरभावा[13]दनुमानेऽर्थापत्तिसंभवाभा[14]वानर्थान्तरभावाच्चा-प्रतिषेधः' इति सूत्रकारेणा[15]क्षेपपूर्वकमुक्तेष्वेवान्तर्भावस्याभिहितत्वाच्चतुष्ट्वं सिद्धम् ॥

प्रमाणानां प्रामाण्यं स्वतोऽप्रामाण्यं तु परत इति मीमांसकाः संगिरन्ते । उभयमपि परत इति नैयायिकाः प्रतिपद्यन्त इति वादिप्रति-पत्तेः सद्भावात् संदेहः स्यात् । तन्निवारणाय[16] प्रामाण्यस्य[17] निरूपणी-यता युज्यत इत्यभिप्रायेण प्रतिजानीते— **इदमिति** । प्रमाणनिरूपणानन्तरं तद्गतं प्रामाण्यं विचार्यत इत्यर्थः । प्रामाण्यस्य[18] स्वतस्त्वं द्विविधमुत्पत्तौ ज्ञप्तौ चेति । तत्रोत्पत्तौ स्वतस्त्वं नाम ज्ञानकारणमात्रजन्यत्वम् । ज्ञानं[19] येन जायते तेनैव प्रमाणं[20] सदैव[21] जायत इत्यर्थः । ज्ञप्तौ स्वतस्त्वं तु ज्ञानग्राहकमात्रग्राह्यत्वम् । येन ज्ञानं ज्ञायते तेनैव प्रमाणं[22] सदैव[23] ज्ञायत

1 A द्वितीयं तु
2 A B om t तद्
3 A सतसहस्रे
4 A सहस्रशतेना
5 B इतिह्यम्
6 B omits इति
7 A B तत्राद्यमप्रमाणम्
8 B रूपत्वान्नागमाद्भियते
9 A omits तद्
10 A चतुष्ट्वमैवैतिह्या
11 A शब्दैतिह्यानर्थांतर
12 B शब्दैतिह्यमनर्थान्तरभावादनुमा-नार्थापे (प?) त्ते [ : ] संभवाभाव-योरनुमानप्रत्यक्षादेरनर्थान्तरभावाद् न प्रतिषेध इति
13 A भावत्रदनुमाने
14 A संभवाभवाद्नर्थांतरभावच्च प्रतिषेधः
15 A B सूत्रकारेणैव
16 B तं निवारणाय
17 A प्रमाणयस्य
18 A प्रमाण्यस्य
19 A येन ज्ञानं जायते
20 A प्रामाणं; B प्रामाण्यं
21 A सदेव
22 A B प्रामाण्यं
23 A ग्र ( स? ) देव; B सहैव

इत्यर्थः। परतस्त्वमपि द्विविधमुत्पत्तौ[1] ज्ञप्तौ च। तत्रोत्पत्तौ परतस्त्वं[2] च ज्ञानकारणातिरिक्तकारणजन्यत्वम्। इन्द्रियार्थसंयोगादिना[3] ज्ञानं जायते तदतिरिक्तेन गुणेन दोषेण वा तज्ज्ञानं प्रमाणमप्रमाणं वा जायत इत्यर्थः। ज्ञप्तौ परतस्त्वं च ज्ञानग्राहकातिरिक्तग्राह्यत्वम्। ज्ञानं मनसा गृह्यते तद्गतं प्रामाण्यमनुमानेनेत्यर्थः। एवं स्थिते स्वतःप्रामाण्यं प्रतिक्षिप्य[4] परतः-प्रामाण्यं प्रसाधयितुं लोके प्रवर्तमानानां[5] पुंसां प्रवृत्तिरुभयथोपलभ्यत इति लोके सिद्धां वस्तुस्थितिमनुवदति[6]—**जलादिज्ञानेति**[7]। लोके[8] हि पिपासुः पुमान् पिपासोपशमनाय जलं जिज्ञासमानो जल-ज्ञाने जाते तस्य ज्ञानस्याभ्यासदशामापन्नस्यापि[9] समर्थप्रवृत्तिजनक-जातीयत्वालिङ्गेन यथार्थत्वं निश्चित्य पश्चात् प्रवर्तत इत्येकः पक्षः। अन्यस्तु जलज्ञानानन्तरं[10] कूप्यादाविव संदेहात् तत्र प्रवर्तमानः फललाभे सति समर्थप्रवृत्तिजनकत्वालिङ्गेन तस्य[11] ज्ञानस्यानभ्यासदशामापन्नस्य यथार्थत्वं निश्चिनोतीत्यपरः पक्षः। उभयमपि वस्तुवृत्तमाबालपाण्डित-मनुभवसिद्धत्वादिति भावः। यावत् परमतं न[12] निराक्रियते तावत् स्वमत-मप्रतिष्ठितं[13] स्यादिति न्यायमनुसृत्य[14] स्वतःप्रामाण्यपक्षं प्रतिक्षेप्तुमारभते[15]-**मीमांसकस्य** मतमवतारयति—**अत्रेति**[16]। प्रमाणानां प्रामाण्याप्रामाण्य-चिन्तायां कश्चिदित्थमाहेत्यर्थः। मीमांसकमतमवतारयति[17]—**प्रागेवेति**। प्रवृत्तेः पूर्वमेव ज्ञानस्य[18] प्रामाण्यं निश्चित्य पश्चात् पुरुषाः[19] प्रवर्तन्त इत्यर्थः।

---

1 A द्विविध उत्पत्तौ
2 A परतस्त्वं नाम
3 B इन्द्रियार्थसंप्रयोगादिना
4 A omits प्रतिक्षिप्य परतःप्रामाण्यं
5 B लोके वर्तमानानां
6 B अनुवादि ( द? ) ति
7 A B जलादिज्ञान इति
8 B लोकेऽपि
9 B दशापन्नस्यापि
10 A तज्जल
11 B omits तस्य ज्ञानस्याभ्यासदशा-मापन्नस्य
12 A omits न
13 A अप्रतिष्ठत
14 A अनुस्मृत्य
15 A मांसलयन्
16 B तत्रेति
17 B उपन्यस्यति
18 B ज्ञानप्रामाण्यं
19 A पुरुषः प्रवर्तत इत्यर्थः

न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशङ्क्य तत्रोपपत्तिमाह—**स्वत एवेति**। सर्वेषां प्रमाणानां प्रामाण्यं[1] स्वत एवेति[2] निश्चितत्वादित्यर्थः। ननु स्वत एव प्रामाण्यमिति कोऽर्थः। स्वस्माज्जायते ज्ञायत[3] इति वा। उभयथाप्यसंभव एव। स्वस्य स्वस्मादुत्पत्तेः[4] प्रतीतेश्च प्रमाणपथानारोहादित्याशङ्क्याह। अस्यार्थः[5]। येन ज्ञानं जायते तेन प्रामाण्यं सदैवं[6] जायत इत्यर्थः। परपक्षं[7] प्रतिक्षिपति—**नन्विति**। फलितमाह—**तेनेति**। ननु ज्ञानमपि प्रवृत्त्युत्तरकालं गृह्यते चेत् प्रामाण्य[8]निश्चयोत्तरकालं प्रवृत्तिरिति न घटते ज्ञानप्रामाण्ययोः[9] सहग्रहणाभ्युपगमादित्याशङ्क्याह—**ज्ञानं चेति**। प्रवृत्तेः प्राग् ज्ञानग्रहणानङ्गीकारे बाधकमाह—**कथमिति**। धर्मिणो[10] बुद्ध्यनारोहे तद्धर्मविषयः[11] [12]संदेहो नोदयमासादयेत्। तस्माज्जलज्ञानानन्तरं प्रामाण्याप्रामाण्यसंदेहादपि[13] पुरुषः प्रवर्तत इति वदता भवतापि प्रवृत्तेः पूर्वं[14] ज्ञानं गृहीतमित्यभ्युपगन्तव्यमिति भावः[15]। ननु ज्ञानग्राहकेण ज्ञानगतं प्रामाण्यं गृह्यत इत्युक्तम्। ज्ञानं वा[16] केन[17] गृह्यत इत्याकाङ्क्षायां[18] ज्ञानग्राहकं प्रामाण्यं[19] प्रदर्शयंस्तेनैव तद्गतं प्रामाण्यं प्रवृत्तेः प्रागेव गृह्यत इत्युपपादितमर्थमुपसंहरति—**तस्मादिति**। इन्द्रियार्थसंप्रयोगसमनन्तरमयं घट इति ज्ञानं जायते। तेन ज्ञानेन घटे ज्ञातताख्यः कश्चिद्धर्म[20] आधीयते। सा ज्ञातता ज्ञानमन्तरेणानुपपद्यमाना ज्ञानमाक्षिपति। एवं ज्ञातता[21]न्यथानुपपत्तेरर्था-

---

1 B प्र ( प्रा? ) माण्यं
2 A omits इति
3 B ज्ञायते वा इति उभयथा
4 B स्वस्मादुप ( दुत्प? ) त्तेः
5 A अस्यार्थ इति
6 A सदेव
7 A परं पक्षं
8 A प्रामाण्यं
9 A ज्ञानप्रमाणयोः
10 B धर्मिणि
11 A omits तद्धर्मविषयः संदेहो नोदयमासादयेत
12 B संदेहोऽपि
13 B प्रामाण्यासंदेहादपि
14 B पूर्वज्ञानं
15 A omits भावः
16 B च
17 A वाक्येन गृह्यते तव इत्युपेक्षायां ज्ञानग्राहकं प्रमाणं प्रदर्शयन्। तद्धर्मविषयः संदेहोऽपि नोदयमासादयेत्। तेनैव तद्गत प्रामाण्यं
18 B इत्यपेक्षायां
19 B प्रमाणं
20 A B कश्चन
21 B omits ज्ञाततान्यथानुपपत्तेरर्थान्तरकल्पनं प्रसूते। तया

न्तरकल्पनं प्रसूते। तथा ज्ञाततान्यथानुपपत्तिप्रसूतयार्थापत्त्या ज्ञानप्रामाण्ये सहैव गृह्येते। पश्चात् पुरुषः प्रवर्तत इति प्रामाण्यस्य स्वतस्त्वं सिद्ध-मित्यर्थः। एवं प्रामाण्यस्य स्वतस्त्वं प्रसाध्य परतस्त्वपक्षं प्रतिक्षिपति—न[1] त्वित्यादिना। यदि ज्ञानमात्रं प्रथमं गृह्यते पश्चादनुमानेन[2] तद्गतं प्रामाण्यं निश्चीयत इत्यभ्युपगम्येत[3] तदानीं[4] निश्चितप्रमाणभावमेवानुमानं[5] प्रामाण्यं[6] निश्चाययतीति[7] वक्तव्यम्। ततश्च[8] तन्निश्चयश्च निश्चितप्रमाणाभावे-नान्येनेत्यनवस्था[9] दुरवस्था लालगीति। तस्मात् परतःप्रामाण्यपक्ष-स्यानवस्थादुरवस्थत्वाद्बोधात्मकत्वेन[10] सर्वेषां ज्ञानानां प्रामाण्यम्। क्वचित्त्वर्थान्यथात्वज्ञानेन कारणदोषज्ञानेन वा तत्प्रामाण्यमपोद्यते[11]। यस्मादुक्तम्—

> ' तस्माद्[12]बोधात्मकत्वेन प्राप्तबुद्धेः प्रमाणता।
> अर्थान्यथात्वहेतुत्थ[13]दोषज्ञानादपोद्यते॥ ' इति।

तथा चानिच्छताप्यच्छमतिना प्रामाण्यस्य स्वतस्त्वं कक्षीकर्तव्यमिति पूर्वपक्षसंक्षेपः। ज्ञाततया ज्ञानप्रामाण्ययोः सहग्रहणासंभवात् स्वत-स्त्वासिद्धेः परतस्त्वमुररीकर्तव्यमिति राद्धान्तमारभते[14]—अत्रोच्यत इति। अर्थापत्तेरनुदय एव[15] दूषणमिति वक्तुं परोक्तमनुवदति—ज्ञातेति[16]। यदा-र्थापत्त्या[17] ज्ञानग्रहणं न सहामहे तदानया तद्गतप्रामाण्यग्रहणं दूरोत्सा-रितमेव[18]। विना व्यक्तिग्रहणं जातिग्रहणस्यासंभवात्। व्यक्तिग्रहणसामग्री-

---

1 A नन्वित्यादि
2 A पश्चादनमानेन
3 B इत्यभ्युपगम्यते
4 A B तदा
5 A प्रमाणभावेन चानुमानप्रामाण्यं
6 B omits प्रामाण्यं
7 A निश्चयतीति
8 A ततश्च निश्चयनिश्चितप्रमाणभा-वेनान्येन त्येवमनवस्था
9 B नान्येन च
10 A दुःस्थत्वाद्बोधात्मके त्वेनैष
11 B अपोह्यते
12 A यस्माद्
13 A हेतुत्वे तुच्छदोषज्ञानाद्यपोद्यत इति
14 A B राद्धान्तमारभ्यते
15 A omits एव
16 A ज्ञानेति
17 B पदार्थ्या ( र्था ? ) पत्या
18 B दूरोच्चारितमेव

निष्ठत्वाज्ज्ञातिग्रहणसामग्र्या इत्यभिप्रायेणाह—तयेति। उक्तमर्थमुपपादयितुं प्रतिजानीते-तथाहीति। पराभिमतं प्रतिकर्तुमनुभाषते-इदमिति। इदंशब्दार्थमाह—घटादीति। ज्ञातता ज्ञानजन्येत्यनुमीयत इत्युक्तम्। केन हेतुनानुमीयत इत्याशङ्क्य तदन्वयव्यतिरेकानुविधायित्वहेतोः पक्षधर्मतां प्रदर्शयंस्तेन साध्यमध्यवसीयत इत्याह—स चेति। विमता ज्ञातता ज्ञानजन्या तदन्वयव्यतिरेकानुविधायित्वात्। यद्य (द?) न्वयव्यतिरेकानुविधायि तत्तज्जन्यम्। यथा तन्त्वन्वयव्यतिरेकानुविधायी पटस्तन्तुजन्य इत्यनुमानं द्रष्टव्यम्। ज्ञाततायां ज्ञानजन्यत्वसाधनस्य फलमाह-एवं चेति। नोपपद्यत इत्युक्तम्। कुत इत्याह—कारणेति। असति कारणे कार्योदयो व्याहन्यते। ततश्च शङ्काया व्याघातावधिकत्वादतः परं शङ्कापिशाचिका नावकाशं लभत इति भावः। फलितमाह—तेनेति। ज्ञाततान्यथानुपपद्यमाना यामर्थापत्तिं प्रसूते तया ज्ञानप्रामाण्ययोः सहग्रहणसिद्धेः स्वतस्त्वसिद्धिरिति मीमांसकस्य मतमिति भावः। ज्ञानविषयत्वातिरिक्तायां ज्ञाततायां प्रमाणाभावान्नेष्टसिद्धिरिति परिहारमाचष्टे—न चेति। यदि घटादेर्ज्ञानविषयत्वं ब्रूषे तर्हि फलितं ममापि मनोरथद्रुमेण। प्रत्यक्षार्थापत्त्योरुभयोस्तत्र सद्भावादित्याशयेनाशङ्कते—नन्वित्यादिना। तदेतदुपपादयति—तथाहीति। यदि ज्ञानजनितज्ञातताधारत्वं नाभ्युपगच्छसि तर्हि तादात्म्येन विषयत्वं ब्रूषे तदुत्पत्त्या वा। नाद्यः तदसंभवादित्याह—न तावदिति। भेदासहिष्णुरभेदस्तादात्म्यम्। विशेषानित्यद्रव्यातिरिक्तेषु येषु स्थलेषु समवायमाचक्षेत वैशेषिकास्तेषु स्थलेषु

1 A निविष्टत्वात्
2 A पराकर्तुं
3 A ज्ञानता
4 A साचेति
5 A यदन्वयं
6 A प्रष्टव्यम्
7 A इत्यत आह
8 B असति हि
9 A वधिकत्वा ततः
10 A परशङ्का
11 A B न वेति
12 A मनोद्रुमेण
13 A जनिताज्ञातताधारत्वं
14 A omits तद्
15 B भेदसहिष्णुः
16 B द्रव्यव्यतिरिक्तेषु
17 A omits येषु
18 A omits समवायमाचक्षते वैशेषिकास्तेषु स्थलेषु
19 B आचक्ष्य (क्ष?) ते

समवायस्थाने तादात्म्यमभिषिच्य[1] व्यवहरन्ति मीमांसकाः। अत एवोक्तम्-

**'विशेषसमवायौ द्वौ[2] नाङ्गीचक्रुः कुमारिलाः'** ॥ इति ।

तस्माद् घटज्ञानयोरवयवा[3]वयविभावाद्यभावान्न तादात्म्यमिति भावः। अस्तु द्वितीयस्तत्राह-**तदुत्पत्त्येति**[4]। तस्मादुत्पत्तिस्तदुत्पत्तिस्तया[5] विषयत्वेऽङ्गीक्रियमाणे कर्मण इव घटादेः कारणा[6]दिन्द्रियादेः कर्तुश्चात्मनो ज्ञानस्योत्पत्तेस्तत्रापि विषयत्वं प्रसज्येतेति भावः। तादात्म्यतदुत्पत्तिभ्यां विषयत्वासंभवाज्ज्ञानजनितज्ञाततााधारत्वेनैव विषयत्वमेषितव्यमित्यभिसंधिमानाह—**तेनेति**। इदं वक्ष्यमाणं निश्चीयत इति[7] भावः। इदंशब्दार्थमाह—**ज्ञानेनेति**। अयं घट इति ज्ञानानन्तरं ज्ञानेन घटे ज्ञातताख्यः कश्चन धर्म उत्पद्यत इत्यर्थः। उत्पद्यतां नाम उत्पन्नेन तेन किं भवतीत्यत आह-**येनेति**। येनोत्पन्नेन ज्ञातताख्येन धर्मेण तदाधारो घट एव तस्य ज्ञानस्य विषयो नान्यः पटादिरिति[8] नियमः सिद्ध्यतीति भावः। न केवलं ज्ञातो घट इति ज्ञाततायां प्रत्यक्षमेव प्रमाणं किं तु विषयत्वादन्य[9]थानुपपत्तिप्रसूतार्थापत्तिरपि। ततश्च प्रमाणसिद्ध्या ज्ञाततया ज्ञानप्रामाण्ययोः सहग्रहणसंभवात् स्वतःप्रामाण्यसिद्धिरित्यभिप्रायेणोपसंहरति—**अत इत्यादिना**। ज्ञातो घटः प्रकटो घट इति प्रत्यक्षं न ज्ञाततायां प्रमाणम्। इष्टो घटो दृष्टो घटो नष्टो घट इति व्यवहारेषु तत्तत्क्रियाजन्यफलशालित्वाभावेऽपि तन्निरूपणाधीननिरूपणत्वेनेच्छादिवज्ज्ञानस्यापि घटसंबन्धित्वोत्पत्तेः[10]। अर्थापत्तिस्त्वन्यथैवोपपन्ना ततश्च नेष्टसिद्धिरित्यभिप्रायेण परिहारमाचष्टे—**मैवमिति**[11]। स्वाभाविकं विषयं[12] स्फोटयति—**अर्थेति**। अनङ्गीकारे बाधकमाह—**इतरथेति**। ज्ञानजनितज्ञातताधारस्यैव विषय[13] ( यि? ) त्व-

1 A अभिव्यवहरन्ति
2 A तु
3 B अवयवावयवित्वाद्यभावात्
4 A तदुत्पत्तेरिति
5 A तथा
6 A करणा इन्द्रियादे
7 A इत्यर्थः
8 B नान्यो घटादिरिति
9 A विषयत्वान्यथानुपपत्ति
10 B घटसंबान्धित्वोपपत्तेः
11 A B नैवमिति
12 A विषयत्वं स्फोटयति
13 A विषयित्वं

मिति यदि नियमस्तर्ह्यतीतानागतयोर्विषयत्वं न स्यादित्यर्थः। तत्र हेतुमाह—**तत्रेति** । वृष्टिरासीद्वृष्टिर्भविष्यतीत्यतीतानागतविषययोर्ज्ञानयोर्ज्ञातताजनकत्वायोगादित्यर्थः। कुत इत्यत आह—**असतीति**। न हि लोके किंचित्कार्यमनाधारं दृश्यत इत्यक्षरार्थः। अयमाशयः। यदि घटज्ञानयोः स्वभावादेव विषयविषयिभावं नाङ्गीकरोषि तर्हि ज्ञानं ज्ञातताख्यमुपकारं घट एव जनयति नान्यत्रेत्ययं नियमः कथमुपपद्यते इति केनचित्पृष्टः किमुत्तरं दत्से। यदि स्वभावादेवेति ब्रूषे तर्हि घटस्यापि स्वभावादेव विषयत्वमङ्गीकुरुष्व। तदुक्तम्—

> '**स्वभावनियमाभावादुपकारोऽपि दुर्घटः।**
> **सुघटत्वेऽपि सत्यर्थेऽसति का ग(री?)तिरन्यथा॥**' इति।

प्रकारान्तरेण ज्ञातताधारत्वेन ज्ञानविषयत्वासंभवं दर्शयति—**किं चेति**। ज्ञानजनितज्ञातताधारत्वेनैव ज्ञातताया अपि विषयत्वं भवत्विति शङ्कमानं प्रत्याह—**तथा चेति**। ज्ञाततानिष्ठायां ज्ञाततायामप्यस्मिन्न्याये प्रसरति तत्र तत्राप्येवमित्यनवस्थादौःस्वास्थ्यमापद्येतेति भावः। समः समाधिरिति वक्तुं परेण स्वभाववादं शङ्कयति—**अथेति**। यद्येवं ज्ञाततायां स्थित्वा किमित्येवमाश्रीयते। घट एव हि स्थित्वा स्वभाववाद आश्रीयताम्। 'प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धनः' इति न्यायादित्याह—**एवं चेदिति**। एवं ज्ञाततानिराकरणे तामङ्गीकृत्यापि ज्ञाततां स्वतः-

---

1 A दृष्टिरासीद
2 A दृष्टिर्भविष्यति
3 B omits विषययोर्ज्ञानयोः
4 A किं किंचित्
5 B विषयभावं
6 B omits ज्ञानं
7 A केचित्
8 B पृष्टं
9 A ज्ञानविषयत्वसंभवासंभवं
10 A दर्शयितुं
11 B ज्ञातताया मपि
12 A सङ्कमानं
13 A omits ज्ञाततायामप्यस्मिन्न्याये प्रसरति तत्र तत्राप्येवमित्यनवस्थादौःस्वास्थ्यमापद्येतेति भावः। समः समाधिरिति वक्तुं परेण स्वभाववादं शङ्कयति–अथेति। यद्येवं ज्ञाततायां
14 B असौ न्यायः
15 A omits हि
16 A स्वभावाद
17 A ज्ञाततानिराकरणतां

प्रामाण्यं[1] वक्तुं न[2] शक्यत इत्याह— **अस्त्विति**। यदि ज्ञातताभ्युपगम्येत तर्हि फलितं ममापि मनोरथद्रुमेण तया ज्ञाततया ज्ञानप्रामाण्ययोः[3] संग्रहणासंभवादित्याशङ्क्याह[4]—**तथापीति**। ज्ञातताङ्गीकारेऽपि तया ज्ञानप्रामाण्ययोः सहग्रहणं[5] न संभवति ज्ञानं ज्ञाततया गृह्यते प्रामाण्यं[6] तु ज्ञातताविशेषेण प्रमाणज्ञाननियतेनेति। ज्ञानग्राहकमात्रग्राह्यत्वलक्षणं प्रामाण्यस्य[7] स्वतस्त्वं न सिद्ध्यतीत्यर्थः[8]। परं स्वमते पातयितुं परेण शङ्कयति—**अथेति**। मास्तु[9] ज्ञाततया ज्ञानप्रामाण्ययोः सहग्रहणं ज्ञातताविशेषेण तु[10] स्यात्। ततश्च स्वतःप्रामाण्यस्य न कांचित्[11] क्षतिरिति[12] भावः। यद्येवं तर्हि तादृशस्य स्वतस्त्वस्याप्रामाण्यपक्षेऽपि[13] को वा दण्डं[14] वारयितेत्याह— **एवं[15] चेदिति**। इदंशब्दार्थमाह[16]— **ज्ञातताविशेषेणेति**। नन्वेवमपि प्रामाण्यं[17] स्वतः, अप्रामाण्यं[18] तु परत इत्यस्मन्मीमांसागुरुभिरुन्नीतः पक्षो न त्यज्यत इति शङ्कते—**अथैवमिति**। यद्येवं तर्ह्यप्रामाण्यमिव[19] प्रामाण्यमपि परत[20] एवेत्यभ्युपगच्छ किमर्थं[21] वैसादृश्यमेतेत्याह[22]— **प्रामाण्यमपीति**। परतःशब्दार्थमाह[23]—**ज्ञानेति**। अयं भावः। मीमांसागुरुभिरभ्युपगतमित्यभ्युपगन्तुं न पार्यते। न ह्यभ्युपगमेनार्थाः स्वीक्रियन्ते[24] अनभ्युपगमेन वा निवर्त्यन्ते[25]। किंतु यत्प्रामाणिकं तद् ग्राह्यं यदप्रामाणिकं तत्परित्याज्यम्[26]। तदुक्तम्—

---

1 A स्वतःप्रामाण्य न कर्तुं
2 B न्यक्कर्तुं शक्यते
3 A ज्ञानप्रमाण्ययोः
4 A संग्रहणसंभवादित्याशङ्क्य
5 B सहग्रहणं भवति
6 A प्रमाण्यं
7 A प्रमाण्यस्य
8 B न सिद्धतीत्यर्थः
9 A मस्तु
10 A नु
11 B कदाचित
12 A क्षितिरिति
13 A अप्रमाण्य
14 A B दण्डवारयितेत्याह
15 A एवं चेति
16 A इतिशब्दार्थमाह
17 A प्रामाण्यं तु
18 A अप्रमाण्यं
19 A अप्रमाण्यमिव
20 B परतए [ वेः ? ] अभ्युपगच्छ
21 B किमर्द्धवैशसेनेत्याह
22 A वैशदृस्येनेत्याह
23 B शब्दस्यार्थमाह
24 B क्रियन्ते
25 A निवर्तन्ते
26 A B परिग्राह्यम

' बालाग्रशत[1]भागोऽपि न कल्प्यो निष्प्रमाणिकः[2] ।
प्रमाणवन्ति कल्प्यानि[3] वस्तूनि सुबहून्यपि ॥ '

तस्मादप्रामाणिकत्वेन स्वतस्त्वपक्षस्त्यक्तव्यः प्रामाणिकत्वेन च[4] परतस्त्वपक्षः स्वीकर्तव्यः[5] । विमता प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वादप्रमावत् । प्रामाण्यं परतो ज्ञायते[6] अनभ्यास[7]दशायां सांशयिक[8]त्वादप्रामाण्यवदिति[9] । उदयनमनुमानद्वयं द्विप्रकारेऽपि परतस्त्वे द्रष्टव्यम् । यदि ज्ञानं येन ज्ञायते[10] तेनैव प्रामाण्यं सहैव ज्ञायते[11] तर्हि सर्वं ज्ञानं प्रमाणं प्रसज्येत । अत्रो[12]च्यते । चक्षुरादिकारणस्य[13] स्वतः प्रामाण्य[14]-ज्ञानहेतुत्वेऽपि कदाचित्प्रतिबद्ध[15]शक्तिकतया दोषवशादप्रमाणज्ञान-हेतुत्वमुपपद्यते[16]ऽतो नातिप्रसङ्ग इति[17] । तदसारम् । स्वरूपसहकारिव्यतिरिक्त-शक्तिसद्भावे प्रमाणाभावात् । किं च येन ज्ञानं जा[18] ( ज्ञा ? ) यते तेनैव तद्गत[19]प्रामाण्यमपि यदि[20] जा ( ज्ञा[21] ? ) येत तर्हि ज्ञानोत्पत्तेरनन्तरं[22] ममोत्पन्नं ज्ञानं प्रमाणमप्रमाणं चे ( वे ? ) ति कस्यचिदपि संदेहो न स्यात् निश्चिते तदनवकाशात् । न हि स्थाणुत्वेन निश्चिते पुरः[23]स्थिते वस्तुनि मुग्धोऽपि संदिग्धे स्थाणुर्वा[24] पुरुषो वेति । लोके तु[25] जातं ज्ञानं

---

1 A सतभागोऽपि
2 A निःप्रमाणिकः; B निष्प्रमाणकः
3 B दृष्टानि
4 A omits च
5 B स्वीकृतव्यः
6 A जायते
7 B अन्नभ्यासदशायां
8 A साशयिकत्वाद्
9 A इत्यौदयन
10 A जायते
11 A परतो जायेत
12 A B अथोच्यते
13 B चक्षुरादेः ज्ञानकरणस्य
14 A स्वतःप्रमाणज्ञानहेतुत्वेऽपि
15 A प्रतिबन्द्धः शक्तितया
16 A अभ्युपपद्यते; B अप्युपपद्यते
17 A omits इति
18 B ज्ञायते
19 A B तद्गतं प्रामाण्यमपि
20 A जयि जायेते
21 B ज्ञायेत
22 A ज्ञानोत्पत्त्यनन्तरं; B ज्ञानोत्पत्त्य-नन्तरे
23 B निश्व ( श्चि ? ) ते पुर ( : ) स्थिते
24 B स्थाणु [ : ] वा
25 B omits तु

प्रमाणमप्रमाणं चे( वे? )ति[1] [2] संदिहाना[3] बहव उपलभ्यन्ते । यदुक्तं बोधात्मकत्वेनैव प्रामाण्यमिति तदयुक्तम्[4] । शुक्तिरजतादिज्ञानस्यापि प्रमाणत्वोपपत्तेः । अथ यावद्बोधं[5] तस्यापि प्रामाण्यमभ्युपगम्यत इति चेत्तदसारम् । प्रमाणभूते च बोधे बाधोत्पत्तेरनुपपत्तेः[6] । अन्यथा सर्वबोधेषु बाधोदयः[7] प्रसज्येत । न च परतःप्रामाण्यपक्षेऽनवस्थापत्तिः[8] । स्वतःप्रामाण्यपक्षेऽपि समानत्वात् । अथ मन्यसे एवं त्रिचतुरज्ञानजन्मनो नाधिकामिति प्रार्थ्यते[9] तावदेवैकं[10] स्वतःप्रामाण्यमस्वत इत्याचार्यैरेवानवस्थायाः प्रतीकारः कृत इति तदाप्यनवस्थासमाधानं[11] प्रकृते समानमित्यलमतिप्रसङ्गेन[12] । ननु माभून्नाम[13] प्रामाण्यस्य[14] स्वतस्त्वं भवतु[15] परतस्त्वं च[16] तथापि ज्ञानं केन च[17] गृह्यते तद्गतं प्रामाण्यं च[18] ज्ञानग्राहकादन्येन केन गृह्यत इत्यपेक्षायामाह— **ज्ञानं हीति** । ज्ञानं तावद्[19] द्विविधं व्यवसायरूपमनुव्यवसायरूपं चेति । तत्र विषयावबोधक[20] ज्ञानं व्यवसायो विषयिविषयं[21] ज्ञानमनुव्यवसायः । तथा चायं घट इति ज्ञानानन्तरं मया ज्ञातोऽयं घट इति ज्ञानगोचरस्य ज्ञानस्य सर्वजनीनत्वात् ज्ञानस्य मानसप्रत्यक्षत्वे न काचिद्विप्रतिपत्तिरिति भावः । ज्ञानगतप्रामाण्यज्ञापकमनुमानं दर्शयितुं[22] प्रतिजानीते—**तथाहीति** । समर्थप्रवृत्तिजनकत्वलिङ्गेन जलज्ञानस्य प्रामाण्यं प्रसाधयितुं प्रवृत्तिं विभजते—**जलज्ञानेति** । द्वैविध्यमेव दर्शयति-**फलवत्यफला चेति** । तत्र प्रथमायाः स्वरूपमाह-**फलवतीति** ।

---

1 A ज्ञानप्रमाण
2 A वेति
3 A संतिहाना
4 B तदुक्तं
5 A अथवा यद्बोधं; B यावदबाधं
6 A अनुपपत्ते
7 A बाधोदय
8 B अनवस्थोपपत्तिः
9 A प्रार्थते
10 B omits एव
11 A तदप्यनवस्था
12 A कृतं
13 A साभून्नाम
14 A प्रामाण्यं
15 A तदनु च
16 B omits च
17 A omits च
18 B omits च
19 B तावद्विविधं
20 A विषयविषयज्ञानं
21 A विषयिविषयता
22 B प्रदर्शयितुं

अत एवोक्तं भाष्यकारेण—'सामर्थ्यं पुनरस्याः फलेनाभिसंबन्धः[1]' इति। ततः किमित्यत आह—**तथेति**। फलवत्याः[2] प्रामाण्यमनुमीयत इत्यर्थः। उक्तमर्थं प्रमाणारूढं करोति—**प्रयोगश्चेति**। प्रयुज्यत इति प्रयोगः। अनुमानं प्रदर्श्यत इत्यर्थः। प्रमाणमप्रमाणं चेति विवादेनाधिष्ठितं जलादि[3]ज्ञानं प्रमाणं भवितुमर्हतीत्यर्थः। कुत इत्यत आह—**समर्थेति**। व्यतिरेकव्याप्तिपुरःसरं वैधर्म्यदृष्टान्तमाह—**यत्त्वित्यादिना**। अन्वयव्याप्तेरभावात्केवलव्यतिरेकी हेतुरित्याह—**केवलव्यतिरेकीति**[4]। पक्षसाध्यविभागं विदधाति—**अत्र चेति**। अत्र प्रमाण[5]शब्देन यथार्थत्वं विवक्ष्यत इत्याह—**यथार्थत्वमिति**[6]। ननु प्रमाकरणं च[7] प्रमाणमित्यादौ सर्वत्र प्रमाणशब्देन प्रमाकरणत्वमेवोच्यते किमित्यत्र भङ्ग्यन्तरमाश्रीयते तत्राह—**न त्विति**। उपपत्तिमाह—**स्मृत्येति**[8]। यद्यत्र प्रमाणशब्देन प्रमाकरणत्वं विवक्ष्येत तदा प्रमाकरणत्वरहिते समर्थ[9]प्रवृत्तिजनके[10] स्मृतिज्ञानेऽनैकान्तिकता स्यादित्यर्थः। पक्ष[11]साध्यविभागं विधाय हेतुस्वरूपं निदर्शनं[12] व्याचष्टे—**हेतुस्त्विति**। ननु यदि समर्थप्रवृत्तिजनकत्वलिङ्गेन प्रामाण्यनिश्चयस्तर्हि क्वचित्प्रवृत्तेः प्रागपि प्रामाण्यनिश्चयो दृश्यते। अतः[13] स्वतःप्रामाण्यानङ्गीकारे स कथमुपपद्यते तत्राह—**अनेनेत्यादिना**। अभ्यासदशापत्तिर्नाम निष्पादितार्थक्रियत्वं[14] प्रमाणान्तर[15]संवादो वा तादृशस्य ज्ञानस्योक्तेनानुमानेन प्रामाण्ये निश्चिते तद्दृष्टान्तावष्टम्भेन समर्थप्रवृत्तिजनकत्वजातीयत्वलिङ्गेनानभ्यासदशामापन्नस्यापि[16] प्रवृत्तेः[17] प्राक् प्रामाण्य-

---

1 A नाभिसंबन्धः
2 A फलवत्या
3 A omits आदि
4 A B इति व्यतिरेकीति
5 B प्रामाण्यशब्देन
6 A यथार्थमिति; B याथार्थ्यमिति
7 B omits च
8 A स्मृतेति
9 A समर्थः
10 A adds च
11 B पक्ष्यसाध्य
12 B निदर्शयन्
13 A omits अतः
14 A क्रियात्वं
15 A प्रमाणानन्तरं
16 B आपन्नदशापन्नस्यापि
17 A प्रवृत्ते

मनुमातुं[1] शक्यत इत्यर्थः । उपपादितं परतःप्रामाण्यमुपसंहरति—परत इति । एवमिति शेषः[2] । पक्षान्तरं प्रतिक्षिपति[3]—न ज्ञानेति । इयता ग्रन्थसंदर्भेण न्यायशास्त्रमनुसृत्य युक्तियुक्तं प्रतिपादितं प्रमेयजातं[4] सुखप्रतिपत्त्यर्थं कारिकया संगृह्य निगमयति—चत्वार्येवमिति ।

इति श्री हरिहरमहाराजपरिपालितेन सहजसर्वज्ञविष्णुदेवाराध्यतनूजेन[5] सर्वज्ञानुजेन चिन्नभट्टेन विरचितायां तर्कपरिभाषाप्रकाशिकायां[6] प्रमाणपरिच्छेदः समाप्तः ॥

वृत्तवर्तिष्यागयोः संगतिं दर्शयितुं वृत्तानुवादपुरःसरं वर्तिष्यमाणं कीर्तयति—प्रमाणानीति । प्रमाणनिरूपणानन्तरं[7] किं पुनरेभिः प्रमाणैः प्रमातव्यमित्याकाङ्क्षायां प्रमेयनिरूपणमुचितमित्यर्थः । प्रमेयाविभागपरं सूत्रं पठति—आत्मेति । प्रमाविषयः[8] प्रमेयम् । सामान्येन नपुंसकं प्रयोक्तव्यमिति सद्भावात्सामान्याभिप्रायेण नपुंसकनिर्देशः[9] । तत्कतिविधमित्याकाङ्क्षायामात्मादिमोक्षान्तं द्वादशविधमित्यर्थः[10] । भोक्तृत्वेन प्रधानत्वात् आत्मनः प्रथममुद्देशः[11] तदनन्तरं भोक्तुर्भोगायतनस्य शरीरस्य शरीरसंयुक्ततया ज्ञानकरणस्य चक्षुरादीन्द्रियस्य[12] तदनन्तरमिन्द्रियग्राह्यस्य[13] द्रव्यादेरर्थस्य पश्चादर्थप्रकाशरूपाया बुद्धेस्ततो बुद्धिसाधनस्य मनसोऽनन्तरमिष्टानिष्टबुद्धिकारणस्य प्रवृत्तिलक्षणस्यादृष्टस्य ततोऽनन्तरं[14] धर्माधर्मकारणस्य प्रवर्तमानोपलक्षणस्य[15] रागादेर्दोषस्य[16] ततोऽतीतानागतजन्मदर्शना-[17]

---

1 B अनुमानं
2 A विशेषः
3 A प्रतिपक्षिति
4 B प्रमेयज्ञानं
5 B तनुजेन
6 A तर्कभाषाव्याक्रियायां तर्कभाषाप्रकाशिकायां; B तर्कपरिभाषायाम्
7 A प्रमाणनिरूपाणां नंतरं
8 A प्रमाविषयं
9 A नपुंसकलिङ्गनिर्देशः
10 B द्वादशविधि ( ध? ) म्
11 A प्रथमं निर्देशः
12 A B चक्षुरादेरिन्द्रियस्य
13 A B omit तद्
14 B तदनन्तरम्
15 A B प्रवर्तनालक्षणस्य
16 B रागादिदोषस्य
17 A B वीतरागजन्मादर्शनादिति-न्यायेन

दिति न्यायेन [1]जन्मानन्तरं जन्मान्तरानुभवसूचकस्तन्यपानादिप्रवृत्ति-हेतुनात्म[2]नादित्वसिद्धेरे[3]कस्यैवात्मनः स्वोपार्जिताद‍ृष्टवशान्नानाशरीर-त्याग[4]योगस्वरूपस्य [5]प्रेत्यभावस्यानन्तरं जातस्यैव सुखदुःखानुभव इति [6]तत्स्वरूपस्य फलस्य तदनन्तरं शरीरादिविंशतेरपि दुःखात्मत्वेन हेयत्वं [7]सूचयितुं पीडात्मनो दुःखस्य समनन्तरमे[8]कविंशतिप्रभेदभिन्नदुःखात्यन्त-निवृत्तिरूपस्यापवर्गस्येति [9]सौत्रक्रमनियमः । प्रथमोद्दिष्टस्यात्मनः प्रथमं लक्षणमाह तत्रेति । आत्मादि[10]मोक्षान्तेषु द्वादशसु मध्य आत्मत्वं नाम सामान्यमात्मनो लक्षणं सजातीय[11]विजातीयव्यवच्छेदकत्वादिति भावः । यद्यपि [12]प्रत्यात्ममहमस्मीत्यहमालम्बनस्यात्मनोऽस्तित्वं प्रसिद्धं तथापि धर्मं प्रति विप्रतिपन्ना [13]बहुविद इति न्यायेन वादिनां [14]नानाप्रकारका विप्रति-पत्तयो विद्यन्ते । ताः पराकुर्वन् स्वाभिमतमात्मस्वरूपं निरूपयति—**स चेति** । तच्छब्देन प्रकृतत्वादात्मा परामृश्यते । [15]किंवदिभ्यो मदशक्तिवद्देहाकार-परिणतेभ्यो [16]भूतेभ्यश्चैतन्यस्यो[17]त्पत्तेः स्थूलोहं कृशोहमिति [18]सामानाधि-करण्यदर्शनात्स्थूलत्वादेश्च देहधर्मत्वात्तदरिक्ताहमर्थपरिग्रहायोगाच्चै[19]तन्य-विशिष्टं देहमात्रमात्मेति भूतचतुष्टयतत्त्ववादिनश्चार्वाका मन्यन्ते [20]सुषुप्त्य-वस्थायां [21]सत्यपि शरीरे चक्षुरादीनामुपरमे[22] [23]रूपादिज्ञानाभावाद्दरगोष्ठीव-[24]त्परस्परगुणप्रधानभावेना[25]नुरोधासंभवात् । काणोऽहं मूकोऽहमितीन्द्रिय-

---

1 A जन्मान्तरं
B omits जन्मानन्तरम्
2 A आत्मादित्वसिद्धेः
3 A एकस्यैव वात्मनः
4 A B योगरूपस्य
5 A प्रात्यभावस्यानन्तरं
6 A तद्रूपस्य: B तदरूपस्य
7 A adds । चितं
8 B एकविंशातप्रभिन्नभेददुःखा
9 A B सौत्रक्रमगमनिकावगन्तव्या
10 A मोक्षातद्वादशसु; B मोक्षान्त-द्वादशसु
11 A B omit विजातीय
12 B प्रत्यात्मानं
13 A बहुविदत
14 A नानाप्रकारा
15 A किणवमादिभ्यो; B कङ्ग्वादिभ्यो
16 A भूतेभ्यचेतनस्योत्पत्तेः;
17 B चैतन्योपपत्तेः
18 A सामानाधिकरणदर्शनात्
19 A चैतन्यविशिष्टदेहमात्रमात्रेति
20 B सुखभ्य
21 A शत्यपि
22 A उपरसे
23 A रूपादिविज्ञानाभावात्
24 A परस्य गुणप्रधानाभावे
25 A अनुरोधाभावात्

धर्मसामानाधिकरण्यदर्शनाच्चेन्द्रियाणामेवाहमालम्बनत्वमन्ये मन्यते । स्वप्नावस्थायां[1] चक्षुराद्युपरमेऽपि[2] मनसैव सर्वव्यवहारोपपत्तेर्मन एवाहमर्थः इत्यपरे । तानेताल्लोकायतभेदानेकप्रसरेण[3][4][5] प्रतिक्षिपति—देहेति । सशिरस्कः[6] पिण्डो देहः । इन्द्रियाणि चक्षुरादीनि । आदिशब्देन मनसो ग्रहणम् । एतत्त्रितयव्यतिरिक्त आत्मेत्यक्षरार्थः । न तावद्देहस्यात्मकत्वं[7] संभवति बाह्येन्द्रियग्राह्यत्वाद् घटवदिति[8] । योऽहं बाल्ये पितरावन्वभूवं स एव स्थाविरे[9] प्रनष्टननुभवामीति[10] प्रतिसंधानानुपपत्तिर्विपक्षे[11] बाधकस्तर्कः । न च बालस्थविरशरीरयोः कदाचिदपि प्रत्यभिज्ञानगन्धः समस्ति येनैकत्वमध्यवसीयेत[12] । बदरामलकबिल्वादिवद्भिन्नपरिमाणत्वाद् भिन्नत्वम् । भिन्नपरिमाणाधिकरणत्वेन[13] बाल्यकौमारादिशरीरभेदस्य प्रसिद्धत्वात् । न च किण्वादिभ्यो मदशक्तिवद्देहाकारपरिणतेभ्यो भूतेभ्यश्चैतन्यस्योत्पत्तिरुपपद्यते । हरिद्रासंयुक्ते चूर्णे रागादिवत्प्रत्यवयवं चैतन्यस्य दुर्वारत्वेन स्वतन्त्राणामनेकेषां चेतनानामेकैकं प्रत्यसंभवेन युगपद्विरुद्धक्रियतया शरीरोन्मथनादिप्रसक्तेः । अथ संघाताच्चैतन्ययोगोऽभ्युपगम्येत तदैकस्मिन्नवयवे छिन्नेऽप्यात्मनोऽवयवश्छिन्न इत्यचेतनत्वप्रसङ्गः । एवं च स्थूलोऽहमित्यादिबुद्धिर्भ्रान्तैव । ... (अत?) एवोक्तम् । अनात्मन्यात्मबुद्धिरविद्येति । तस्माद्देह आत्मा न भवति । नापीन्द्रियाणामात्मत्वं[14] करणत्वाद्घ्राण्पादिवत्[15] । चक्षुषि नष्टेऽपि योऽहं चक्षुषा रूपमद्राक्षं स एवैतर्हि स्पृशामीति प्रतिसंधानानुपपत्तेर्विपक्षे[16] बाधकस्तर्कः ।

---

1 B सुप्तावस्थायां
2 A चक्षुराद्यपरमे
3 A तेनैता ; B तेनैतान्
4 B लोकायितभेदान्
5 A एकप्रकारेण
6 A ससिरस्कः पिण्डो; B सशिरस्कपिण्डो
7 A B देहस्यात्मत्वं
8 A B omits इति
9 A स्थविरणत्वप्राति अनुभवामीति
10 B अनुभवामि ( मी ? ) ति
11 A omits प्रति
12 A अध्यवसायते
13 A omits भिन्नपरिमाणाधिकरणत्वेन इत्यारभ्य तस्माद्देह आत्मा न भवति
14 A अपीन्द्रियाणां नामत्वं
15 B करणत्वाद्घ्राणाद्यादिवत्
16 B प्रतिसंधानानुपपत्तिः

अन्यानुभूतेऽर्थेऽन्यस्य [1]प्रमितिसंधानायोगात् । न चात्र वरगोष्ठीन्यायो दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यसद्भावात् । तथाहि वराणां हि भोग्यमसाधारणं प्रतिपुरुषनियतत्वात् । इह तु तदभावात् साधारणम् । बहूनां च संनिधौ साधारणे च भोग्ये प्रतिनियतभोग्य[2]व्यवस्था न संभाव्यते । किं च चक्षुरादीन्द्रियमचेतनं नियतविषयत्वात्प्राच्योदीच्यगवाक्षवत् । [3]तस्मादिन्द्रियाणामपि नात्मत्वम् । अस्तु तर्हि [4]मनस आत्मत्वमिति चेत्तदा वक्तव्यम् । चक्षुरादिव्यतिरिक्तं कारणान्तरम[5]पेक्ष्य रूपादीन् साक्षात् करोत्यनपेक्ष्य वा । नाद्यः संज्ञाभेदमात्रविवादेऽप्यर्थे विवादाभावात् । [6]न द्वितीयो रूपादिषु [7]चक्षुरादिसंबन्धे ( द्धे ? )षु युगपदनेक[8]ज्ञानोत्पत्त्य ( त्ति? )प्रसङ्गात् । तस्मान्न मनस आत्मत्वम् । अतो देहेन्द्रियादिव्यतिरिक्त इति सुष्ठूक्तम् । ब्रह्मैव [10]तावत् [11]स्वाविद्यया संसरति [12]स्वविद्यया मुच्यते अविद्योपहितं ब्रह्मैव जीव[13]रूपं व्यपदिश्यते । ततश्च जीवब्रह्मणोर्घटाकाशमठा[14]काशवज्जीवानां घटाकाशमठाका[15]शादिवत्परस्परं भेदाभावादात्मैकत्वं वदतामेकमेवाद्वितीयं ब्रह्मेत्यादिवचननिचयं प्रमाणीकुर्वतां वेदान्तिनां मतमपाकर्तुमाह—**प्रतिशरीरमिति**। विमतौ भिन्नौ किंचिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्माध्यस्तत्वाद् दहनतुहिनवत् । तदुक्तम्—'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति'। न चागमबलादात्मैकत्वसिद्धिः । एकमेवाद्वितीयमित्यादि[16]श्रुतेः परमे[17]श्वरापेक्षया समाधिकपुरुषान्तरानिराकरणत्वोपपत्तेः । न ह्यागमाः सहस्र[19]मपि घटं पटयितुमीशते । तस्माज्जीव-

---

1 A प्रतिसंधामयोगात ; B प्रतिसंक्रमायोगात्
2 A भोग्यव्यवस्थायां संभाव्यते
3 B तस्मादि [ दिन्द्रि? ] याणां
4 B मनससात्मत्वं
5 A अवेक्ष्य
6 A नापि द्वितियरूपादिषु
7 A B चक्षुरादिसंबद्धेषु
8 A B ज्ञानोत्पत्तिप्रसङ्गात्
9 A omits तावत्
10 A स्वविद्यया
11 B स्वाविद्यया
12 A अविद्योपहतं
13 B जीव इति
14 B महाकाशादिवत्
15 B महाकाशादिवत
16 A इत्यादिश्रुतिः
17 A परामेश्वरापेक्षया
18 A निराकरणपरत्वोपपत्तेः
19 B सहश्रं घटं

ब्रह्मणोर्जीवानां च परस्परमभेदासंभवात्सुखादिवैचित्र्यदर्शनाद्भेद एवाभ्युपगन्तव्यः। अत एवोक्तं 'नानात्मानो व्यवस्थातः' इति। अणुपरिमाण आत्मेति रामानुजमतानुसारिणः संगिरन्ते[1]। उपसंहरन्ति[2] च।

'बालाग्रशतभागस्य[3] शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥' इति।

प्रदीपप्रभावत्[5]संकोचविकाशवानात्मा देहानुरूपपरिमाण इति क्षपणकाः समाचक्षते[4][6] तत्पक्षद्वयं प्रतिक्षिपति—**विभुरिति**। आत्मा विभुः सर्वत्रोपलभ्यमानकार्यत्वादाकाशवत्। विपक्षे[7] हेतूच्छेद एव बाधकः। बालाग्रशतेत्यादि[8] तु[9] प्रत्यक्षोपलब्धियोग्यताराहितत्वात्सौक्ष्म्याभिप्रायम्। संकोचविकाशवत्त्वे प्रदीपप्रभावत्सावयवत्वेनानित्यत्वापत्तौ[10] कृतहान्यकृताभ्यागमप्रसङ्गः। क्षणभङ्गुरं क्षणोदयं[11] सकललोकयात्रानिर्वाहकं विज्ञानमात्रमात्मेति बौद्धराद्धान्तः[12]। तं निराकरोति—**नित्य इति**। क्षणभङ्गुरपक्ष[13] आकाशकुसुम (कुशा?) वलम्बनप्रायत्वान्न[14] परीक्षाक्षमः। क्षणिकत्वे प्रमाणाभावात्[15]। यत्सत्तत्क्षणिकं यथा जलधरपटलमिति[16] प्रमाणमस्तीति चेन्मैवं मंस्थाः। व्याप्यत्वासिद्धत्वात्[17] प्रागेव दूषितत्वात्स्थायित्वग्राहिणा प्रत्यभिज्ञाप्रत्यक्षेण बाधितत्वेन कालात्ययापदिष्टत्वाच्च। किं च कस्य संसारित्वं ज्ञानसंतानस्य संतानिनो वा। नाद्यः संतानिव्यति-

---

1 A omits च
2 A B उदाहरन्ति च
3 B शतभाग्य ( ग ? ) स्य
4 B समाख्यातः
5 A प्रदीपप्रभावात्
6 B समाचक्ष्य ( क्ष ) ते
7 A विपक्षहेतुच्छेद
8 A बालाग्रशतेत्यादिना
9 A omits तु
10 A अनित्यत्वोपपत्तौ; B नित्यत्योपपत्तेः
11 A स्वरसभङ्गुरं सततोदयं; B सभङ्गुरं सततोदयं
12 A B बौद्धा बुद्ध्यन्ते तान् धिक्करोति
13 A B क्षणभङ्गपक्षः
14 A काशकुसुमावलम्बप्रायत्वात्; B काशकुशावलम्बन
15 B मानाभावात्
16 B जलधर इति
17 B व्याप्यत्वासिद्ध्या

रेकेण संतानस्य प्रमाणपथानारोहात् । नापि द्वितीयः संतानिनां[1] विज्ञानानामन्यान्यत्वेनान्यदृष्टं[2] स्मरन्यन्य इति न्यायेनानुभवस्मरणयोर्भिन्नाधिकरणत्वानुपपत्तेः । बन्धमोक्षयोश्चैकायतनत्वादवश्यभावाच्चेति भावः । नन्वात्मसद्भावे किं प्रमाणमित्याशङ्क्य किमत्र प्रमाणान्तरगवेषणया प्रत्यक्षमेव प्रमाणमित्याह[3]—स चेति । सर्वलोकोऽप्यहमस्मीति[4] प्रत्येति न कश्चिदपि नाहमस्मीति प्रत्येति तस्मादात्मास्तित्वं सर्वलोकप्रसिद्धमित्यर्थः । ननु विप्रतिपन्नं प्रति न प्रत्यक्षं[5] प्रमाणमुपन्यसनीयमित्याशङ्क्य तर्हि विप्रतिपन्नपुरुषप्रतिपादकत्वेन जागरूकमनुमानमुपन्यस्यतामित्याह[6]—विप्रतिपत्तौ त्विति । बुद्धिरादिर्येषां[7] ते बुद्ध्यादयः इति तद्गुणसंविज्ञानो बहुव्रीहिः । अन्यथा बुद्धेरसंग्रहः स्यात् । उक्तं च । 'बुद्ध्यादीनां षण्णामात्मलिङ्गत्वम् । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानीति'। ततश्च बुद्धिसुखदुःखादयो गुणा लिङ्गं यस्य स तथोक्तः । यद्यप्येकैकस्य गुणस्य लिङ्गत्वं विद्यते तथापि प्रमाणसंप्लवाभ्युपगमाद्बहूनां लिङ्गानामुपन्यासो युज्यते । ननु बुद्ध्यादीनां गुणत्वे सिद्धे स्यादेतदेवं न[8] त्वेतदस्तीत्याशङ्क्य तदेतदुपपादयितुं प्रतिजानीते—तथाहीति । बुद्ध्यादीनां गुणत्वं प्रथमं प्रसाध्यं[9] पश्चादात्मानं च[10] प्रसाधयामीत्यभिप्रायेण क्रमार्थं तावच्छब्दं प्रयुङ्क्ते[11] । तत्र ग्राह्यत्वादित्युक्तेऽनुमानग्राह्ये परमाण्वादौ व्यभिचारः । अत उक्तम्—इन्द्रियेति । तावत्युक्ते[12] पटादावनैकान्तिकता स्यात्[13] अत उक्तं—एकेति । तथापि सुखत्वादावनैकान्तिकता तदर्थमुक्तं—अनित्यत्वे सतीति । प्रदीपप्रभादौ व्यभिचारव्यावृत्त्यर्थं तज्जातीयत्वादिति हेतुः प्रयोक्तव्यः । अस्तु बुद्ध्या-

1 A संतानां
2 A अन्यात्वेनान्यदृष्टं
3 B प्रमाणमाह
4 B सर्वलोकेऽप्यहमास्मि
5 B प्रत्यक्ष्यं ( क्षं? )
6 B मनुमानु ( न? )
7 B तेन
8 B तत्वे तदस्तीति
9 A B प्रसाध्य
10 B omits च
11 B प्रायुक्त ( ङ्क्ते? )
12 B तावताप्युक्तेः
13 A omits स्यात्

दीनां गुणत्वं प्रस्तुते किमुपन्यस्तं तत्राह—**गुणश्चेति**। बुद्ध्यादिगुर्ण्याश्रितो भवितुमर्हति गुणत्वाद्रूपादिवदित्यर्थः। बुद्ध्यादिगुणस्य परिशेषबलादात्माश्रितत्वं प्रसाधयितुं प्रथमं प्रसक्तप्रतिषेधं विदधाति—**तत्रेति**। पृथिव्यादिष्वष्टसु गुणिष्वित्यर्थः। भूतत्वं नाम बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वम्। अतो भूतशब्देन पृथिव्यादिपञ्चकं विवक्ष्यते। बुद्ध्यादयो भूतगुणा न भवन्ति मानसप्रत्यक्षत्वा[1]दित्यत्र बुद्धित्वादौ साधर्म्योदाहरणे[2] जाग्रत्यपि वैधर्म्योदाहरणमाह—**ये हीत्यादिना**[3]। बुद्ध्यादीनां भूतगुणत्वं[4] निषिद्ध्य दिक्कालमनोगुणत्वं निषेधयति[5]—**नापीति**। अत्रापि सपक्षे रूपादौ सत्येव व्यतिरेकव्याप्तिपुरःसरं दृष्टान्तमाचष्टे—**ये हि**[6] **दिगादीति**। बुद्ध्यादीनां विशेषगुणत्वं साधयति—**बुद्ध्यादय इति**। साधितं[7] दिगादिगुणत्वाभावं निगमयति—**अत इति**। एवं बुद्ध्यादीनां पृथिव्यादिगुणत्वे निषिद्धे[8] पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितत्वमेष्टव्यमिति फलितमाचष्टे—**तस्मादिति**। नन्वनेनाष्टद्रव्यातिरिक्तं[9] द्रव्यान्तरं सिद्धम्। आत्मसिद्धौ किमायतनमत[10] आह—**स एवेति**। चर्चितमर्थं प्रमाणपदवीमुपारोहयति[11]—**प्रयोगश्चेति**। न च हेतुरसिद्धः। बुद्ध्यादीनां पृथिव्याद्यनाश्रितत्वस्य गुणत्वस्य[12] च[13] प्रागेव प्रसाधितत्वादिति भावः। व्यतिरेकव्याप्तिपूर्वकं दृष्टान्तमाह—**यस्त्विति**। अन्वयव्याप्तेरभावात्केवलव्यतिरेकीत्याह—**इतीति**। विशेषम[14]विशेषमविवक्षितत्वात्[15]। यत्तच्छब्दाभ्यां सामान्योपादानेऽन्वयव्यतिरेक्यपि भवतीत्याह—**अन्वयव्यतिरेकी चेति**[16]। प्रयुज्य दर्शयति—**तथाहीत्यादिना**। उपपादितमर्थमुपसंहरति—**तदेवमिति**। एवमात्मानं

---

1 B प्रत्यक्ष्य ( क्ष ? ) त्वात्

2 B साधर्म्ये ( र्म्यो ? ) दाहरणे

3 A B ये हीत्यादि

4 A भूतगुणं

5 A निषेधाति

6 A omits ये हि

7 A समाधितं

8 B पृथिव्यादिगुणत्वं निषिद्ध्य

9 A द्रव्यातिरिक्तद्रव्यान्तरं

10 A B किमायातं

11 A उपारोहाति; B उपरोहति

12 A गुणस्य

13 B omits च

14 A B omit अविशेषं

15 A अविवक्षित्वात्

16 B अन्वयव्यतिरेकीति

प्रसाध्य तस्य प्रागुक्तं विभुत्वं साधयति—**स चेति**। विभुरित्युक्ते प्रभुरिति प्रतिभासिनां[1] ( तां ? ) भ्रान्तिं व्युदस्यति—**परामिति**[2]। अत्र महदिति भावप्रधानोऽयं[3] निर्देशः। अन्यथा आन्महतः समानाधिकरण-जातीययोरितिसूत्रेण महापरिमाणेति स्यात्। तथा च परमं निरवधिकं महत्त्वं[4] परिमाणं यस्य स तथोक्तः। विभुत्वं नाम सर्वमूर्तद्रव्यसंयोगित्वमि-[5]यत्तानवच्छिन्नपरिमाणयोगित्वं वा। उप्ताः शालयो दृष्टसहकारिसमवधाने समानेऽपि[6] कस्यचित्फलन्ति कस्यचिन्न फलन्ति। अतो दृष्टसहकारिणो-ऽतिरिक्तमदृष्टमेष्टव्यम्[7]। तच्च स्वोपकारकारिणि पवनपावकादौ पदार्थे सार्थे[8] क्रियां जनयति। तदुक्तम्—'अग्नेरूर्ध्वज्वलनं[9] वायोस्तिर्यक्पवनमणु-[10]मनसोश्चाद्यं कर्मेत्येतान्यदृष्टकारितानीति'[11]। यथा च तत्र तत्र[12] देशान्तरे शालिसंपत्त्यादेः फलस्य दृश्यमानत्वात् कारणादृष्टाधिकरणस्या-[13]त्मनो विभुत्वमभ्युपगन्तव्यम्। अनुमानं च। विमतमदृष्टं स्वाश्रयसंयुक्त एवाश्रयान्तरे क्रियां जनयत्यन्योन्याभावविरोधिक्रिया-हेतुगुणत्वात् गुरुत्ववत्। आत्मा अणुत्वरहित इन्द्रियग्राह्यगुणाधिकरण-त्वात्कुम्भवत्[14]। इन्द्रियग्राह्यत्वाद्वा। मध्यमपरिमाणत्वे सावयवत्वादिदोषः स्यात्। तस्मादात्मनो विभुत्वं सिद्धम्। विभुत्वादेव नित्यत्वमपि सिद्ध-मित्यर्थः। आत्मनो नानात्वं[15] तु प्रागेव प्रसाधितम्।

आत्मानं सप्रपञ्चं निरूप्य प्राप्तावसरं शरीरं लक्षयति—**तस्य भोगेति**। आयतनवदायतनं यच्छरीरं येनाधिष्ठि[16] ( क्ट ? ) तं तच्छरीरं तस्यै-

---

1 A प्रतिभासितां; B प्रतिभाति
2 A B परमेति
3 B omits अयं
4 B महत्त्वपरिमाणं
5 A समस्तमूर्तद्रव्य
6 B omits समानेऽपि
7 A एवैष्टव्यम्
8 A B पदार्थसार्थे
9 A अरूर्ध्वं ( अग्नेरूर्ध्वं ? )
10 A तिर्यक् पतनं
11 A कर्मेत्यतानि; B कर्मैतानि
12 B omits तत्र
13 A तत्करणादृष्टा
14 A कुम्भादिवत्
15 A आत्मनानात्वं
16 A यददृष्टकं दृष्टं

वात्मनो भोगाश्रय इति सूचयितुं **तस्येत्युक्तम्** । लोके स्रक्[1]चन्दनवनितादिसेवायां भोगशब्दस्य प्रसिद्धेर्विवक्षितमर्थमाह—**स्व[2]समवेतसुखदुःखेति** । स्वसमवेतसुखदुःखसाक्षात्कारो भोग इत्यर्थः । पदार्थमुक्त्वा वाक्यार्थमाह—**स इति** । स भोगो यत्संयुक्ते आत्मनि संजायते तद्भोगायतनं शरीरमित्यर्थः । 'चेष्टेन्द्रियाश्रयः शरीरम्' इति सूत्रमनुस्म[3]रन् लक्षणान्तरमाह—**चेष्टेति** । चेष्टाशब्देन क्रियामात्रविवक्षायां क्रियाश्रये पवनपावकादावतिव्याप्तिमाशङ्क्य विवक्षितमर्थमाचष्टे—**चेष्टेति** । हितप्राप्त्यर्थमहितपरिहारार्थं वा यत् स्पन्दनं सा चेष्टा प्रयत्नवदा[4]त्मसंयोगासमवायिकी क्रियेत्यर्थः । पक्षान्तरं वारयति—**नेति** । लक्षणद्वयेऽपि करचरणादावतिव्याप्तिपरिहारा[5]र्थमन्त्यावयवीति पदं प्रक्षेप्तव्यम् । न च मृतशरीरेष्वव्याप्तिः । कादाचित्कस्य तदाश्रयत्वस्य विवक्षितत्वात् ।

इन्द्रियस्य लक्षणमाह—**शरीरेति** । लक्षणगतानां विशेषणानां व्यावर्त्यानि स्वयमेव कीर्तयति—**अतीन्द्रियमित्यादिना** । इन्द्रियमतिक्रान्तमतीन्द्रियमित्युच्यमाने इन्द्रियज्ञप्तावतीन्द्रियज्ञप्तिः । अतीन्द्रियज्ञप्ताविन्द्रियज्ञप्तिरिति परस्पराश्रयप्रसङ्ग इति चेन्नैवं योगजधर्माजन्यसाक्षात्[6]काराविषयातीन्द्रियमिति निरुच्यमानत्वात् । अतीन्द्रियस्य कालादेः सर्वोत्पत्तिमन्निमित्तका[7]रणमिति ज्ञानं प्रति का[8]रणत्वात् । ज्ञान[9]करणमित्यनेन न कालादावतिव्याप्तिः [10]परिहृतेत्यर्थः । शरीरसंयुक्तपदस्योपयोगमाह—**तथापीति** । इन्द्रियार्थसंनिकर्षस्य प्रत्यक्षाप्रत्यक्षद्रव्यसंयोगरूपत्वेनातीन्द्रियत्वं ज्ञानकरणत्वं च विद्यतेऽत[11]श्च तत्रातिव्याप्तिः । तन्निराकरणार्थं शरीरसंयुक्तग्रहणं तस्य गुणत्वेन संयोगायोगा-

---

1 A अक्चन्दन
2 A omits स्वसमवेत
3 A अनुसरन्
4 A आत्मसमवायिकारिणिका क्रिया इत्यर्थः
5 A निरासार्थं
6 A साक्षात्कारविषयत्वमतीन्द्रियमिति
7 A निमित्तकारणत्वमिति
8 A करणत्वाभावात्
9 A ज्ञानकरणत्वं
10 A परिहृते इत्यर्थः
11 A ततश्च

दिति भावः। अतीन्द्रियपदापोह्यमाह—**शरीरेति**। करणमिन्द्रियमित्युक्ते छिदिक्रियासाधने कुठारादावतिव्याप्तिः। तदर्थमुक्तम्—**ज्ञानेति**। तावत्युक्तेऽनुमितिकरणे धूमादावतिव्याप्तिस्तन्निवृत्त्यर्थं **शरीरसंयुक्त-मिति**। अवशिष्टं स्पष्टमित्यर्थः। ननु त्वचा सर्वेन्द्रियाधिष्ठानानि व्याप्तानि। ततश्च त्वगिन्द्रियं सर्वार्थोपलम्भकं न[2] स्पर्शमात्रोपलम्भकं सर्वार्थग्रहस्य[3] त्वगिन्द्रियान्वयव्यतिरेकानुविधायित्वात् तस्मादेकमेवेन्द्रियमिति परमतं निराकर्तुमिन्द्रियभेदमभिधत्ते—**तानि चेति**। पूर्वोक्तेन लक्षणेन लक्षितानीन्द्रियाणि षडित्यक्षरार्थः। अयमाशयः—अन्धादीनां स्पर्शोपलम्भेन त्वगिन्द्रियस्य सत्त्वे निश्चिते तस्यैव रूपाद्युपलम्भकत्वाङ्गीकारे रूपादिसाक्षात्कार[4]वैधुर्यलक्षणमन्धत्वादिकं न संगच्छते। अथोच्येत[5] त्वगिन्द्रियस्य सर्वाधिष्ठानव्याप्तावपि प्रत्यधिष्ठानं शक्तिभेदोऽभ्युपगम्यते। तथा च तच्छक्तिसाकल्यवैकल्याभ्यामन्धत्वानन्धत्वाद्युपपत्तिरिति तर्हि शक्तिभेदसंज्ञया भवतां व्यवहारः घ्राणादिसंज्ञयास्माकमिति संज्ञामात्रे विवादः। इन्द्रियभेदस्त्वभ्युपगत एव। न च वाच्यम्—शक्तिमदिन्द्रियस्यैकत्वात्कथमिन्द्रियभेदाभ्युपगम इति। रूपादिविषयव्यवस्थये[6]न्द्रियव्यवस्थाया आस्थेयत्वात्। एकस्यैवेन्द्रियत्वे एकप्रकृतिकत्वेन नानाविषयग्रहणसिद्धिः। नानाप्रकृतिकत्वे यद्यदिन्द्रियं यद्यत्प्रकृतिकं तत्तदिन्द्रियं तत्तद्गुणग्राहकमिति प्रति[7]नियतविषयग्रहणासिद्धिरिती[8]न्द्रियभेदः सिद्ध इति। अत एवोक्तं सूत्रकारेण '[9]त्वगव्यतिरेकात्' 'नेन्द्रियान्तरार्थानुपलब्धेः' इति। विवृतं च भाष्यकारेण। विशेषनामानि कीर्तयति-**घ्राणेति**। घ्राणादेः पृथिव्यादिप्रकृतिकतया पृथिव्याद्युद्देशक्रमापेक्षया घ्राणाद्युद्देश[10]क्रमः। ननु व्यवहारसिद्धये हि संज्ञाकरणम्। तर्हि लघ्वर्थं

---

1 A अतीन्द्रियदापोह्यमाह; B अतीन्द्रियपद्यापोह्यमाह
2 A omits न स्पर्शमात्रोपलम्भकं
3 A सर्वार्थग्रहणस्य
4 A साक्षात्कारि
5 A अथोच्यते
6 A व्यवस्थाया इन्द्रियव्यवस्थाया
7 A omits प्रति
8 A omits इति
9 A omits त्वगव्यतिरेकात्, नेन्द्रियान्तरार्थानुपलब्धेः; B त्वगव्यतिरेक-नेन्द्रियार्थान्तरानुपलब्धेः
10 B घ्राणाद्युद्देशक्रमं

संज्ञाकरणमिति[1] न्यायेन "अचोऽन्त्यादि टि" "दाधाघ्वदाप्" "याचि भम्" इत्यादौ टिघुभादि[2]संज्ञावदेकैकेनैवाक्षरेण संज्ञा क्रियतामित्याशङ्क्य न डित्थ[3]डवित्थादिवदियं संज्ञा किं त्वनर्थैति वक्तुमसाधारणरूपा[4]मन्वर्थक्रियां दर्शयति—**तत्रेति**। तोष्विन्द्रियेषु मध्ये यद्गन्धोपलब्धिसाधनमिन्द्रियं तद् घ्राणमिति संबन्धः। आत्मा जिघ्रति गन्धं वा[5] गृह्णात्यनेनेति घ्राणं 'करणाधिकरणयोश्चेति' करणार्थे ल्युट्[6]। उपलब्धिसाधनं घ्राणमित्युक्ते चक्षुरादावतिव्याप्तिः। अत उक्तम्—**गन्धेति**। तावत्युक्ते कुङ्कुमगन्धाभिव्यञ्जकघृतादावतिव्याप्तिः। तदर्थमुक्तं—**इन्द्रियमिति**। तथापि सर्वार्थोपलब्धिसाधने मनस्यतिव्याप्तिः। तत्परिहाराय **बाह्येति** वक्तव्यम्। तस्य स्थानमाह—**नासेति**। इन्द्रियस्याहंकारप्रकृतिकत्वं सांख्यैराख्यातम्। तन्मतं प्रत्याख्यातुमाख्याति—**तच्चेति**। घ्राणस्य पार्थिवत्वं कुत इत्यत आह—**गन्धवत्त्वादिति**। हेतोरासिद्धिमुद्धरति—**गन्धवत्वं चेति**। सामान्यतोव्याप्तिपुरस्सरं दृष्टान्तमाचष्टे—**यदिति**। रसयति रसं गृह्णा[7]त्यनेनेति रसनमित्येतदप्यन्वर्थमित्यभि[8]प्रायेण प्राह—**रसेति**। सक्तुरसाभिव्यञ्जकलालायामतिव्याप्तिनिवृत्त्यर्थमिन्द्रियग्रहणम्। अविशिष्टं पूर्ववत्। रसनं रसवदभिव्यञ्जकत्वादित्युक्ते चक्षुरादौ व्यभिचारः। अत उक्तम्—**रसस्येति**। तावत्युक्ते मनसि व्यभिचारः। तदर्थमुक्तम्—**एवेति**। एवमपि रसनस्य रसत्वादिग्राहकत्वेन हेतुरसिद्धः स्यादत उक्तम्—**रूपादिष्विति**[9]। यद्यपि रूपाग्राहकत्वे सति रसाभिव्यञ्जकत्वादिति प्रयोक्तुं शक्यते तथाप्यसिद्धिपरिहारार्थमपि

---

1 B संज्ञाकरामिति न्यायेन
2 A विघुभादि
3 B डित्थडवित्थादिवद् न इयं संज्ञा। किं तु सार्थेति
4 B आसाधारणभूता
5 B omits वा
6 B ल्य ( ल्यु? ) ट्
7 A omits गृह्णात्यनेनेति रसनमित्येतदप्यन्वर्थमित्याभिप्रायेण प्राह रसेति। सक्तुरसाभिव्यञ्जकलालायामतिव्याप्तिनिवृत्यर्थमिन्द्रियग्रहणम्। अविशिष्टं पूर्व
8 B अन्वर्थम ( मि? ) त्यभिप्रायेणाह
9 B रूपादिष्वपि

विशेषणमस्तीति ज्ञापयितुमित्थं प्रयोगः कृतः। अत एवोक्तम्—'अनभ्यासदशायां सांशयिकत्वादिति'। अत्र दृष्टान्तमाह—**लालावदिति**। लाला नाम दन्तान्तर्गतोदकमाचष्टे[1]। रूपं पश्यत्यनेन चक्षुरिति विवक्षंश्चक्षुषो[2] लक्षणमाह—**रूपेति**। रूपाभिव्यञ्जकप्रभायामतिव्याप्तिपरिहारार्थमिन्द्रियग्रहणम्। शेषं पूर्ववत्। मञ्चाः क्रोशन्तीत्यत्र यथा मञ्चशब्देन तत्रस्थाः पुरुषा व्यपदिश्यन्ते तथा त्वचि स्थितमिन्द्रियं[3] त्वगिति व्यपदिश्यत इति मनसि निधाय त्वचो लक्षणमाह—**स्पर्शेति**। स्पर्शाभिव्यञ्जकव्यजनपवनादावतिव्याप्तिपरिहारार्थमिन्द्रियपदम्[4]। अन्यत्पूर्ववत्। शृणोति शब्दं गृह्णात्यनेनेति श्रोत्रमित्याशयेनाह—**शब्देति**। ननु घ्राणादिवच्छ्रोत्रस्यापि[5] किं समवायिकारणमस्ति नेत्याह—**तच्चेति**। नन्वाकाशस्य श्रोत्रत्वे तस्य[6] नित्यत्वेन सर्वदा सत्त्वाद्बधिरस्यापि शब्दोपलम्भप्रसङ्ग इति चेन्नैवम्। शब्दश्रवणजनितसुखदुःखानुभवप्रापकधर्माधर्मविशिष्टस्यैव नभोदेशस्य श्रोत्रत्वाभ्युपगमेन तादृशादृष्टसाकल्यवैकल्याभ्यां[7] बधिरत्वाबधिरत्वोपपत्तेः। पक्षान्तरं वारयति—[8]**नेति**। श्रोत्रस्याकाशात्मकत्वे किं प्रमाणं तत्राह—**शब्देति**। शब्दगुणत्वे[9] सिद्धे स्यादेतदेवम्। तदेवं[10] सिद्ध्येत्तत्राह—**शब्दग्राहकत्वादिति**। [11]सामान्यतोव्याप्तिमाह—**यदिति**[12]। दृष्टान्तमाचष्टे—**यथेति**। हेतोः पक्षधर्मतामभिधत्ते—**शब्देति**। निगमयति—**अत इति**। श्रोत्रं गुणत्वावान्तरजात्या ग्राह्यसजातीयगुणत्ववद्ग्राह्येन्द्रियत्वाच्चक्षुर्वदित्यनुमानेन[13] श्रोत्रस्य शब्दगुणकत्वे सिद्धे सिद्धमाकाशत्वमिति भावः। इन्द्रियसद्भावे प्रमाणं पृच्छति—**नन्विति**। अनुमानमेव प्रमाणमित्याह—

---

1 A B गतोदकं चष्टे
2 B विवि ( व ? ) क्षितं
3 A इन्द्रियत्वगिति
4 B पथ ( व ? ) नादौ
5 A omits आदिवच्छ्रोत्रस्यापि किं समवायिकारणम् इत्यारभ्य 'शब्दग्राहकत्वादिति' इति पर्यन्तम्
6 B has सति for तस्य
7 A वैकल्यसाकल्याभ्यां
8 A तेनेति
9 B शब्दगुणकत्वे
10 A तदेव कथं सिद्ध्येत्
11 A omits सामान्यतो व्याप्तिमाह—यदिति। दृष्टान्तमाचष्टे य
12 A यदि & adds आदिवच्छ्रोत्रस्यापि etc.
13 A चक्षुरादिवदित्यनुमानेन

उच्यत इति । किमिदमत्र क्रियात्वं विवक्षितं धात्वर्थरूपत्वं परिस्पन्द-रूपत्वं वा । नाद्यो निमित्त[1]मात्रसाध्ये प्रध्वंसादावनैकान्तिकत्वान्न द्वितीयोऽसिद्धत्वादिति । सेयमुभयतःपाशा रज्जुरिति चेत्तदसारम् । क्रियात्वं कार्यत्वमिति विवक्षितत्वात् । कार्यत्वं चाभूत्वा भावित्वमिति न कश्चिद्दोषः । मनस्तु प्रसङ्गादुद्दिष्टमुत्तरत्र निरूपयिष्यते ।

चतुर्थं प्रमेयं[2] निरूपयति—**अर्था इति** । विशेषेणोद्दिशति[3]—**द्रव्येति** । समस्तपदार्थाश्रयत्वेन प्रधानस्य द्रव्यस्य प्रथममुद्देशोऽनन्तरं गुणत्वो-पाधिना सकलद्रव्यवृत्तेर्गुणस्य तदनु सामान्यवत्त्वसाधर्म्यात्कर्मणः पश्चात्तदाश्रितस्य[4] सामान्यस्य तदन्तरं समवायाश्रयस्य विशेषस्यान्ते[5] समवायस्येति विवेक्तव्यम् । ननु षडेव पदार्था इति कथमुच्यते अभावस्यापि[6] सद्भावादिति चेन्नैवम् । विधिमुखप्रत्ययवेद्यतया[7] भावरूपाः[8] षडेवेति विवक्षितत्वात् । अथापि कथं षडेवेति नियम उपपद्यते[9] विकल्पासहत्वात् तथाहि नियमव्यवच्छेद्यं[10] प्रमितं नो वा प्रमितत्वे निषे-धानुपपत्तिरप्रमितत्वे निषेद्धुं न शक्यते[11] । न हि कश्चित्प्रेक्षावान्[12]छशविषाणं निषेद्धुं यतते । ततश्चानुपपन्नो नियम इति चेत्तदसमञ्जसम् । सप्तमतया प्रमितेन्धकारादौ भावत्वनिषेधात् भावतया अप्रमिते शब्दशक्त्यादौ[13] सप्तम-पदार्थत्वानिषेधादिति कृतं विस्तरेण । ननु द्रव्यादिषु षट्पदार्थेषु[14] प्रमा-णादीनां षोडशपदार्थानां यथासंभवमन्तर्भावस्य वक्तुं शक्यत्वात्पृथक् पृथक् प्रमाणादि[15]षोडशपदार्थनिरूपणमनुपपन्नं लाघवे संभवति गौरव-स्यानाश्रयत्वादितीमा[16]माशङ्कामनूद्य पराकरोति—**प्रमाणादय इति** । अयं

1 B नैमित्तमात्र
2 A प्रमेयाति
3 B विशेषणोद्देश इति
4 B तदाश्रितसामान्यस्य
5 A अनन्तरं
6 B अभावश्चापि
7 B विधिमुखप्रत्ययवेदतया
8 B भावरूपा
9 A संपद्यते
10 B प्रमितत्वे वा अप्रमितत्वे
11 A adds एव
12 B प्रेक्षावान्
13 B शक्तिसंख्यादौ सप्तमत्वानिषेधात्
14 A प (षट्?) टपदार्थेषु ; B षट्सु पदार्थेषु
15 A प्रमाणादीनां
16 A omits इति

भावः । न्याय[1]शास्त्रे प्रतिपादितानां प्रमाणादिपदार्थानां साक्षान्निःश्रे[2]यसा-ङ्गवद् द्रव्यादीनां तदभावाच्छोडशपदार्थवादो युक्तः । न तु प्राधान्येन षट्-पदार्थवादः । ननु न्यायशा[3]स्त्रप्रतिपादितत्वमस्य कुतोऽवसीयत इति चेत् न्यायप्रवृत्त्यङ्गभूतत्वेनात्र संशयादीनां निग्रहस्थानान्तानामुद्देशादिभिः प्रतिपादितत्वात् । न हीतरशास्त्रेष्वित्थं संशया[4]दयो निग्रहस्थानान्ता निरू-पिताः । न्यायप्रधानत्वादियमेव न्यायविद्या सर्वविद्यानुग्राहकत्वादुत्तमा च । न्यायेन हि सर्वविद्यानां प्रामाण्यं प्रतिपाद्यते । तदुक्तं **न्यायभाष्ये**—'सेयमान्वीक्षिकी न्यायविद्या प्रमाणादिभिः पदार्थैः प्रविभज्यमाना—

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।**
**आश्रयः सर्वधर्माणां विद्योद्देशे परीक्षिता** ' ।। इति ।

तथेमाः खलु चतस्रो[5] विद्याः पृथक् प्रधानभूताः प्राणभृ[6]तामनु-ग्रहायोपदिश्यन्ते । तासां चतुर्थीयमान्वीक्षिकी न्यायविद्या । तस्याः पृथक् प्रस्थानं संश[7]यादयः पदार्थास्तेषां पृथग्वचनमन्तरेणाध्यात्म-विद्यामात्रमियं स्याद्यथोपनिषत् । तस्मात्संश[8]यादिभिः पदार्थैः पृथक् प्रस्थाप्यत इति **भूषणे**ऽप्येतत्प्रतिपादितम् । तस्मात्सर्वविद्यानुग्राहकत्वा-न्निःश्रेयसहेतोस्तत्त्वज्ञानस्य च[9] निमित्तत्वात् पृथक्प्रस्थानत्वं ज्ञा[10]पयितुं प्रमाणा[11]दिषोडशपदार्थानां भेदेन कीर्तनमित्यलमतिप्रसङ्गेन । प्रथमो-द्दिष्टस्य द्रव्यस्य लक्षणमाह—**समवायीति** । द्रव्याणि परिसंचष्टे—**तानीति** । प्रतिनियतेन्द्रियग्राह्यगन्धादिगुणचतुष्टयाधिकरणत्वेनातिप्रसिद्धायाः पृथि-व्याः प्रथममुद्देशस्ततो गन्धह्रासे रूपरसस्पर्शवत्त्वादपां तदनु गन्धरसह्रासे रूपस्पर्शवत्त्वात्तेजसः पश्चाद्गन्ध[12]ादित्रितयह्रासे स्पर्शवत्त्वाद्वायोरनन्तरं

---

1 B न्यायशास्त्रप्रतिपादितानां
2 A B निश्रेयसाङ्गत्ववत्
3 B न्यायशास्त्रे ( स्त्र? ) त्वं
4 B शंसया ( संशया? )
5 B चतश्रो ( स्रो? )
6 B प्रा ( प्रमा? ) णभृतानुग्राहकतया
7 B शंसया ( संशया? ) दयः
8 A संज्ञायादिभिः; B शंसयादिभिः
9 A omits च
10 B प्रज्ञापयितुं
11 A प्रामाणादि
12 B गन्धत्रितयह्रासे

बाह्यैकेन्द्रियग्राह्यगुणवत्त्वादाकाशस्य समनन्तरमाकाशवदपरजातिरहित-त्वान्नियतव्यवहारः। विषयगुणानुमेयत्वाच्च कालस्य तदनु संख्यादि-गुणपञ्चकमात्राधिकरणत्वाद्दिशः पश्चाद्विभुत्वादात्मनस्तदनन्तरमात्मनो बुद्ध्यादिजननसाधनत्वान्मनस इति क्रमनियमो द्रष्टव्यः।

न च[1] बाह्यस्य सतस्तमःप्रभृतेर्[2]द्रव्यत्वनिषेधाद् द्रव्यस्य सतः सुवर्णादि-(देः?)[3] बाह्यत्वनिषेधान्नैवेति नियम उपपद्यते। प्रथमोद्दिष्टायाः पृथिव्याः समानासमानजातीयव्यावृत्तस्वरूपप्रतिपादनार्थमसाधारणधर्मं कथयति—**तत्रेति**। तेषु द्रव्येषु पृथिवीत्वं नाम सामान्यविशेषः पाकजरूपसमाना-[4]धिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिः। पृथिवीत्वं[5] द्रव्यत्वसाक्षाद्व्याप्यत्वं नाम द्रव्यत्वव्याप्याव्याप्यत्वे सति द्रव्यत्वव्याप्यत्वम्। द्रव्यत्वं नाम गगनार-विन्दसमवेतत्वे[6] सति नित्यगन्धासमवेतत्वं[7] सामान्यविशेषो यस्याः पृथिव्याः सा तथोक्ता। समवायलक्षणसंबन्धार्थो[8] मतुप्। उत्तरत्र द्विविधा पृथिवीति वक्ष्यते[9] (ति?)। तत्र नित्या परमाणुरूपा अनित्या कार्यरूपेति। तत्र स्थूल-पृथिव्याः कार्यत्वमासिद्धम्। न कदाचिदनीदृशं जगदिति वदन्तः प्राभाकरा मन्यन्ते। तान् प्रति सावयवत्वहेतुना[10] कार्यत्वं सिसाधयिषुस्तस्य हेतोः पक्षधर्मतामाह—**काठिन्येति**। काठिन्यं स्थैर्यं निबिडत्वमित्यनर्थान्तरम्। तथा कोमलत्वं प्रशिथिलत्वं[11] प्रचय इति। आदिशब्देनातिनिबिडत्वादि-र्गृह्यते। काठिन्यकोमलत्वादिश्चासावयवसंयोगविशेषश्चेति। समानाधि-करणसमासः। तेन युक्ता पृथिवी। तेनेदमुक्तं भवति। विमता पृथिवी कार्या सावयवत्वात्संमतवदिति[12]। ननु किमिदं सावयवत्वं नाम। अव-

1 A तव (न च?)

2 A प्रभते

3 A सुवर्णादेः; B सुवर्णादिर्नच

4 A सामानाधिकरणद्रव्यत्व

5 A omits पृथिवीत्वं

6 B समेतत्वे

7 B गन्धासमवेतं सामान्यं स सामा-न्यविशेषो यस्याः

8 A समवेतसमवेतं

9 A वक्ष्याति

10 A सावयवत्वेन

11 A कोमलत्वप्रशिथिलत्वं; B प्रासि (शि?) थिलप्रचलत्वं प्रचय इति

12 A सभवतादिति

यवसंयोगित्वमवयवसमवेतत्वं वा अवयवैः सह वर्तत इति सावयवमिति शब्दार्थपर्यालोचनायां संयोग[1]समवायलक्षणवृत्तिद्वयस्यैव संभावितत्वात्कस्मिन् सति किं[2] स्यादिति चेत् । आ[3]द्ये पटाद्यपेक्षयावयवभूततन्त्वादिसंयोगिभिराकाशा[4]दिभिर्व्यभिचारो द्वितीये त[5]न्तुत्वादिभिर्व्यभिचार इति चेत्तदसारम् । समवेतद्रव्यत्वं सावयवत्वमिति निरुच्यमानत्वादिति[6] । नन्वियं पृथिवी प्राणि[7]नां कथमुपकरोतीत्याशङ्क्य शरीरेन्द्रियविषयरूपेणेत्याह–**घ्राणशरीरेति** । शरीरेन्द्रिययोर्लक्षणं प्रागेवोक्तम् । मृत्पिण्डपाषाणादिलक्षणो विषयः शरीरेन्द्रियव्यतिरिक्तो विषय इति **शालिका-(क)नाथः** प्र[9]शस्तपादभाष्यव्याख्याने न्यरूपयत् । **उदयनस्तु** प्रतीयमानतया भोगसाधनमित्यवादीत् । शरीरेन्द्रियव्यतिरिक्तमात्मनो भोगसाधनं द्रव्यं विषय इति **कन्दलीकारो** जगाद । पृथिव्या[10]देर्द्रव्यत्वसिद्धये गुणानाह–**गन्धरसेति** । भगवता **कणादमहर्षिणा** पृथिव्याश्चतुर्दशगुणवत्त्वं प्रत्यपादि । रूपरसगन्धस्पर्शवती पृथिवी । संख्या परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसम[11]वायाच्चाक्षुषाणि । संयोगवेगप्रयत्नाभावे गुरुत्वात्पतनम् । सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् । चो (नो?)द[12]नादाद्यमिषोः कर्म तत्कर्मकारिता च[13] । संस्कारात्तथो[14]त्तरमुत्तरं चेति । पृ[15]थिवीं विभजते–**सा चेति** । पृथिवील[16]क्षणलक्षिता पृथिवी नित्यानित्यभेदाद् द्विधे[17]त्यर्थः । तत्र नित्यामुदाहरति–**नित्येति**[18] । यतः प[19]रमणुर्नास्ति स परमाणुरिति

---

1 B स ( सं ? ) योग
2 B क ( किं ? ) स्यादिति चेत्
3 B अ ( आ ? ) द्ये
4 B आकाशादिभिर्व्य (र्व्य?) भिचारो
5 A तन्त्वादिभिः;
6 A omits इति
7 B कथं प्राणिनां
8 A शालिनाथः
9 A प्रशस्तपदभाष्य
10 B पृथिव्यादेद्र ( र्द्र ? ) व्यत्व
11 A B समवायाच्चाक्षुषाणि
12 A नादाद्यमिषो कर्म; B नोदना
13 B कारिताच्च
14 A तथोत्तरमुत्तरमुत्तरं चेति
15 A पृथिवी
16 A लक्षणेन लक्षिता
17 A B द्विविधेत्यर्थः
18 A omits नित्येति इत्यारभ्य अनित्येति इतिपर्यन्तम्
19 B परमोणुर्नास्ति

नामनिर्वचनम्[1]। सक्रियो नित्यः परमाणुस्तद्रूपा पृथिवी नित्येत्यर्थः। अनित्यामुदाहरति—**अनित्येति**। कार्यरूपा[2] द्व्यणुकादिका[3] पृथिवी अनित्येत्यर्थः। नन्वाप्यपरमाणुगतरूपादिवत्पार्थिवपरमाणुगता[4] अपि रूपादयः किं नित्याः। नेत्याह—**द्विविधाया इति**। परमाणुगतानां रूपादीनामनित्यत्वं[5] कथमित्यत आह—**पाकजेति**। पाकशब्दार्थमाह—**पाक इति**। पाकेन पूर्वरूपादिपरावृत्त्या तदन्यरूपादेर्जननात्पाकजत्वमित्याह[6]—**तेनेति**।

क्रमप्राप्तानामपां लक्षणमाह—**अप्त्वेति**[7]। आपः स्त्री भूम्नीति नियमादाप इत्युक्तम्। अप्त्वं[8] नाम शीतस्पर्शवदसमवेतत्वरहितं[9] स्पर्शरहितसमवेतत्व[10]रहितम्। कथमुपकुर्वन्तीत्याह[11]—**रसनेति**। रसनं प्रागेवोक्तम्। सरित्समुद्रावप्रतिबद्धद्रवत्वैरवयवैरारब्धौ[12] प्रसिद्धौ प्रतिबद्धद्रवत्वैरवयवैरारब्धा हिमकरकास्तुषार[13]घनोपलाः। लालादिरादिशब्दार्थः। तद्रूपा आप इत्यर्थः। गुणानाह—**गन्धवर्जमिति**। एते च पूर्ववत्सिद्धाः। रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाश्च। संख्यादयश्चाक्षुष[14]वचनात्सिद्धाः। पतनोपदेशाद् गुरुत्वम्। उत्तरकर्मवचनात्[15] संस्कार इति। पूर्ववद् द्वैविध्यमाह—**नित्या इति**। नित्यनिष्ठानां रूपादिनामपाकजत्वान्नित्यत्वमित्याभिप्रायेणाह—**नित्यानामिति**। तुशब्दः पूर्वस्माद् वैषम्यं द्योतयति।

क्रमप्राप्तं तेजो लक्षयति—**तेजस्त्वेति**। तेजस्त्वं नामोष्णस्पर्शवदसमवेतत्वरहितस्पर्शरहितसमवेतत्वरहितं[16] जातिः[17]। उपकारप्रकारं दर्शयति—**चक्षुरिति**। भौमादिरादिशब्दार्थः। गुणानाह—

---

1 B omits नाम

2 A omits कार्यरूपा द्व्यणुकादिका इत्यारभ्य द्विविधाया इतिपर्यन्तम्

3 B द्वि (द्व्य) णुकादिका

4 B नन्वन्यपरमाणु

5 A कार्यरूपादीनामनित्यत्वं कथमित्यत आह

6 B omits तत्

7 B अप्त्वेति

8 B अपस्त्वं (?)

9 A असमवेतस्पर्शरहितसमवेतत्वरहितं

10 B रहितस्पर्श

11 A कथमुपकुर्वतीत्याह

12 B द्रव्यत्वैः

13 A B omit तुषार

14 A चाक्षुक

15 A उत्तरकर्मवचना

16 A omits स्पर्शरहितसमवेतत्वरहितं

17 B omits जातिः

**रूपस्पर्शेति**। तेजो रूपस्पर्शवदिति सूत्रम्[1]। तथा त्रपुसीसलोहरजतसुवर्णानां तैजसा(ना?)[2]मग्निसंयोगाद्[3] द्रवत्वमद्भिः सामान्यमिति। अवशिष्टं पूर्ववत्। तत्तेजश्चतुर्विधं भौमं दिव्यं[4]मौदर्यमाकरजं चेति। तत्र भौमं काष्ठेन्धनप्रभवं प्रसिद्धम्। दिव्यं सौरविद्युदादि। अशितपीतपरिपाकहेतुक[5][6]मौदर्यमाकरजं[7] सुवर्णादीति[8] **प्रशस्तपादभाष्योक्त**[9]चातुर्विध्यप्रतिपादको ग्रन्थः क्वचित्पुस्तकेऽस्ति न सर्वत्र। अधुना भङ्ग्यन्तरेण न्याय[10]भाष्योक्तं चातुर्विध्यमभिधत्ते—**उद्भूतेति**। इन्द्रियग्रहणयोग्यत्वो[11]पादको धर्मविशेष उद्भूतस्तद्विपरीतश्चा[12]नुद्भूत[13] इति। तच्चानेकद्रव्येण समवायाद्रूपविशेषाच्च रूपोपलब्धिरित्येतत्सूत्रव्याख्यानावसरे न्यायभाष्यकारेणोक्तम्। रूपविशेषस्तु यत्कृता क्वचिद्रूपोपलब्धिर्यदभावाच्च[14] क्वचिदनुपलब्धिः[15] स रूपधर्म[16] उद्भूतः समाख्यात इति। तत्र प्रथममुदाहरति—**उद्भूतेति**। पिण्डीभूतं सौरादि तेजः। उद्भूतरूपस्पर्शमित्यर्थः। सुवर्णं कीदृशमित्यपेक्षायामाह—**सुवर्णं त्विति**। सुवर्णं तु[17] तथा न भवतीत्यर्थः। ननु सुवर्णमनुद्भूतरूपस्पर्शं भवत्वित्याशङ्कमानं प्रत्याह—**अनुद्भूतेति**। यदि सुवर्णमनुद्भूतरूपं स्यात्तर्हि वारिस्थितवह्निवन्न[18] चक्षुषा गृह्येत[19] अनुद्भूतस्पर्शं चेत्प्रदीपप्रभामण्डलवत् स्पर्शेन न गृह्येत[20]। तस्मादुभाभ्यामिन्द्रियाभ्यां गृह्यमाणत्वादनुद्भूत[21]रूपस्पर्शं न भवति। किं तूद्भूताभिभूत[22][23]स्पर्शं सुवर्णमित्यर्थः। अभिभवशब्दार्थमाह-**अभिभवेति**। तदुक्तं **किरणावलीकारेण**-

---

1 A स्पर्शवदति
2 A तेजसां; B तैजसानां
3 B आग्निसंयोगाद्रवत्वं
4 B दिव्या ( व्य ? )
5 A आशितत्रु
6 A हेतुरौदर्य
7 A आकरजं तु
8 A सुवर्णादीनि
9 B प्रशस्तप ( पा? ) द
10 A omits न्याय
11 B योग्यतापादको
12 B उद्भवस्तद्विपरीतश्चानुद्भव इति
13 A अनुभूत इति
14 A यद्भावाच्च
15 B अनुपलब्धि स धर्म
16 A स्वरूपधर्म
17 A omits सुवर्णं तु
18 A चक्षुषा न गृह्येत
19 B गृह्यते
20 B गृह्यते
21 A अनुभूत
22 A किं नु भूताभिभूतरूपस्पर्शं
23 B अभिभूतरूपस्पर्शं

'बलवत्सजातीयग्रहणकृतमग्रहणं खल्वभिभवः' इति । न च रूपस्याभिभवे द्रव्यं नोपलभ्येतेति[1] वाच्यम् । महारजतरूपाभिभूतेऽपि धवलिम्नि पटानुपलम्भप्रसङ्गात्[2] । ततश्चोपष्टम्भकपार्थिवरूपाभिभूतत्वाद्रूपमेव नोपलभ्यते द्रव्यं तूपलभ्यते[3] । यद्येवं कथं[4] तर्हि अभिभूतरूपं सुवर्णमिति वक्तव्ये उद्भूतरूपमित्युक्तम् । प्रदीपादितेजोरूपवत्सुवर्णस्य भास्वरं रूपं सुव्यक्तं नोपलभ्यत इति रूपस्याभिभव उक्तः[5] । न हि मध्याह्ने प्रदीपो बहिर्भास्वरो नोपलभ्यत इति नाभास्वरः[6] । अत एवोक्तम् । यत्पुटपाकादीनां[7] रक्तसारता दृश्यते तत्तस्मिन्मिश्रीभूताभिभावकतद्द्रव्यापगमादिति[8] । एतद्ग्रन्थव्याख्याने च[9] वादीन्द्रेणावादि 'सुवर्णरूपाभिभवाभिधानं च द्रव्यान्तरमिश्रीभावादव्यक्तोपलम्भाभिप्रायमिति' । कन्दलीकारस्त्वनुद्भूतरूपस्पर्शं सुवर्णमित्यवादीत् । तद्व्याख्याने[10]ऽनुद्भूतरूपस्पर्शमभिभूतरूपस्पर्शमित्यर्थ इत्युक्तम् । तदनुसारेण क्वचित्पाठो दृश्यते । ननु सुवर्णं पार्थिवं भवितुमर्हति नैमित्तकद्रवत्वाद् घृतादिवदिति चेन्न । विमतं पार्थिवं न भवति पाकानिवर्त्यरूपत्वात्तोयवदिति सत्प्रतिपक्षसंभवात् । ननु सुवर्णस्य तैजसत्वे किं मानमिति चेदनुमानमेव । तथाहि—विमतं तैजसं पार्थिवाप्याभ्यामन्यत्वे[11] सति रूपवत्वात्प्रदीपवत् । न च हेतोरसिद्धिः[12] शङ्क्या । पार्थिवान्यत्वस्य साधितत्वात् । आप्यान्यत्वं च साध्यते । विमतमाप्यं न भवति असांसिद्धिकद्रवत्वाद् घटादिवत् । सलिलादौ गन्धप्रतीतिवत्सुवर्णे[13] गुरुत्वादिप्रतीतिः संयुक्तसमवायादुपपद्यते । द्वितीयमुदाहरति—**अनुद्भूतेति** । तृतीयमुदाहरति—**अनुद्भूतेति** । चतुर्थमुदा-

---

1 A नोलभ्यतेति; B नोपलभ्यत इति
2 B पटानुपलब्धि
3 B तु ( तू ? ) लपलभ्यते
4 A omits कथं
5 B उक्तं ( क्तः ? )
6 A नभास्वरः
7 B यत्पुटपाकादिना
8 A त्तदद्रव्यापगमादिति
9 B omits च
10 A तद्व्याख्यानं च; B तद्व्याख्याने च
11 A पार्थिवांआप्याभ्यां; B पार्थिवाप्भ्यां
12 B असिद्धस ( श ? ) ङ्क्या
13 B सुवर्णगुरत्वादि

हरति—**उद्भूतेति** । न चेत्थं तेजांसि नानाप्रकाराणि कथं जातानीति वदनीयम् । प्राणिनामुपभोगप्रापकतत्तदृष्टसहकृतकारणबलादायातत्वा-[1] दित्थंतायास्तस्मात्कारणसामर्थ्यस्य पर्यनुयोज्यत्वात्कात्र[2] कथंता । ततश्च यथा यथा कार्यमुपलभ्यते तथा तथा तदनुगुणं कारणमुत्प्रेक्ष-[3] णीयं प्रज्ञावताम् । तस्माद्युक्तं तेजसश्चातुर्विध्यम्[4] ।[5]

प्राप्तावसरं वायुं निरूपयति—**वायुत्वेति** । वायुत्वं नाम[6] रूप-समानाधिकरणत्वरहितस्पर्शवदसमवेतत्वरहितस्पर्शरहितसमवेतत्वरहितम् । तेनाभिमतः संबन्धः समवायलक्षणस्तद्वान्वायुरित्यर्थः । उपकार-प्रकारं दर्शयति—**त्वगिन्द्रियेति**[7] । त्वगिन्द्रियं[8] प्रागेवोक्तम् । प्राण-वायुस्तु शरीराभ्यन्तरचारी रसमलरुधिरादिधातुप्रेरणाहेतुरेक एव मुखनासिकादिसंचरणक्रियाभेदेन प्राणादिसंज्ञापञ्चकं लभते । आदि-शब्देन बाह्यवायुर्गृह्यते । एते प्रभेदा[9] यस्य स तथोक्तः । द्रव्यत्वव्यवस्थापकगुणानाह[10]—**स्पर्शेति** । वायुः स्पर्शवानिति सूत्रेण स्पर्शसिद्धिः अरूपिश्चचाक्षुषाणीति[11] सप्त संख्यादयो गुणाः । तृणे कर्मवायु-संयोगादिति [12]वेगासिद्धिरिति भावः । ननु वायौ किं प्रमाणं प्रत्यक्षमनु-मानं वा । नाद्यः अरूपिद्रव्यत्वात् । अथोच्यते[13] । वायुः प्रत्यक्षो भवितु-मर्हति प्रत्यक्षस्पर्शाधिष्ठानत्वाद् घटवदिति । मैवं भाषिष्ठास्तोयस्थवह्ना-वनैकान्तिकत्वात् । तस्मान्नास्मदादिप्रत्यक्षो वायुः । अनुमानं च । वायुः [14]स्पर्शनगम्यः प्रत्यक्षो न भवति । स्पर्शनागम्यसंख्याद्यधिकरणत्वात् प्रदीपप्रभावदिति । [15]नाप्यनुमानगम्यो वायुर्लिङ्गाभावादित्याशङ्क्यासिद्धो

---

1 A B बलायातत्वात्
2 B अपर्यनुयोज्यत्वान्न चेत्थं कथंता
3 B कारणमपेक्षणीयं प्रेक्षावताम्
4 A तेजश्चातुर्विध्यमित्यर्थः
5 B adds इत्यर्थः
6 B omits नाम
7 A omits त्वगिन्द्रियेति
8 B omits त्वगिन्द्रियम्
9 B भेदा
10 B द्रव्यत्वव्यवस्थाज्ञापकान्
11 A अरूपश्च चाक्षुषाणि
12 A वेग इति भावः; B वेगभाव इति भावः
13 A अत्रोच्यते
14 A स्पर्शनप्रत्यक्षो न भवति
15 B न्या ( ना? ) प्यनुमानगम्यो

हेतुरिति परिहरति—**स चेति**। ननु कीदृशः[1] स्पर्शो वायुमनुमापयति। उष्णः शीतोऽनुष्णाशीतो वा। नाद्यः—उष्णस्पर्शस्य तेजोमात्रनिष्ठत्वात्[2]। न द्वितीयः शीतस्पर्शस्य[3] जलमात्रधर्मत्वात्। न तृतीयः पृथिवीधर्मत्वो-[4]पपत्तेरित्याशङ्क्य स्पर्शस्य[5] यथा वाय्वनुमापकत्वं भवति तथोच्यत इति प्रतिजानीते[6]—**तथाहीति**। प्रतिज्ञातमर्थमाह—**योऽयमिति**। उपलभ्यमानः[7] स्पर्शः किंचिदाश्रितः[8][9] स्पर्शत्वादितरस्पर्शवदिति[10] प्रयोगो द्रष्टव्यः। नन्वेतावता कश्चन गुणी सिद्धः। वायुसिद्धौ किमायातमित्यत[11] आह—**गुणी चेति**। ननूपलभ्यमानस्पर्शस्य[12] पृथिवी भवत्वाश्रय इत्याशङ्क्य योग्यानुपलब्धिबाधितत्वान्नायमाश्रय इत्याह—**पृथिव्या इति**। ननु मास्तु पृथिवी द्रव्यान्तरमाश्रयो भवत्वित्याशङ्क्य[13] द्रव्यत्वेनोपलभ्यमानस्पर्शाधि-[14]करणत्वायोगादाकाशादिपञ्चकमशक्यशङ्कम्। जलानलयोस्तूक्तस्पर्शाधि-[15][16]ष्ठानायोगात् पृथिव्याश्चानुपलम्भपराहतत्वाच्च परिशेषाद्वायुरेवाश्रय[17] इत्याह-**पृथिवीति**। द्रव्यान्तेऽ(न्तरे?)नुष्णाशीतस्पर्शत्वासंभवादित्यर्थः।[18][19] अनुष्णाशीतापाकजस्पर्शवान्रूपासहचरितस्पर्शवान्वायुरिति निष्कर्षः।[20] ननु वायुः किं नित्यः अनित्यो वा। नाद्यः परमाणुस्पर्शस्यातीन्द्रियत्वेनोपलम्भासंभवान्निःप्रमाणकत्वोपपत्तेः। न द्वितीयः। अनन्तावयवत्वाविशेषे स्थूलसूक्ष्मादिविभागानुपपत्तेरित्याशङ्क्याह[21][22]—**स चेति**। तच्छब्देन प्रकृतत्वा-

---

1 B कीदृशस्पर्शो

2 A तेजोमात्रानिष्ठितत्वात्; B तेजोमात्राधिष्ठितत्वात्

3 B सी ( शी? ) तस्पर्श

4 A पृथिवीधर्मतोपपत्तेः

5 A स्पर्श यथा

6 A जानीते

7 B उपलभ्यमानस्पर्शः

8 A स्पर्श क्वचिदाश्रितः

9 B क्वचिदाश्रितः

10 A स्पर्शवदतिप्रयोगो

11 A omits इति

12 B नानुपलभ्यमानस्य

13 A adds आह

14 B उपलभ्यमानस्य

15 B जलानि ( न? ) लयोः

16 A उक्तस्पर्शाधिकरणत्वासंभवात्

17 B शेषात् for परिशेषात्

18 A B द्रव्यान्तरे

19 B स्पर्शासंभवात्

20 B अनुष्णाशीतोऽपाकजस्पर्शवान्

21 A स्थूलसूक्ष्मादिविभ ( भा? ) गानुपपत्तेः

22 B omits आह

द्वाभ्युः परामृश्यते । 'परस्परविरोधे हि न प्रकारान्तरस्थितिः' इति न्यायेन[1] तृतीयप्रकारासंभवसूचनार्थश्चकारः[2] । कुतो द्विविध इत्यत आह—**नित्येति**। क्रमेणोदाहरति—**नित्य इति** ।

एवं नित्यानित्यभेदेन द्विधा भिन्नं पृथिव्यादिचतुष्टयमभिधाय संप्रति तत्रा[3]नित्यस्य भूतचतुष्टयस्य जन्मनाशक्रमं निरूपयितुं प्रतिजानीते[4]—**तत्रेति** । द्विप्रकारेषु पृथिव्यादिष्वित्यर्थः । जातस्यैव नाशो भवति अजातस्य[5] नाशासंभवादित्यभिप्रायेण जन्मनः प्रथममुपादानम् । कार्याणामित्युक्ते त्रयाणामेवोपादानं स्यात् । वसन्ताय कपिञ्जलानालभेतेति बहुवचनस्य[6] त्रित्व एव पर्यवसानात् । अत[7] उक्तं चतुर्णामिति । तावत्युक्ते केषामिति न ज्ञायते तदर्थं पृथिव्यादीनामिति । बाधपरिहारार्थं कार्याणामित्युक्तम् । नित्यानामुत्पत्तिविनाशयोरसंभवात् । द्व्यणुकादिप्रक्रमेणोत्पत्तिः[8] क्रियाविभागादिन्यायेन विनाश इति । यस्तयोरुत्पत्तिविनाशयोः क्रमः स निरूप्यते । यद्यप्येतत् प्रतिप्रकरणं[9] निरूपणीयं तथापि ग्रन्थगौरवभयात्समानन्यायत्वात्तयोरेकत्र निरूपणमित्यर्थः[10] । सर्वकार्यं कारणत्रयजन्यमिति न्यायमनु[11]सरन्द्व्यणुकस्य कारणत्रयं दर्शयति-**द्वयोरित्यादिना** । लब्धवृत्तिकाददृष्टवदात्मसंयोगात्परमाण्वोः क्रिया जायते । तया विभागस्ततः पूर्वसंयोगनाशः । अनन्तरं तौ परमाणू परस्परं संयुज्येते । एकस्यारम्भकत्वं निराकरिष्यति । अतो द्वौ परमाणू समवायिकारणं सम[12]वायिकारणलक्षणलक्षितत्वात् तत्संयोगोऽसमवायि[13]कारणं तल्लक्षण[14]लक्षित[15]त्वात् । अदृष्टादि निमित्तकारणम् । आदि[16]शब्देनेश्वरेच्छादीनां ग्रहणं

---

1 B omits न्यायेन
2 A तृतीयप्रकारसंभव
3 B omits तत्र
4 B omits प्रतिजानीते
5 B अजातस्यैव
6 B इतिवत् यद्बहुवचनस्य
7 A इति
8 A उत्पत्तिक्रियाविभागादि
9 B प्रकरणं for प्रतिप्रकरणम्
10 B निरुप्यत इत्यर्थः
11 B अनुस्मरन्
12 A समवायकारण
13 A समवायकारणं
14 B असमवायिकारणलक्षणलक्षितत्वात्
15 A लक्षतत्वात्
17 A अदृष्टादीत्यादिना; B अदृष्टादि (दि?) शब्देन

तल्लक्षणयोगादिति भावः। एवं द्वाभ्यां परमाणुभ्यां द्व्यणुकस्योत्पत्तौ[1] त्रिभिर्द्व्यणुकैस्त्र्यणुकमारभ्यते इति वदंस्त्र्यणुकस्य[2] कारणत्रयं दर्शयति—तस्येति[3]। त्र्यणुकस्य[4] द्व्यणुकानि समवायिकारणं तत्संयोगोऽसमवायिकारणम्। सर्वत्र द्रव्योत्पत्तौ तदवयवसंयोगोऽसमवायिकारणम्[5]। अदृष्टादि निमित्तकारणं तल्लक्षणसद्भावादित्येतच्छेषं पूर्ववत्। इत्येतस्य व्याख्यानम्। उक्तन्यायमन्यत्राप्यतिदिशति—एवमिति। अवयवक्रियाविभागादिति[6] न्यायेन चतुरणुकमुत्पद्यते[7]। चतुरणुक(कैः?)[8] स्थूलं ततः स्थूलतरं ततः[9] स्थूलतममित्यादिक्रमेण महती पृथिवी महत्यश्चापो महत्तेजो महान्वायुरिति यद्यप्यनिलजलावन्यनलानां[10][11] क्रमेणोत्पत्तिर्वक्तव्या[12] न तु पृथिव्यादिक्रमेण तथापि क्रमस्यात्राविवक्षितत्वान्न[13] दोषः। सृष्टिक्रमस्तु प्रशस्तपादभाष्ये[14] द्रष्टव्यः। रूपादीनामुत्पत्तिप्रकारं दर्शयति—कार्येति। कार्यद्रव्यसमवेतानां रूपादीनां स्वसमवायिकारणं[15] समवायिकारणगतगुणसमवायिकारणत्वमुक्तम्। तत्र युक्तिं वक्ति—कारणेति। एवमुत्पत्तिक्रममभिधाय नाशक्रममभिधत्ते-इत्थमुत्पन्नस्येति। द्व्यणुकादिप्रक्रमेणोत्पन्नस्य घटादेरवयवे कपालादौ नोदनादभिघाताद्वा[16] कर्म जायते। तत्र[17] नोदनं नाम गुरुत्वद्रवत्व[18]वेगप्रयत्नान्[19] व्यस्तान्समस्तान्वापेक्ष्य परस्परविभागः[20] कृतः।

---

1 B द्व्यणुकस्योत्पत्तेः
2 A अणुकस्य
3 A तत इति; B omits तस्य
4 A तस्य अणुकस्य
5 समवायकारणम्
6 B अवयवक्रियाविभागादिन्यायेन
7 B उप ( त्प? ) द्यते
8 A चतुरणुकं; B चतुरणुकैः [ : ] स्थुलं
9 A omits ततः
10 B यद्यपि न ( प्यनि? ) लजलावन्यनलानां
11 A चलानलानां
12 A उत्पात्तिवर्त्तव्या
13 A विवाक्षितत्वात्
14 B प्रशास्तप ( पा? ) दभाष्ये
15 A B omit स्वसमवायिकारणम्
16 A नोदनावभिघाताद्वा
17 A तन्न
18 B omits द्रवत्व
19 B प्रयत्नात् व्यस्तान् ( त्? ) समस्ताद्वापेक्ष्य
20 B परस्परं विभाग [ : ] कृतः

एकस्य कर्मणः कारणं[1] संयोगविशेषः । अभिघातस्तु वेगापेक्षः परस्परविभागकृतः । एकस्य कर्मणः कारणं[2] संयोगविशेषः तेन संयोगविशेषजनितेन कर्मणा द्रव्यारम्भकसंयोगविरोधी विभागो जन्यते । ततश्चासमवायिकारणनाशाद् द्रव्यनाश इति दर्शितम् । समवायिकारणनाशादपि द्रव्यनाशं दर्शयति—**क्वचिदित्यादिना** । तत्र दृष्टान्तमाह—**यथा[3] तन्तुनाश इति** । ननु सर्वत्र महतोऽवयविनः समवायिकारणनाशान्नाशे तद्गतरूपादेर्नाशः । नेत्याह—**अन्यत्र त्वित्यादिना** । अवयवक्रियाविभागादिन्यायेन[4] द्रव्यस्यापि नाशे पुनरग्निसंयोगात्परमाणुषु[5] रूपोत्पत्तौ द्व्यणुकादिक्रमेण[6] कार्यद्रव्ये जाते कारणगुणपूर्वप्रक्रमेण रूपाद्युत्पत्तिरिति पीलुपाकप्रक्रिया । सेयमनुपपन्ना[7] आपाकनिक्षिप्तस्य कुम्भादेरापरमाण्वन्तविनाशः पुनरुद्भवाभ्युपगमेन[8] तदुत्पत्तेः प्राक् छिद्रविनिहितदृष्टेः सविधानस्य[9] तदभावोपलम्भप्रसङ्गात् । तदुपरिवर्तिमूर्तद्रव्यस्याधाराभावेन पतनप्रसङ्गाच्च । तस्मात्पिठरपाक एव श्रेयान् । अस्मिन् पक्षे स एवायमिति प्रत्यभिज्ञोपपद्यते । न च लूनपुनर्जातनखकेशादिष्विव सादृश्यविषयं प्रत्यभिज्ञानमिति वाच्यम् । तद्वदत्र बाधाभावात् । अन्यथा सर्वासां प्रत्यभिज्ञानां सादृश्यविषयत्वे क्षणिकत्वपक्षावलम्बी बौद्धो विजयेतेत्यलमतिप्रसङ्गेन[10] ।

नन्वेतत्सृष्टिप्रलयनिरूपणमनुपपन्नम् । परमाणुषु क्रियाविभागादिन्यायेन तस्य[11] वक्तव्यत्वात्परमाणुसद्भावे प्रमाणाभावाच्चेति शङ्कते—**किं पुनरिति** । प्रमाणाभावोऽसिद्ध इति समाधत्ते—**उच्यत इति** । द्व्यणुकसाधनमन्तरेण[12] परमाणुसाधनं न संभवति द्व्यणुकसाधनमपि त्र्यणुकपक्षीकारेण कर्तव्यम् । पक्षश्च प्रमित एव भवति ।

---

1 B कारणसंयोगविशेषः
2 B कारणसंयोगविशेषः
3 A adds वा
4 B न्यायेनामद्रव्यस्यापि
5 A परमाणुरूपोत्पत्तौ
6 B प्रक्रमेण
7 A अनुपपत्तव्या
8 B पुनरुद्भवाभ्युपगमे
9 A सावधानस्य
10 B विजयी ( ये? ) त
11 A omits तस्य
12 A द्व्यणुकसाधनकम्

अन्यथा हेतोराश्रयासिद्धिप्रसङ्गादित्यभिप्रायेण प्रथमं त्र्यणुकस्य प्रत्यक्षसिद्धतामभिधत्ते[1]—**यदिदमिति**। गवाक्षान्तर्गतसूर्यकिरणजाले यद् द्रव्यमुपलभ्यते इदमिति प्रत्यक्षत्वोक्तिस्तत्[2]कीदृशम्। तत्राह—**सर्वतः सूक्ष्मतममिति**। परिदृश्यमानत्वा[3](ना?)द् द्रव्यजाताद(व?)त्यन्त[4]-सूक्ष्मम्। तत्त्रसरेण्वाख्यं द्रव्यं त्र्यणुकमित्युच्यते। तदुक्तम्—

'**जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम्**' इति।

संप्रति प्रत्यक्षसिद्धं[5] त्र्यणुकं पक्षीकृत्य द्व्यणुकं साधयति—**तदिति**। द्रव्यत्वादित्युच्यमाने गगनादावनैकान्तिकता तत उक्तं—**कार्येति**। तावत्युक्ते शब्दादावनैकान्तिकता। तत उक्तं—**द्रव्यत्वादिति**। न[6] चायमसिद्धो हेतुः। विमतं कार्यं चाक्षुष[7]द्रव्यत्वाद् घटादिवदिति त्र्यणुकस्य कार्यत्वसिद्धिः[8]। ननु यत्(यः) त्र्यणुकारम्भकः[9] स एव परमाणुर्भवतु[10] किं परमाणुं[11] त्र्यणुकं चान्तरा द्व्यणुक-कल्पनयेत्यत आह—**तच्चेति**। यत् त्र्यणुकसमवायिकारणे[12][13](णं?)तद् द्रव्यं कार्यं भवितुमर्हति महत्त्वाधिकरणद्रव्यसमवायिकारणत्वात्पटसमवायि[14]-कारणतन्तुवत्। त्र्यणुकस्य महत्त्वं चाक्षुषद्रव्यत्वादेव सिद्धम्। तदेव हि द्रव्यं चाक्षुषं यन्महत्त्वे सत्युद्भूतरूपवदित्युक्तत्वादित्यर्थः। उपपादित-मर्थमुपसंहरति—**तदेवमिति**। अस्तु प्रस्तुते किमायातं तत्राह—**तदपीति**। द्व्यणुकमपीत्यर्थः। ननु द्व्यणुकसमवायिकारणं किंचन द्रव्यं सिद्धम्।

---

1 B प्रत्यक्षत्वमेवाभिधत्ते

2 B प्रत्यक्षोक्तिः

3 A B परिदृश्यमानत्वाद्

4 A द्रव्यजातावत्यन्तसूक्ष्मं

5 B प्रत्यक्षासिद्धयं

6 A adds द्रव्यत्वात् इत्युच्यमाने गगनादावनैकान्तिकता तत उक्तं कार्येति। तावत्युक्ते शब्दादावनैकान्तिकता। तत उक्तं द्रव्यत्वादिति

7 A चाक्षुक

8 A कार्यत्वसिद्धेः

9 A B यस्त्र्यणुकारम्भकः

10 B परमाणु भवतु

11 B परमाणुत्र्यणुकान्तरा

12 A यः त्र्यणुकसमवायिकारणं

13 B त्र्यणुकसमवायिकारणं द्रव्यं

14 B has तन्वादिवत् for पटसमवायिकारणतन्तुवत्

परमाणुसिद्धो किमायातमत आह—**यस्त्विति**। सक्रियो नित्य[1]: परमाणु-रित्यर्थः। तस्य नित्यत्वं कथमित्यत आह—**स चेति**। स च[2] परमाणुर्नित्यः। अनारब्धत्वादनवयवद्रव्यत्वाद्वा गगनवदित्यर्थः। हेतोर[3]सिद्धिमाशङ्कते—**कार्यद्रव्येति**। परमाणुरारब्धो भवितुमर्हति द्रव्यसम[4]वायिकारणत्वात्तन्त्वादिवदित्यर्थः। अनवस्थालक्षणप्रतिकूलतर्कपराहतमिदमनुमानमित्याह—**अनन्तेत्[5]यादिना**। तत्र[6]

'**मू[7]लक्षयकरीं प्राहुरनवस्थां हि दूषणम्**॥' इति।

सत्त्वान्मूलक्षयहेतुत्वा[8]भावे नेयमनन्तकार्यपरंपरा दोषकरी कार्यपरंपरायाः प्रामाणिकत्वादित्याशङ्क्य तथात्वे मेरुसर्षपयोरनन्तावयवारब्धत्वे समाने समानपरिमाणता प्रसज्येतेति भवत्यनवस्था मूलक्षयकरीत्याह—**तथा चेति**। सा[9]धितमर्थं निगमयति—**तस्मादिति**। यस्मादनवस्थां[10] प्रसज्येत तस्मादियं कार्यपरंपरा क्वचिद्विश्राम्यतीति वक्तव्यम्। तथा च यत्रेयं पर्य[11]वस्थास्यति स एव परमाणुर्नित्यः[12] अनवयवद्रव्यत्वाद्गगनवदिति नित्यः परमाणुः सिद्ध इति भावः। एवं परमाणून्प्रमाणेन प्रसाध्य तेषां मध्ये द्वाभ्यामेवाणुभ्यां द्व्यणुकमारभ्यत इति नियमं साधयति—**द्व्यणुकमिति**। तत्र[13] हेतुमाह—**एकस्येति**। एकस्य परमाणोरारम्भकत्वे सततोत्पत्तिः प्रसज्येत। तस्य नित्यत्वादपेक्षणीयान्तराभावाच्च। उत्पन्नस्य नित्यत्वमपि स्याद्विनाशकारणाभावात्। अवयवसंयोगनाशोऽवयवनाशश्च द्रव्य[14]विनाशे द्वयमेव कारणम्। एकारब्धत्वे तदभावान्नित्यत्वं प्रसज्येत[15]। तस्मादेकस्यारम्भकत्वं न संभवतीति भावः। तर्हि बहवः

1 A नित्यपरमाणुः
2 A omits च
3 A हेतोरिसिद्धि
4 A द्रव्यसमवायकारणत्वाद्
5 A B नेत्यादिना
6 A B ननु
7 A मूलक्षयकरी
8 B भावेन
9 समाधितमर्थं
10 B अनवस्थाप्रसङ्ग
11 A पर्यवसास्यति; B पर्यवस्यति
12 A omits नित्यः
13 A अत्र
14 A द्रव्यनाशे
15 B प्रसज्यते

परमाणवो[1] द्व्यणुकमारभन्तां तत्राह—त्र्यादीति । बहूनामण्वारम्भकत्वमभिधीयते[2] महदारम्भकत्वं वा । नाद्यः । विकल्पासहत्वात् । तथाहि—अवयवि[3]परिमाणमवयवगतमणुत्व[4]मारभते अवयवसंख्या[5] वा । नाद्यो नित्यपरिमाणत्वेनानारम्भकत्वात् । न द्वितीयः अवयवसंख्यायाः[6] कारणकत्वे तस्य बहुत्वसंख्यात्वे[7]नाणुपरिमाणकारणत्वानुपपत्तेः । अस्तु तर्हि महदारम्भकत्वमिति चेन्नैवम् । कार्यद्रव्यस्यैव महदारम्भकत्वनियमात् । तस्माद् द्वाभ्यामेवारभ्यते द्व्यणुकमिति सिद्धमिति[8] । एवं द्वाभ्यामेवाणुभ्यां द्व्यणुकमारभ्यत इति नियमं प्रसाध्य त्रिभिरेव द्व्यणुकैस्त्र्यणुकमारभ्यत इति नियमान्तरं प्रसाधयति—त्र्यणुकं[9] चेति । इमं नियममनभ्युपगच्छता[10] भवता वक्तव्यमेकं द्व्यणुकमारभ्यते[11] द्व्यणुकद्वयं वा । नाद्यः । सततोत्पत्तिप्रसङ्गेन प्रागेव दूषितत्वादिति कथयति—एकस्येति । द्वितीयं दूषयति—द्वाभ्यामिति । द्व्यणुकद्वयमारभमाणमणुमारभते[12] महद्वा[13] । नाद्यः । आरम्भवैफल्यात् । न द्वितीयः कारणाभावादिति भावः । द्वयोरारम्भकपक्षे[14] कार्यमहत्त्वं[15] प्रति कारणाभावं दर्शयन् त्रयाणामारम्भोऽभ्युपगन्तव्य इत्याह—कार्ये हीति[16] । कारणगतबहुत्वं कार्यगतमहत्त्वं प्रति कारणं चेच्चतुर्णामारम्भकत्वमस्तु तत्राह—नेति[17] । कार्यगतमहत्त्वमेव[18] तत्र प्रमाणमित्याशङ्क्याह—त्रिभिरेवेति । बहुत्वं महत्त्वं[19] प्रति कारणं तच्च त्रिष्वेव पर्यवस्यतीति[20] प्रागेवोक्तम् । अतश्चतुरादिकल्पनं निष्प्रमाणकम्[21] । इतःपरमनियम इत्यर्थः ।

---

1 A परमाणकारणमाण
2 A नभिधीयते
3 B अवयवपरिमाणं
4 A अणुत्वामारभते
5 B अवय [ व? ) संख्या
6 B अवय [ व? ] संख्याया [ : ]
7 B बहुतत्वे
8 B adds भावः
9 B अणुका
10 A अनभ्युपगच्छतां
11 A B आरभते
12 A B अण्वारभते
13 A महवा
14 A आरम्भकपक्षस्य B आरम्भपक्षे
15 A कार्यगतमहत्वं
16 A कार्ये वि
17 A निति
18 A कार्यगतं महत्वमेव
19 A महुत्वं
20 A पर्यवसास्यतीति
21 A निःप्रमाणकं

इत्थं पृथिव्यादिभूतचतुष्टयं निरूप्य[1] सांप्रतं पञ्चमं भूतं निरूपयति—**शब्दगुणमिति** । संयोगाजन्यजन्य[2]विशेषगुणसमानाधिकरणविशेषाधिकरणमाकाशमिति लक्षणान्तरं द्रष्टव्यम् । आश्रयस्यैकत्वादाकाशत्वं नाम जातिर्नास्ति । तदुक्तम्—

**' व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।**
**रूपहानिरसंबन्धो जातिबाधकसंग्रहः ॥ '** इति ।

सामान्यगुणानाह—**संख्येति** । अ[3]परं जात्यभावे निमित्तमाह—**एकमिति** । भेदे प्रमाणाभावादिति वक्ष्यति । एकत्वाद्विभुत्वमित्याह—**वि[4]भुत्वमिति** । विभुत्वं सकलमूर्तद्रव्यसंयोगित्वमित्यर्थः । विभुत्वादात्मवन्नित्यमित्याह—**नित्यमिति** । आकाशाधिगमे शब्दो लिङ्गमित्याह—**शब्दलिङ्[5]गकमिति** । ननु वायुः शब्दतामापद्यते[6] इति मतावलम्बनेन शब्दस्य वा[7]यवीयत्वेन कथमाकाशलिङ्गत्वमित्या[8]शङ्कते—**शब्दालिङ्गत्वमिति** । शब्दस्य विशेषगुणत्वे सति त्वगिन्द्रियावेद्यत्वाद्रूपादिवद्वायवीयत्वे सिद्धे परिशेषादाकाशलिङ्गत्वमुपपद्यत इत्यभिप्रायेण परिहारमाह—**परिशेषादिति** । प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गा[9]त्परि[10]शिष्यमाणे संप्रत्ययः परिशेषः । तदुपपादयितुं प्रतिजानीते—**तथाहीति** । शब्दस्य गुणत्वसाधकमनुमा[11]नमारचयति—**शब्द इति** । तावच्छब्दः क्रमार्थः । पश्चादा[12]काशः साध्यत इत्यर्थः । ग्राह्यत्वादित्युक्तेऽनुमानग्राह्ये परमाण्वादौ व्यभिचारः । तदर्थमिन्द्रियेति । तावत्युक्तेऽन्त[13]रिन्द्रियग्राह्ये आत्मनि व्यभिचारः । तदर्थं बाह्येति । तावत्युक्ते योगिबाह्येन्द्रियग्राह्ये परमाण्वादौ व्यभिचारः । तदर्थमस्मदादीति । ताव-

---

1 A B प्रसाध्य
2 A B संयोगजन्यविशेषगुण
3 A अपरजात्यभावे
4 A विभ्विति
5 B शब्दलिङ्गमिति
6 B आपाद्यते
7 B वायावियत्वेन
8 A omits आशङ्कते शब्दालिङ्गत्वमिति
9 B नान्यत्र प्रसङ्गात
10 A प्रसङ्गाच्छिष्यमाणे
11 A मनुमारचयति
12 B आकाशं
13 A आतरेन्द्रियग्राह्ये

न्युक्ते घटादौ व्यभिचारः। तदर्थम्—**एकेति**। रूपत्वादिव्यावृत्त्यर्थं सामान्यवत्वे सतीति। प्रदीपप्रभायां व्यभिचारपरिहारार्थं **तद्व्यतिरिक्ते सतीति** वक्तव्यम्[1]। किमतो यद्येवं तत्राह—**गुणश्चेति**। शब्दः क्वचिदाश्रितो गुणत्वाद्रूपादिवदिति[2][3] भावः। प्रसक्तप्रतिषेधं[4] विदधाति—**न चेति**। अत्रायं प्रयोगः। शब्दः पृथिव्यादिपञ्चकगुणो न भवति। श्रोत्रग्राह्यत्वाच्छब्दत्ववदिति[5] व्यतिरेकव्याप्तिपुरःसरं दृष्टान्तमाह—**यदीति**[6]। पक्षधर्मतामाह—**शब्दस्त्विति**। ततश्च व्याप्तिपक्षधर्मतावल्लिङ्गं साध्यं गमयतीत्यर्थः। दिगादिगुणत्वं शब्दस्य प्रतिषेधयति[7]—**दिक्कालेति**। शब्दो दिक्कालमनोगुणो न भवति विशेषगुणत्वाद्रूपवदित्यन्वयदृष्टान्तः। तद्गतसंयोगादिवदिति[8] व्यतिरेकदृष्टान्तः। ननु किमिदं विशेषगुणत्वं स्वाश्रयव्यवच्छेदकत्वं[9] द्रव्यस्यैव द्रव्यान्तराद्व्यावर्तकत्वं वा। प्रतिनियतेन्द्रियग्राह्यत्वं वा गुणत्वे सति प्रतिनियतेन्द्रियग्राह्यत्वं वा द्रव्यान्तरलक्षणवतस्तद्रहित[10][11]सकलव्यावर्तकत्वं वा। नाद्यः स्वाश्रयस्य गुणादिभ्यो व्यावर्तके द्रव्यत्वादावतिव्याप्तेः। न द्वितीयो मूर्तद्रव्यस्यामूर्तद्रव्याद्व्यावर्तककर्मादावति[12]व्याप्तिः[13]। नापि तृतीयः। प्रभादावतिव्याप्तेः[14]। नापि चतुर्थो द्वीन्द्रियग्राह्ययोर्द्रवत्वस्नेहयोरतीन्द्रियासु[15] धर्माधर्मभावनासु चातिव्याप्तेः[16] प्रभाकुम्भसंयोगादावतिव्याप्तेश्च। नापि पञ्चमः पृथिवीत्वादावतिव्याप्तेः। गुणत्वे सतीति विशेषणे च जीवात्मनः परमात्मनः सकाशाद्व्यावर्तके दुःखद्वेषादावतिव्याप्तेः[17]। तस्माद्विशेषगुणत्वं निर्वक्तुमशक्यमिति चेन्मैवं मंस्थाः। गुणत्व-

---

1 A B तद्व्यतिरिक्तत्वे
2 A adds च
3 A रूपवदिति
4 A प्रसक्तः प्रतिषेधं
5 A शब्दवदिति
6 A B ये हीति
7 A प्रतिषेधाति
8 A तद्वदसंयोगादि
9 A adds वा
10 A द्रव्यावान्तर
11 B तदितर
12 A B व्यावर्तके कर्मादौ
13 A अतिव्याप्तेः
14 A अतिव्याप्तिः
15 A B द्विन्द्रियग्राह्ययोर्द्रवत्व
16 A B चाव्याप्तेः
17 A B अव्याप्तेः

व्याप्यजातिमत्तया नियतैकद्रव्यव्यवच्छेदकत्वं नवानां लक्षणानां मध्ये लक्षणद्वयसमानाधिकरणत्वरहितगुणत्वावान्तरजातिमत्त्वं चेति निरुच्यमानत्वात्। यद्यप्यत्र बहु वक्तव्यमस्ति तथापि विस्तरभयादुपरम्यते। उपपादितं[1] परिशेषमुपसंहरति—**अत इति**। शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितस्तदनाश्रितत्वे सति गुणत्वाद्गन्धवदिति सामान्यव्याप्त्युपजीवनेनान्वयव्यतिरेकी[2] प्रयोक्तव्यः[3]। यत्तच्छब्दौ परित्यज्य विशेषोपादाने[4] केवलव्यतिरेकीति भावः। ननु पृथिव्याद्यष्टद्रव्यातिरिक्तं नवमं द्रव्यं सिद्ध्यतीति[5] चेत्सिद्ध्यतु। आकाशासिद्धौ किमायातमत आह—**स एवेति**। प्रागाकाशमेकमित्यगादि[6] तदिदानीं सोपपत्तिकं कथयति—**स[7] चेति**। ननु तीव्रः शब्दस्तीव्रतरः[8] शब्दस्तीव्रतमः[9] शब्द इति शब्दभेद एव नभोभेदे[10] प्रमाणमित्याशङ्क्य तीव्राद्यभिघातान्वयव्यतिरेकानुविधायिनः शब्दभेदस्य नभोभेदसाधकत्वासंभवादेकत्वमुपपद्यत इत्याह—**एकत्वेनेति**। एकत्वसाधनस्योपयोगमाह—**एकत्वादिति**। तत्र युक्तिमाह—**सामान्यस्येति**। पूर्वोक्ते विभुत्वनित्यत्वे साधयति—**विभुत्वेत्यादिना**।

इत्थं भूतपञ्चकं निरूप्य क्रमप्राप्तं[11] कालं निरूपयति—**काल इति**। विभुत्वे सति दिगसमवेतपरत्वापरत्वासमवायिकारणाधिकरणं[12] काल इति लक्षणं द्रष्टव्यम्। तत्र प्रमाणमाह—**दिग्विपरीतेति**। दिग्विशेषापेक्षया अपरस्मिन्[13]परत्वं परस्मिन्नभिपरत्वं[14] यत्र प्रतीयते तादृशपरत्वापरत्वानुमेय इत्यर्थः। लक्षणप्रमाणाभ्यां सिद्धस्य कालस्य द्रव्यत्वसिद्धये गुणा-

---

1 B omits उपपादितं परिशेषमुपसंहरति
2 B सामान्यव्याप्त्युपजीवनेन
3 A प्रयोगक्तव्यः
4 A विशेषोपादानं
5 A omits इति; B सिद्ध्यत इति चेत्
6 B इत्यगात् तदिदानीं
7 A तच्चेति
8 B तीव्रतरतीव्रतमःशब्दः
9 A शब्दतीव्रतमः
10 A नभोभेदप्रमाण
11 A क्रमप्राप्तकालं
12 A परत्वार (?) समवायिकारणं; B समवायिकारणसमवायिकारणं
13 B अपरश्मि (स्मि ?) न्
14 A omits परस्मिन्नभिपरत्वं; B परस्मिन्नपरत्वं

नाह—**संख्यापरिमाणेति** । द्रव्यत्वव्याप्यजात्यभावे निमित्तमाह—**एक इति** । भेदे प्रमाणाभावान्नैकव्यक्तिकं सामान्यमस्तीति भावः । समानासमानजातीयकारणाभावान्नित्य इति कथयति । सर्वत्रोपलभ्यमानकार्यत्वाद्विभुरित्याह—**विभुरिति**[1] । प्रागुदीरितं परत्वापरत्वानुमेयत्वं ज्ञातुमिच्छन्[2] पृच्छति[3]—**कथमिति**[4] । उत्तरमाह—**उच्यत इति** । परत्वापरत्वयोर्वैपरीत्यं कथमित्याशङ्क्याह—**संनिहित**[5] **इति** । यः स्थविरः संनिकृष्टे[6] देशेऽवतिष्ठते दिगपेक्षया संनिकर्षादपरत्वप्रतीतिविषयीभवितुं योग्य[7]स्तस्मिन् युवानमपेक्ष्य तद्विपरीतं परत्वं प्रतीयते । तथा य एव युवा विप्रकृष्टदेशो[8] परत्वप्रतीतिविषयीभवितुं योग्यस्तस्मिन्स्थविरत्व[9]मपेक्ष्यापरत्वमवसीयत इत्यर्थः । अस्तु प्रस्तुते किमायातमत आह—**तदिदमिति** । कार्यं सत्कारणमनुमापयतीति प्रथमः[10] संबन्धः । विमतं कार्यं सकारणकं कार्यत्वात्संमतवत् । विमतं[11] कार्यं विनाशित्वात्संमतवत्[12] । नन्वनेन किंचित् कारणं सिद्धं कालस्य कथं[13] सिद्धिरित्याशङ्क्य परिशेषादित्यभिप्रायेणाह—**दिगादेरिति** । अयमाशयः । निमित्तमन्तरेण कार्यस्योत्पत्तिर्न[14] संभवतीति केनचिन्निमित्तेन भवितव्यम् । पृथिव्यादिकं तु निमित्तत्वेनाशक्यशङ्कमव्यापकत्वात् । सर्वत्र कार्योपलम्भाद् व्यापकेन निमित्तेन भवितव्यम् । तत्र व्यापकत्वेऽपि दिशस्[15]तन्निमित्तत्वं न संभवति संयोगमात्रोपनायकत्वेन सिद्धत्वात् । आत्मनो गगनस्य च परधर्मोपनायकत्वे[16] काश्मीरकुङ्कुमरागेण[17] कर्णाटकदेशगतसकलपदार्थोप-

---

1 A विभुमित्याह
2 A omits इच्छन्
3 A प्रच्छति
4 A कथयति
5 B संविहितेति
6 A संनिकृष्टदेशे
7 A योग्य तस्मिन् युवानच्छन्पृयेक्ष्य
8 B विप्रकृष्टदेशे स्थितः
9 A स्थविरमपेक्षस्याद्विपरीतं; B स्थाविरमपेक्ष्य
10 A B प्रथमं
11 A किमतं
12 A समतवत्
13 A सिद्धिः कथं
14 A कार्यः स्योत्पत्पत्तिः
15 A दशः
16 B उपनायकत्वेन
17 A कास्मी ( श्मी ? ) रवतिना; B काश्मीरवर्तिना

रञ्जकत्वप्रसङ्गात्[1]। न च काले्ऽप्येष प्रसङ्गः[2]। तस्यासिद्धावाश्रयासिद्धेः सिद्धौ वा तपनपरिस्पन्दमात्रोपनायकत्वासिद्धिरिति। तस्मादन्यस्य निमित्तस्यासंभवाद्यदत्र निमित्तं स काल इत्याह--कालमेवेति। तपनपरिस्पदभूयस्त्ववति स्थविरे परत्वबुद्धिर्जायते। तपन[3]परिस्पन्दाल्पीयस्त्ववति यून्यपरत्वबुद्धिरुत्पद्यते। तथा च तपनपरिस्पन्दोपनायकः पदार्थ इतरेभ्यो भिद्यते तपन[4]परिस्पन्दोपनायकत्वात्। न[5] यदेवं न[6] तदेवं यथा पृथिवीति प्रयोगो द्रष्टव्यः। ननु कालस्यैकत्वे वर्त[7]मानकालोऽतीतकालो भविष्यत्काल इति नानात्वव्यवहारः कथमित्याशङ्क्याह--स चैकोपीऽति। तत्तत्क्रियोपाधितया[8] तत्तद्व्यवहारः कुत्र दृष्ट इत्याशङ्क्य दृष्टान्तं स्पष्टमाचष्टे--पुरुष इवेति। यथा एक एव पुरुषः पचनक्रियायोगात्पाचक इति व्य[9]पदिश्यते लवनक्रियायोगाल्लावक इति पठनक्रियायोगात्पाठक [10]इति तथा का[11]लोऽपीत्यर्थः। नित्यत्वविभुत्वे तु कालस्याकाशवत् साधनीये [12]इत्याह--नित्यत्वेति।

अव[13]सरप्राप्तां दिशं निरूपयति--दिगिति[14]। तपन[15]परिस्पदोन्नायकत्वान्न(न?)धिकरणपरत्वापरत्वासम[16]वायिकारणाधिकरणासमवेता दिगिति लक्षणमवधेयम्। द्रव्यत्वव्याप्यजात्यभावे निमित्तमाह-एकेति। भेदे प्रमाणाभावादित्यर्थः।समा[17]नासमानजातीयकारणाभावान्नित्यत्वमुपपद्यत इति कथयति--नित्येति। सर्वत्रोपल[18]भ्यमानकार्यत्वाद्विभुत्वमित्याह--विभ्वि[19]ति। द्रव्यत्व-

---

1 A सकलपदार्थोपरञ्जनप्रसङ्गः; B पदार्थोपरञ्जनप्रसङ्गात्
2 B omits न च काले्ऽप्येष प्रसङ्गः
3 B तपनपरिस्यन्दल्प (ल्पी?) यस्त्व
4 B तपनपरिस्यन्दोयपन्ना (ना?) यकत्वात्
5 B न यदेवं तदेवभू
6 A omits न तदेवं
7 A वर्तमानः कालः अतीतकालः
8 A तत्तत्क्रियोपाधिवशात्
9 A व्यपदृश्यते
10 A adds च
11 A सर्वत्रोपलभ्यमानतया कालोऽपीत्यर्थः
12 A इत्याशङ्क्याह
13 A अवसरप्राप्तं
14 A omits दिगिति
15 A तपनपरिस्यसमानदोन्नायकत्वा
16 A समवायिकारणाधिकरणविगति लक्षणमवधेयम्
17 A समानाजातियकारणाभावान्नित्यत्व इति कथयति
18 A omits सर्वत्रोपलभ्यमान
19 A विर्भ्वति

सिद्धये गुणानाह—**संख्येति** । किमत्र प्रमाणं तत्राह—**पूर्वेति** । मूर्तं द्रव्य-मवधिं[1] विधाय मूर्तेष्वेव द्रव्येष्विदमस्मात्पूर्वमिदमस्मादपरमिदमस्माद्दक्षिणमि-दमस्मादुत्तरमिति प्रत्यया[2] यतो भवन्ति सा दिगित्यर्थः । ननु पूर्वादिप्रत्य-यानां कार्यत्वात्कारणेन केनचिद्भवितव्यं दिशैव भावितव्यमित्ययं नियमः कुत इत्यत आह—**तेषामिति** । पूर्वोक्तान् प्रत्ययान्प्रति[3] पृथिव्यादिलक्षण-स्यान्यस्य निमित्तस्यासंभवादित्यर्थः[4] । ननु यस्मिन्वस्तुनीदृशः प्रत्ययो जायते तदेव निमित्तं भवतु । किमतिरिक्तदिक्कल्पनयेत्यत[5][6] आह—**पूर्वस्मिन्निति** । एकमेव वस्तु एकस्य पूर्वप्रत्ययविषयं[7] अपरस्यापरप्रत्यय-विषय इत्यसाधारणप्रत्ययोत्पत्तेरसाधारणेन[8] निमित्तेन भवितव्यम् । घट-पटादिवस्तु तु[9] नानापुरुषसाधारणप्रत्ययविषयत्वान्न[10][11] निमित्तम् । तस्मा-त्प्रथमचरमादित्यसंयोगो[12] ह्यत्र निमित्तम् । तत्संयोगोपनायकत्वं पृथिव्यादेर्न संभवति । अविभुत्वात् । विभुत्वेऽपि कालाकाशात्मना[13] परधर्मोपनायकत्वे विजयनगरीस्थितेन[14] जपाकुसुमरक्तिम्ना विरूपाक्ष-स्थितस्य स्फटिकमणेरुपरञ्जनप्रसङ्गः । न च दिक्पक्षेऽप्ययं दोषः । संयोगमात्रोपनायकत्वेन सिद्धत्वात् । तथा चायं प्रयोगः । दिगितरेभ्यो भिद्यते पूर्वापरादिप्रत्ययविषयसंयोगोपनायकत्वात्[15] । न यदेवं न तदेवं यथा पृथिवीति । ननु दिगेकेत्युक्तम् । तथात्वे दिग्भेदनिबन्धनः[16] प्रत्ययभेदः कथमुपपद्यते तत्राह—**स त्विति**[17] । इन्द्रादिभिर्लोकपालैः परिगृहीता ये दिक्प्रदेशास्तेषामादित्यस्य च ये संयोगविशेषास्त एवोपाधयः

---

1 A अवधि विधाय
2 A प्रत्ययतो
3 A omits प्रति
4 A इति भावः
5 B किमिति दिक्कल्पनयेत्यत आह
6 A दिक्कल्पन इत्यत आह
7 A पूर्वप्रत्ययविषयः
8 A इति साधारणप्रत्ययोत्पत्तिरसा-धारणेन
9 B omits तु
10 A प्रत्ययत्वान्न
11 B विषयत्वान्निमित्तं न
12 A B चरमाद्यादित्यसंयोगो
13 A कालाकाशात्मता; B कालाका-शात्मनां
14 A वैजयनारीस्थिते भू
15 B संयोगोपन ( ना ? ) यकत्वात्
16 B दिग्भेदनिबन्धनप्रत्ययभेदः
17 A B सा चेति

तद्वशादेकापि दिक् प्राच्यादिसंज्ञां लभते । आदित्यः प्रथम[1]मस्या-मञ्चतीति प्राची । अ[2]वमञ्चतीति अवाची । प्रत्यगञ्चतीति प्रतीची । उद्-गञ्चतीति उदीचीत्युपाधिनिब[3]न्धनः प्रत्ययभेद इति भावः ।

क्रमप्राप्तमात्मानं निरूपयति—**आत्मत्वेति** । आत्मत्वं नाम सामान्यं तेनाभिमतः संब[4]न्धः समवायलक्षणस्तस्मादात्मेत्यभिज्ञाभि[5]वचने उ[6]पपद्येते इति भावः। आत्मत्वं नाम क्रियासमा[7]नाधिकरणत्वरहितगगनसमवेतव्याप्य-जातिः परममहत्त्वसमानाधिकरणद्रव्यत्वव्याप्यजातिर्वेति लक्षणं द्रष्टव्यम् । [8]नन्वात्मबहुत्वे सिद्धे [9]स्यादेतदेवं सिद्धिः कुत इत्यत आह—**सुखेति** । एकदैव कस्यचित्सुखं कस्यचिद्दुःखमिति सुखादिभेदस्य प्र[10]त्यात्म-मुपलभ्यमानत्वात्प्रतिक्षेत्रं क्षेत्रज्ञभेदः कक्षीकर्तव्य इत्यर्थः । नन्विदं वैलक्षण्यमुपाधिनिबन्धनं भवत्वित्या[11]शङ्क्य अत्रोत्तरमुक्तं मा विष्मार्षी-रित्याह—**स चेति**। गुणव[12]त्त्वं द्रव्यलक्षणं तद्योगादात्मापि द्रव्यं न ज्ञानरू[13]प आत्मेति मनसि निधाय गुणानभिधत्ते—**तस्येति** । संख्यादयः पञ्च सामान्यगुणाः । बुद्ध्यादयो नव विशेषगुणाः इ[14]त्यर्थः । नित्यत्वविभुत्वे अप्याका[15]शवद् द्रष्टव्ये इत्याह—**नित्यत्वेति** ।

प्रधानत्वादात्मानं प्रथमं निरूप्य सांप्रतं मनो निरूपयति—**अण्विति** । अन्तरिन्द्रियं मनः । आत्मतद्धर्ममात्रज्ञानजनकं यदि-न्द्रियं तन्मन इत्यर्थः । असमवेतस[16]मवेतत्वरहितक्रियासमानाधि[17]करणा

---

1 A प्रथमस्या
2 A अवागञ्चतीति; B अवाम ( ग? ) ञ्चतीति
3 A उपाधिनिबन्धनप्रत्ययभेद
4 A संबन्धसमवाय
5 A अभिज्ञाभिवदने
6 A उपपद्यन्त इति भावः
7 B सामानाधिकरणत्व
8 A तत्वात्मबहुत्वे
9 A B स्यादेतदेवं तदेव कुत इत्या-ङ्क्याह
10 B प्रत्यात्मानमु
11 A भवत्वित्याशङ्क्यत्तरमुक्तं
12 A गुणवत्वद्रव्यलक्षणं
13 B ज्ञानरूपमोत्मति
14 A omits इत्यर्थः
15 A आकाशादिवद्
16 A असमवेतवत् रहितक्रिया; B समवेतसमवेतत्वरहित
17 B समानाधिकरणजाति

जातिर्मनस्त्वमिति निरुक्तिरवगन्तव्या । मनसो विभुत्वे दीर्घां सुरूपां [1]रसादियुतां [2]सुमार्दवां [3]सुगन्धिं शष्कुलीं भक्षयतः पुरुषस्य रूपरसगन्धस्पर्शशब्दविषयाण्यनेकानि ज्ञानानि युगपत्प्रसज्येरन् । आत्मेन्द्रियविषयसंबन्धलक्षणसामग्र्याः संभवात् । त[4]स्माद्बाह्येन्द्रियेषु युगपद्वि[5]षयैः संबन्धेष्वपि[6] यत्संनिधानक्रमाज्ज्ञानक्रम उपपद्यते तादृशं सहकारिकारणमङ्गीकरणीयम् । तथा च[7] युगपज्ज्ञानानुत्पत्तिलिङ्गेन मनसोऽणुत्वं सिद्धवत्कृत्वोक्तम्—**अण्विति** । स्वर्गं नरकं वा गच्छतः पुरुषस्य मनस्तत्रा[8]प्यतिवाहिकशरीरसंयुक्तमेव संचरति । अशरीरस्य मनसस्तावद्दूरं गमनायोगात् । गत्वा स्वा[9]श्रयानुरूपेण शरीरान्तरेण संयुज्यत इति शरीरसंयुक्तमेव देशान्तरं गच्छतीत्यभिप्रायेणोक्तं संयोगीति । लक्षणान्तरमाह-**सुखादीति** । अत्रोपलब्धिरपरो[10]क्षंज्ञानं विवक्षितम् । अनवयवद्रव्यत्वान्नित्यमित्याह-[11]**नित्येति** । द्रव्यत्वसिद्धये गुणानाह—**संख्यादीति** । ननु स[12]र्वस्य ज्ञानस्य आत्ममनःसंयोगज[13]न्यत्वात्सर्वज्ञानसाधकं मन इति व[14]क्तव्ये सुखादिज्ञानसाधनमिति कथमुच्यते तत्राह-[15]**यत्संयोगेनेति** । बहिरस्वतन्त्रं मन इति न्यायेन मनसः [16]स्वातन्त्र्येण रूपादिज्ञानसाधनत्वं नास्तीत्यर्थः । व्यासङ्गदशायां विषयान्तरोपलम्भासंभवान्मनःसंयुक्तानि चक्षुरादीन्द्रियाणि ज्ञानजनकानि तस्मात्सर्वो[17]पलब्धिसाधनत्वं मनसो युज्यत इत्याह—**अत एवेति** । अन्वयव्यतिरेकाभ्यां मनसः कारणत्वमवसीयत इत्यर्थः । किमत्र प्रत्यक्षं प्रमाणमनुमानं वा । नाद्यो रूपरहित-

---

1 A B omit रसादियुतां
2 B समर्द्द वां
3 A सुगन्धिशष्कुली
4 A तस्माबाह्येन्द्रियेषु
5 B विषयसंभ ( ? ) बद्धेषु
6 A adds च
7 B omits च
8 B तदप्यातिवाहिक
9 B स्वाशयानुरूपेण
10 A परोक्षज्ञानं; B अपरोक्ष्यज्ञानं
11 A नित्यामिति; B नित्य इति
12 B सर्वस्य
13 B संयोगजत्वात
14 A व्यक्ते
15 A omits यत्
16 A स्वतन्त्र्येणारूपादि
17 B उपलब्धिसाधनं

द्रव्यत्वान्न द्वितीयो लिङ्गाभावादित्याशङ्क्याद्यमनङ्गीकृत्य द्वितीयप्रश्नपूर्वकं प्रत्याह—तच्चेति। तदुपपादयितुं प्रतिजानीते—तथाहीति। यस्मिन्नसति यज्ज्ञायते तदतिरिक्तकारणसाध्यं यथान्धस्य जायमानं द्रव्यज्ञानं चक्षुर्व्यतिरिक्तस्पर्शनसाध्यं तद्वदत्रापीत्यर्थः। ननु यत्किंचित्कारणे सिद्धं मनःसिद्धिः कथमित्यत आह—यच्चेति। मनसो विभुत्वं प्रागेव पराकृतं मध्यमपरिमाणत्वे सावयवत्वेनानित्यत्वप्रसङ्गः। न चानित्यत्वं युज्यते स्पर्शरहितद्रव्यत्वेनाकाशादिवदनित्यत्वसावयवत्वयोरसंभवात्। नित्यत्वे प्रमाणस्य प्रागेवोक्तत्वाच्चेति परिशेषादणुत्वमेव शिष्यत इत्याह—तच्चेति।

द्रव्यपदार्थं निरूप्य गुणपदार्थान्निरूपयिष्यन्वृत्तवर्तिष्यमाणयोः संगतिं कीर्तयति—द्रव्याणीति। द्रव्यनिरूपणानन्तरं जात्युपाधौ तन्मात्रसमवेतगुणानिरूपणं युज्यत इत्यर्थः। गुणस्य लक्षणमाचष्टे—सामान्यवानित्यादिना। यथाक्रमं पदत्रयेण सामान्यादित्रितयद्रव्यकर्मव्यवच्छेदः क्रियते। गुणत्वं नाम समवायिकारणासमवायिकारणसमवेतसत्तान्यूनव्याप्यव्यापकत्वरहितव्याप्यजातिः समवेततासमवेतद्विसमवेतसमवेतसत्तासाक्षाद्व्याप्यजातिर्वा। गुणस्याश्रयमाह—स चेति। गुणपदार्थं विभजते—रूपरसेत्यादिना। चतुर्विंशत्या पुरुषैरसंकीर्णतयोच्चार्यमाणसाधर्म्येण गुणेषु चतुर्विंशतिसंख्याव्यवहार औपचारिकः।

---

1 A इत्याशङ्क्याद्यम्
2 B तथाहि
3 A यज्ज्ञायते
4 A B तत्तदतिरिक्त
5 B करणसाध्यं
6 B यत्किंचित्करणं सिद्धं
7 A कारणं सिद्धं
8 A तच्चेति
9 B अणुत्वमेवावशिष्यते
10 A इत्यर्थः
11 B गुणपदार्थं
12 B वृत्तवृत्ति ( वर्ति ? ) ष्यमाणयो [:]
13 A दर्शयति
14 B omits द्रव्याणीति
15 B द्रव्यपदार्थप्ररूपणानन्तरं
16 B omits जात्युपाधौ
17 A असमवायकारणे
18 B व्याप्यव्याप्यत्वरहित
19 B चतुर्विंशत्याप्तपुरुषैः
20 B विचार्यमाणसाधर्म्येण
21 A उपचारिकः

बाह्येन्द्रियद्वयप्रत्यक्षाणां त्रयाणां[1] द्रव्याणां विशेषगुणवत्त्वाद्रूपस्य[2] प्रथममुद्देशस्तदनु तथाभूतयोर्द्वयोर्विशेषगुणत्वाद्रसस्य[3] अनन्तरमेकस्याः पृथिव्या विशेषगुणत्वाद् गन्धस्य नित्यानित्योभयस्वभावस्य[4] द्रव्यस्य विशेषगुणस्य स्पर्शस्य समनन्तरं सकलद्रव्यसाधारणगुणस्य संख्यादिपञ्चकस्य तत्रापि नित्यानित्योभयस्वभावत्वात् संख्यादित्रयस्य प्राथम्यं तत्रापि कारणत्वात् संख्यायाः प्राचीनत्वं चतुर्विधस्यापि[5] परिमाणस्य संख्याकार्यत्वात्तदानन्तर्यं पश्चात्पृथक्त्वस्य संयोगपूर्वकत्वाद्विभागस्य संयोगानन्तर्यं विभागस्य[6] मूर्तनिष्ठक्रियाजन्यसंयोगविभागनिरूपणानन्तरं[7] सकलमूर्तगुणयोः[8] परत्वापरत्वयोस्तत्रापि परत्वसापेक्षत्वादपरत्वस्य तदुत्तरं[9] तदनन्तरं सामान्यगुणस्य गुरुत्वस्य तदनु कर्मकारणस्य द्रव्य(व)त्वस्य[10] पश्चात्सांसिद्धिक[11]द्रवत्ववज्जलविशेषगुणस्य स्नेहस्य तदनन्तरं प्रतिनियतभूतविशेषगुणस्य शब्दस्य पश्चाद्विभुविशेषगुणस्य बुद्ध्यादेस्तत्रापि प्रत्यक्षत्वाद्बुद्ध्यादिषट्कस्य[12] प्राथम्यं तत्रापि सुखादेर्बुद्धिपूर्वकत्वाद्बुद्धेः प्राथम्यं स्वसत्तायां[13] प्रकाशाव्यभिचारित्वात्सुखस्यानुकूलत्वात्प्राथम्यं[14] तदानन्तर्यं दुःखस्य इष्टानिष्टज्ञानपूर्वकत्वात्सुखदुःखयोः तदानन्तर्यमिच्छाद्वेषयोरिच्छाद्वेषपूर्वकत्वात्प्रयत्नस्य तदानन्तर्यं धर्माधर्मपूर्वकत्वादिष्टानिष्टज्ञानयोस्तत्राप्यभ्यर्हितत्वाद्धर्मस्य प्राथम्यं तदानन्तर्यमधर्मस्यान्ते[15] संस्कारस्येत्युद्देशक्रमनियमो द्रष्टव्यः ।

तत्र प्रथमोद्दिष्टस्य रूपस्य लक्षणमाह—**तत्रेति** । तेषु गुणेषु चक्षुषैव यो गृह्यते तद्रूपम् । गुणत्वे सति चक्षुर्मात्रग्राह्यं रूपमित्यर्थः । रूपत्वादि-

---

1 A omits त्रयाणां द्रव्याणां
2 B विशेषगुणत्वात्
3 A विशेषणत्वात
4 B उभयस्वभावद्रव्यस्य
5 B चतुर्विधय (?) स्यापि
6 B omits विभागस्य
7 A मूर्तनष्ट
8 B सकलं
9 A B तदुत्तरत्वं
10 A B द्रवत्वस्य
11 A संसिद्धिक
12 A प्रत्यक्षत्वाद्ध्यादि
13 B स्वसत्तायां प्रकाशायां
14 B अनुकूलत्वाच्च
15 A तदानन्तर्यधर्मस्यान्ते

जातयो रूपादीनां लक्षणानि ज्ञेयानि । रूपत्वं नाम पवनसमवेतसमवेतत्वरहितपावकसमवेत[1]समवेतसामान्यगुणासमवेतगुणत्वसाक्षाद्व्याप्यजातिरिति निरुक्तिरवगन्तव्या । किमयं सामान्यगुणो विशेषगुणो वेति संदिहानं प्रत्याह—**विशेषगुण इति** । विशेषगुणत्वं प्रागेव निरुक्तम् । तस्याश्रयमाह—**पृथिव्यादीति** । तस्य भेदमाह—**तच्चेति** । शुक्लादयोऽनेकप्रकारा यस्य तत्तथोक्तम् । ननु केन विशेषगु[2]णविशिष्टं [3]कस्य द्रव्यस्य व्यवच्छेदकं तत्राह—**पाकजं चेति** । पाकज[4]त्वाविशेषणाविशिष्टं रूपं पृथिव्या व्यवच्छेदकमित्यर्थः । तेजसो व्यवच्छेदकत्वं दर्शयति—**शुक्लमिति** । [5]भास्वरत्वं नाम पर[6]प्रकाशत्वम् अपां व्या[7]वर्तकत्वं दर्शयति—**तदेवेति** । शुक्लमभास्वरमपाकजं रूपमपां व्यावर्तकमित्यर्थः ॥

रस[8]स्य लक्षणमाह—**रस इति** । प्रकरणबलाद् गुणत्वे सतीति पदं [9]संबध्यते । अवशिष्टं पूर्ववत् । रसत्वं नाम तेजःसमवेतसमवेतत्वरहितगन्धेतरपृथिवीविशेषगुणसमवेतगुणत्वसाक्षाद्व्याप्यजातिः । र[10]सः कथं पृथिवीं व्यवच्छिनत्तीत्य[11]शङ्कायामाह—**तत्रेति** । मधुराम्ललवण[12]कटुतिक्तकषायभेदात् षट्प्रकारो रसः पाकजश्च पृथिव्या व्यावर्तकः । अपः कथं व्यावर्तयति र[13]स इत्यत आह—**अपस्त्विति** । रसो यथा पार्थिवपरमाणुष्वनित्य एवमाप्यपरमाणुषु किमानित्यो नेत्याह—**नित्येति** । कुत्र नित्यः कु[14]त्र चानित्यस्तत्राह—**प[15]रमाणुष्विति** ।

क्रमप्राप्तं गन्धं लक्षयति—**गन्ध इति** । घ्राणग्राह्यो गुणो गन्ध इत्यर्थः । गन्धत्वं नाम पृथिवी[16]त्वात्यन्ता[17]भावसमानाधिकरणसमवेतसम-

1 A omits समवेत
2 B विशेषेण विशिष्टं
3 A केन विशेषे गुणविशिष्टं
4 B पाकजत्वाविशेषाविशिष्टं
5 B भाश्वरत्वं
6 B परप्रकाशकत्वं
7 B व्यावर्तकं
8 A सस्य लक्षणं
9 B संबध्यते
10 B रसः पृथिवीं कथं व्यवच्छिनत्ति
11 B त्याकाङ्क्षायामाह
12 B तिक्तकटुककषाया
13 B omits रस
14 B कुत्र वा नित्यः
15 B परमाण्विति
16 A पृथिसमानावीत्यात्वं भावाधिकरण
17 B भावाधिकरण

वेतत्वरहितगुणत्वसाक्षाद्व्याप्यजातिः । गन्धस्याश्रयमाह—**पृथिवीति** । गन्धः पृथिव्यामेव वर्तते नान्यत्रेत्यर्थः । तस्य भेदमभिधत्ते—**सुरभिरिति** । ननु यद्ययं गन्धः पृथिवीमात्रवृत्तिरित्यभ्युपगम्यते[1] कथं तर्हि सुरभि सलिलं सुरभिः[2] समीरण इति प्रतीतिरुपपद्यते[3] । तत्राह—**जलादाविति** । जलादिसंयुक्तेषु पुष्पादिषु समवेतो गन्धः संयुक्तसमवायाज्जलादौ प्रतिभातीति भावः ।

स्पर्शस्य लक्षणमाह—**स्पर्श इति** । त्वचि स्थितामिद्रियं[4] त्वागिन्द्रियं तन्मात्रग्राह्यो गुणः स्पर्श इत्यर्थः । स्पर्शत्वं नाम मनःसमवेतसमवेतत्व-रहितपवनसमवेतसमवेतगुणत्वसाक्षाद्व्याप्यजातिः । तस्याश्रयमाह—**पृथिव्यादीति** । तस्य भेदमाह—**स चेति** । कुतस्त्रैविध्यमत[6] आह-**शीतेति** । कः स्पर्शः कस्मिन् वर्तत इत्याकाङ्क्षायां[7] विविच्य कथयति—**शीत इत्यादिना** । पाकजः पृथिव्यामपाकजो वायावित्यर्थः[8] । नन्वेतेषु चतुर्षु रूपादिषु किं प्रत्यक्षं प्रमाणमनुमानं वा । नाद्यस्तद्योग्यताया[9] अभावत्वात्[10] । न द्वितीयो लिङ्गाभावादित्याशङ्क्य महत्त्वैकार्थसमवेतेषु[11] रूपादिषूद्भूतेषु प्रत्यक्षं प्रमाणमन्यत्रानुमानं[12] भविष्यतीत्यभिप्रायेणाह—**एते चेति** ।

संख्याया[13] लक्षणमाह—**संख्येति** । प्रत्यक्षद्रव्यसमवेतायाः[14] संख्यायाः प्रत्यक्षसिद्धत्वेऽपि संख्यानिराकरणवादिनं **भूषणकारं** प्रति व्यवहारलिङ्गकमनुमानमुपन्यस्यति—**एकादिव्यवहारेति** । एक इत्यादिव्यवहारेऽभिवदनव्यवहारे[15] व्यवह्रियमाणः एकादिशब्दः संख्येयपरः

---

1 A अभ्युपगम्येत
2 A B सुरभिसमीरण
3 A उपपद्येत
4 A स्थितिमिन्द्रियं
5 A पराहित
6 A B त्रैविध्यमित्यत आह
7 A इत्याकाङ्क्षाया
8 A वायाविति भागः; B वायाविति-विभागः
9 B नाद्याः (द्यः)
10 A अभावात्
11 A महत्त्वेकार्थ
12 B अनुमानं वा
13 A omits संख्याया लक्षणमाह—संख्येति
14 A प्रत्यक्षसमवेतायाः
15 B एक इत्यादिव्यवहारः एकादिव्यवहारः

आ[1] दशतः संख्येये वर्ततेऽतः परं संख्याने संख्येये चेति व्याकरण-पारीणोक्तेर्व्यवहरणं व्यवहारः। अभिज्ञा व्यवह्रियते येनेति[2] व्यवहारोऽभिवदनम्। व्यवहारो व्यवह्रियमाणपदार्थज्ञानपूर्वको व्यवहारत्वात् संमतवदिति प्रयोगो द्रष्टव्यः[3]। तथा चैको द्वौ बहव इति विशिष्टव्यवहारस्य विशेषणज्ञानपूर्वकत्वादेकत्वादिसंख्याख्यं विशेषणं कक्षीकर्तव्यमित्यभिप्रायः। संख्यात्वं नाम प्रागभावप्रतियोगित्वरहितस[4]मवेतविश्वान्यान्योभाव-समानाधिकरणसमवेतपरिमाणास[5]मवायिकारणसमवेतगुणत्वावान्तरजातिः। संख्यायाः स्वरूपमाह—**एकत्वादीति** एकत्वमादिर्यस्याः[6] सा एकत्वादिः। परार्ध[7] पर्यन्तो यस्याः सा परार्धपर्यन्ता[8] चेति। समानाधिकरणसमासः। परार्धात्[9]परतः संख्याव्यवहारो नास्तीत्यागमादवगन्तव्यम्। संख्या द्विविधा एकाश्रयानेकाश्रया च। तथै(त्रै?)[10]काश्रयायाः संख्याया[11] भेदं कथयति—**तत्रेति**। कीदृशं नित्यमित्याकाङ्क्षायामाह—**नित्येति**। तत्रानित्य-मे[12]कत्वं कारणगुणपूर्वकमित्याह—**स्वाश्रयेति**। स्वशब्देनैकत्वं विवक्ष्यते। तस्याश्रयः समवायिका[13]रणम्। तस्य य[14]त्समवायिकारणं तद्ग[15]तैकत्वं जन्य-मित्यर्थः। एकाश्रयां संख्यां व्याख्याय द्व्याश्रयां संख्यां व्याख्याति—**द्वित्वं चेति**। चस्त्वर्थे। वस्तुतः संक्षेपेण द्वित्वोत्पत्तिप्रक्रियां दर्शयति—**तत्रेति**। स[16]मानजातीयेष्वसमानजातीयेषु[17] पिण्डेषु मध्ये द्वयो [:] पिण्ड[18]यो-

---

1 A आदसतः संख्या; B आदर्शतः
2 B येनेत्याभिवदनव्यवहारोऽभिवदन-व्यवहारो वा
3 B द्रष्टव्यम्
4 A B समवेति (त?)
5 A समवायकारण
6 B यस्या असौ सा
7 B परार्ध्य
8 B परार्ध्यपर्यन्ता
9 B परार्ध्यात्पत (?) रतः
10 A तत्रैकाश्रयाः
11 A संख्याभेदं कः and omits कथयति तत्रेति इत्यारभ्य तस्याश्रयः इति पर्यन्तम्
12 B नित्यमेकत्वकारणगुणपूर्वमित्याह
13 A समवायकारणं
14 A यत्समवायकारणं
15 A B तद्गतैकत्वजन्यमित्यर्थः
16 A समानजातीषु
17 A adds वा
18 A omits पिण्डयोः

रित्यर्थः । सर्वस्य कार्यस्य कारणत्रयजन्यत्वनियमाद् द्वित्वस्यापि कारणत्रयं विविच्य कथयति—तत्रेति । तदुक्तमभियुक्तैः—

' आदाविन्द्रियसंनिकर्षघटनादेकत्वसामान्यधी—
रेकत्वोभयगोचरा मतिरिति द्वित्वं ततो जायते ।
द्वित्वस्य प्रमितिस्ततोऽनुपरतो द्वित्वप्रमानन्तरं
द्वे द्रव्ये इति धीरियं निगदिता द्वित्वोदयप्रक्रिया ' ।। इति ।

ननूत्पन्नं द्वित्वं कदाचिन्नश्यतीत्यत आह—अपेक्ष्येति । अपेक्षाबुद्धिनाशे द्वित्वस्याप्यनुपलम्भादिति भावः । उक्तं न्यायमन्यत्रापि संचारयति—एवमिति ।

क्रमप्राप्तं परिमाणं निरूपयति—परिमाणमिति । अत्रापि व्यवहारशब्दः पूर्ववद् भावकरणसाधनो द्विविधव्यवहारवचनो विप्रतिपन्नं प्रति कार्यलिङ्गकानुमानसूचकः । प्रयोगस्तु प्रागेव दर्शितः । हस्तवितस्त्यादिमानव्यवहारासाधारणकारणगुणः परिमाणमिति लक्षणं बोद्धव्यम् । परिमाणत्वं नाम विश्वान्योन्याभावसमानाधिकरणसमवेतत्वरहितकालसमवेतसमवेतगुणत्वसाक्षाद्व्याप्यजातिः । लक्षणप्रमाणसिद्धस्य परिमाणस्य भेदमभिधत्ते—तच्चेति । चातुर्विध्यमेव दर्शयति—अण्विति । भावप्रधानोऽयं निर्देशः । अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वमित्युक्तं भवति । चतुर्विधमपि परिमाणं नित्यानित्यभेदेन द्विविधम् । तत्रानित्यस्य कारणभेदं व्युत्पादयति—तत्रेति । तत्र संख्याया असमवायिकारणत्वं दर्शयति—यथेति । न तावद् द्व्यणुकपरिमाणं प्रति परमाणुपरिमाणस्यारम्भकत्वं संभवति नित्यपरिमाणत्वादाकाशगतमहत्त्ववत् ।

1 A जन्यत्वयानियमात्
2 A द्वितीयस्यापि
3 A विवच्य
4 A तदुक्तमभियुक्तैः
5 A मतिरतो
6 A द्वित्व अप्रमिति
7 B कदा विनश्यतीत्यत आह
8 A अपेक्षेति
9 A व्यवहारः शब्दः
10 B प्रदर्शितः
11 A कारणभेदं
12 B तथेति
13 A परमाणस्य

असंभवादेव प्रचयस्यारम्भकत्वं पराकृतम्[1]। तस्माद् द्वाभ्यां परमाणुभ्यामारभ्यमाणे द्व्यणुके परमाणुद्वित्वमेव परिमाणमारभत इत्येवं द्रष्टव्यम्। द्वित्वं चापेक्षाबुद्धिमन्तरेण[2] नोत्पद्यते सा चार्वाचीनानां न संभवति। परमाणुद्वयगतैकत्वोभयगोचरत्वात्तस्याः[3]। ततश्चेश्वरापेक्षाबुद्धिजन्यं[4] द्वित्वं कारणैकार्थप्रत्यासन्नत्वेनासमवायिकारणमित्यर्थः[5]। योनिशब्दस्य लोकप्रसिद्ध्यनुरोधेनार्थान्तरप्रत्यायकत्वं शङ्क्येत[6]। तामाशङ्कां व्यावर्तयितुमुक्तं **संख्याकारणमिति**[7]। त्र्यणुकपरिमाणं प्रत्यपि संख्यैव कारणमित्याह—**त्र्यणुकेति**। स्वशब्देन त्र्यणुकपरिमाणं विवक्ष्यते। तस्याश्रयस्त्र्यणुकं तस्य समावायिकारणं द्व्यणुकादि तद्गतं बहुत्वं संख्याकारणम्[8]। तत्परिमाणं कारणगतमहत्त्वप्रचययोरसंभवात्तद्गतपरिमाणस्य कारणत्वे महत्वानुपपत्तेः। एतदुक्तं भवति—यत्राणुत्वमहत्त्वे उत्पद्येते तद्गते ह्रस्वत्वदीर्घत्वे अपि संख्याकारणके इति। न च कारणभेदाभावे कार्यभेदः कथमिति वचनीयम्। तत्तत्प्रागभावस्या[9]दृष्टविशेषस्य च सहकारिणो भेदात्[10]। यथाग्निसंयोगस्यैकत्वेऽपि तत्तत्प्रागभावादिसहकारिभेदाद्रूपरसादिकार्यभेदस्तद्वदिति संतोष्टव्यम्। परिमाणस्य परिमाणं प्रति समवायिकारणत्वं प्रतिपादयति[11]—**चतुरणुकादीति**। प्रचयस्यापि कारणत्वं दर्शयति—**तूलेति**। प्रशिथिलसंयोगः[12] प्रचयः स च द्वितूलपिण्डारब्धस्तूलपिण्डे[13][14] महत्त्वं दीर्घत्वं च जनयति। न च तत्र महत्त्वमेव कारणमिति शङ्कनीयम्। समानमहत्त्वावयवारब्धेऽपि प्रचयापेक्षया महत्त्वातिशयस्य[15] दर्शनात्। नापि बहुत्वम्। द्वाभ्यामारब्धत्वेन तस्यासंभवात्। तस्मात्तूल-[16]

---

1 A प्रचयस्यारम्भपराकृतं
2 A अन्तरेणोत्पद्यते
3 A B गतैकत्वद्वयगोचरत्वात्
4 B ईश्वरापेक्षया
5 A असमवायकारणं
6 A शङ्क्यते B शङ्क्येत
7 B संख्याकारणमित्याह
8 B तद्गतबहुत्वसंख्याकारणजन्यं
9 A तत्प्राग्भावस्य
10 A सहकारभेदात्
11 B व्युत्पादयति
12 B प्रसि ( शि? ) थिल
13 B omits द्वि
14 A पिण्डारब्धतूलपिण्डे
15 B महत्त्वातिशयदर्शनात्
16 A तूलपिण्डः समवायकारणं

पिण्डसमवायिकारणं[1] पिण्डद्वयनिष्ठः प्रचयो महत्त्वं प्रत्यसमवायिकारणं पिण्डद्वयावयवानां[2] संयोगो निमित्तकारणमिति विवेकः । अनित्यं परिमाणं सप्रपञ्चं निरूप्येदानीं नित्यं परिमाणं निरूपयति—**परमाण्विति** । नित्यगते[3] ह्रस्वत्वदीर्घत्वे अपि नित्ये[4] द्रष्टव्ये ।

क्रमप्राप्तं पृथक्त्वं[5] निरूपयति—**पृथक्त्वमिति** । व्याख्यानं[6] पूर्ववत् । इदमस्मात्पृथगन्यदित्यादिव्यवहारासाधारणकारणं पृथक्त्वम् । नन्वन्योन्याभावनिबन्धनोऽयं व्यवहार इति चेन्मैवम् । नञर्थानुल्लिखितधीविषयत्वेन पृथक्त्वस्या[7]भावरूपत्वानुपपत्तेः पृथक्त्वं[8] सामान्यं नाम विश्वान्योन्याभावसमानाधिकरणसमवायिकारणसमवेत[9]समवेतत्वरहितान्योन्याभावविरोधित्वा[10]समवेतगुणत्व[11]साक्षाद्व्याप्य[12]जातिः ।

सामान्यगुणत्वेन प्राप्तं संख्यादित्रयं व्याख्याय संप्रति संयोगं व्याचष्टे—**संयोग इति** । इदमनेन संयुक्तमिति योऽयं द्विविधो व्यवहारस्तस्यासाधारणकारणं[13] संयोगः । संयोगत्वं नाम समवायिकारणा[14]समवायिकारणसमवेतप्रध्वंसप्रतियोगित्वरहितसमवेत[15]समवेतत्वरहितम्[16] । रूपादिवदेकद्रव्यत्वशङ्कां[17] व्युदस्यति—**द्व्याश्रयेति**[18] । व्याप्यवृत्तित्वभ्रमं वारयति[19]—**अव्याप्येति** । अव्याप्यवृत्तित्वं नाम स्वात्यन्ताभावसमाना[20]धिकरणत्वम् । तस्य भेदमाह—**स चेति** । द्वयोः संयोगिनोर्मध्येऽन्यतरगतकर्मणो[21] जातोऽन्यतरकर्मजः, उभयसंयोगिगताभ्यां कर्मभ्यां

---

1 B समवायिकारणपिण्डद्वयनिष्ठः
2 B पिण्डिद्वयावयवानां
3 A नित्यं गते
4 A इति द्रष्टव्यम् B नित्ये इति द्रष्टव्ये नित्ये
5 A पृथक्
6 A व्याख्यानपूर्ववत्
7 A पृथकस्य
8 A पृथक् सामान्यं
9 B omits समवेत
10 B विरोधित्वरहित
11 A गुणत्वम्
12 A omits साक्षाद्व्याप्यजातिः। सामान्यगुणत्वेन
13 B तस्यासाधारणं कारणं
14 A समवायकारणा
15 B omits समवेत
16 A रहितरूपादिवदेक
17 A शङ्का व्युदस्यति
18 A द्व्याश्रय इति
19 B निवारयति
20 A स्वात्यन्ताभावासामानाधिकरणत्वं
21 B अन्तरगतकर्मणा

जात उभयकर्मजः[1], संयोगाज्जातः संयोगजः इत्यर्थः। तदेतत्त्रयं[2] क्रमेणोदाहरति—**तत्रेत्यादिना कायतरुसंयोग** इत्यन्तेन। ग्रन्थार्थस्तु[3] स्पष्टः[4]।

संयोगविरोधित्वेन[5] प्रसक्तं विभागं विभजते—**विभाग इति**। शेषं पूर्ववत्। विभागत्वं नाम समवायिकारणासमवायिकारणसमवेतत्वरहितसमवेतसमवेत[6]शब्दासमवायिकारणसमवेतम्।

संयोगघातकविभागं[7] निरूप्य संयोगकार्यत्वेन प्राप्तयोः परत्वापरत्वयोः परस्परापेक्षया निरूपणीयत्वेन प्रतिपत्तिः[8]। लाघवायैकत्वप्रकारेण ते निरूपयति—**परत्वेति**[9]। शेषं पूर्ववत्। परत्वसामान्यं नाम विभुसमवेतसमवेतत्वराहितवेगापरत्वासमवेतमनःसमवेतसमवेतम्। एतदेव परत्वपदं परित्यज्यापरत्वपदयोगे अपरत्वसामान्यलक्षणं परिज्ञातव्यम्। परत्वापरत्वे विभजते—**ते त्विति**[10]। संयोगविभागवत्त्रैविध्यं नास्ति किं तु द्वैविध्यमेवेति सूचनार्थस्तुशब्दः[11]। द्वैविध्यमेव दर्शयति—**दिक्कृतेति**। दिक्पिण्डसंयोगकृते दिक्कृते कालपिण्डसंयोगकृते कालकृते इत्यर्थः। श्रोतॄणां व्यासङ्गनिवृत्तये[12] दिक्कृतयोः परत्वापरत्वयोरुत्पत्तिं व्युत्पादयितुं प्रतिजानीते—**तत्रेति**। सर्वस्य कार्यस्य कारणत्रयजन्यत्वनियमात्कारणत्रयं दर्शयति—**एकस्यामिति**। भिन्नदिगवस्थयोः[13] पिण्डयोः परापरप्रत्ययौ नोत्पद्येते इति कृत्वोक्तं[14]—**एकस्यां दिशीति**। प्राच्यां प्रतीच्यां व्यवस्थितयोः पिण्डयोर्मध्ये यस्मिन्पिण्डे संनिकृष्टबुद्धिरुत्पद्यते तत्रापरत्वमुपपद्यते। तत्र पिण्डः समवायिकारणं दिक्पिण्ड[15]संयोगो-

1 A उभयकर्मजसंयोगाज्जातः
2 B तदेतत्त्रितयं
3 A ग्रन्थार्थस्तुष्टः
4 B विस्पष्टः
5 B संयोगविरोधित्वात्प्राप्तं
6 B omits समवेत
7 A B संयोगघातकं
8 B प्रतिपत्तिलाघवायैकप्रकरणगते निरूपयति
9 A लाघवायैकप्रकरेण गति निरूपयति
10 A तत्त्विति
11 B सूचनार्थं तुशब्दः
12 A व्यासं निवृत्तये
13 A B भिन्नदिगवस्थितयोः
14 A कृत्वेति
15 B दिग्पिण्ड

ऽसमवायकारणमपेक्षाबुद्धिर्निमित्तकारणम् । एवं विप्रकृष्टबुद्धिर्यत्रोत्पद्यते तत्र परत्वमुपपद्यते । सामान्याभिप्रायेणेदमिति नपुंसकनिर्देशः ।

संनिकर्षविप्रकर्षौ निर्वक्ति—**संनिकर्ष इति** । दिक्कृते परत्वापरत्वे निरूप्य कालकृते निरूपयितुमुपक्रमते—**कालेति** । पूर्वत्र नियमोऽस्ति अत्र स नास्तीत्याह—**अनियतेति** । द्रष्टृनियमोऽपि नास्तीति द्रष्टव्यम् । अवशिष्टं स्पष्टम् । विनाशस्तु सप्तधावगन्तव्यः । तदुक्तम्—

**‘ अपेक्षाबुद्धिसंयोगाद् द्रव्यनाशः (शात्?) पृथक्पृथक् ।**
**द्वाभ्यां द्वाभ्यां च सर्वेभ्यो विनाशः सप्तधा मतः ॥ ’** इति ।

क्रमप्राप्तं गुरुत्वं निरूपयति—**गुरुत्वमिति** । गुरुत्वं सामान्यं नाम पतनासमवायिकारणसमवेतगुणत्वसाक्षाद्व्याप्यजातिः । विमतं पतनं स्वाश्रयसमवेतासमवायिकारणकं गमनत्वात्स्पन्दनवदिति प्रयोगो द्रष्टव्यः । तस्याश्रयमाह—**पृथिवीति** । गुरुत्वस्य पतनं प्रत्यसमवायिकारणत्वे सूत्रकारसंवादमाह—**यथोक्तमिति** ।

द्रवत्वं निरूपयति—**द्रवत्वमिति** । द्रवत्वसामान्यं नाम पवनसमवेतत्वरहितपावकसमवेतसमवेतसामान्यगुणसमवेतगुणत्वसाक्षाद्व्याप्यजातिः । द्वितीयादिपतनस्य स्यन्दनस्य च वेगहेतुत्वादुभयत्र **आद्येति** विशेषणीयम् । तस्य द्रवत्वाश्रयमाह—**भूतेज इति** । द्रवत्वं द्विविधं नैमित्तिकं सांसिद्धिकं चेति । तत्र नैमित्तिकं भूतेजसोर्वर्तत इत्याह—**भूतेजसोरिति** । तदुक्तम्— ‘सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद् द्रवत्वमाद्भिः

---

1 A विकृष्टबुद्धिः
2 A यत्रोत उत्पद्यते तत्र परत्वामुपपद्येत
3 B परत्वमुत्पद्यते
4 A अनियमेति
5 B द्रष्टु नियमोपि
6 A विभागस्तु
7 A अपेक्षाबुद्धिसंयोगद्रव्यनाशात्
8 B द्रव्यनाशात्
9 A B सप्तधा तयोः
10 A B उद्देशक्रमागतं
11 A गुरुत्वसामान्यनाम
12 B आद्यपतना
13 A B सूत्रकारसंवादं दर्शयति
14 B पवनसमवेतसमवेतत्वरहित
15 A B द्वितीयादेः पतनस्य
16 A B तस्य द्रवत्वस्याश्रयं
17 A जतु
18 A अग्निसंयोगेन

सामान्यम्[1]। त्रपुसीसलोहरजतसुवर्णानां तैजसा[2] ( ना ? ) मग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम्[3]।' सांसिद्धिकद्रवत्वस्याश्रयमाह—जल इति। द्रव्यान्तरसंयोगानपेक्षं[4] द्रवत्वं जलस्य विशेषगुण इत्यर्थः।

जलगुणद्रवत्वप्रसङ्गेन स्नेहं निरूपयति—स्नेह इति। स्निग्धोऽय-मिति व्यवहारासाधारणकारणं स्नेह इत्यर्थः। स्नेहत्वं नाम पृथिवीसमवेत-समवेतत्वरहितजलसमवेतसमवेतगुणत्वसाक्षाद्व्याप्यजातिः[5]। तस्याश्रयमाह-जलेति। जल एव प्रवर्तते नान्यत्रेत्यर्थः। नैमित्तिकद्रवत्ववदग्निसंयोगजत्वा-शङ्कां[6] वारयति—कारणेति। समवायिकारणसमवायिकारणमात्रगुणा-समवायिकारणकत्वं[7] कारणगुणपूर्वकत्वमित्यर्थः। सत्याश्रये विनाशित्व-शङ्कां निरस्यति—गुरुत्वादिवदिति।

शब्दस्य लक्षणमाह—शब्द इति। श्रोत्रग्राह्यो गुणः[8] शब्दः इत्यर्थः। शब्दत्वं नाम संयोगजन्याजन्यविशेषगुणसमवेताविभुसमवेतसमवेतगुणत्व-[9]साक्षाद्व्याप्यजातिः। सामान्यगुणत्वशङ्कामपनयति—आकाशस्येति[10]। विशिष्यते व्यवच्छिद्यते स्वाश्रयो येन स विशेषः स चासौ गुणश्चेति भावः। श्रोत्रग्राह्यत्वं शब्दस्योक्तं तन्न संगच्छत[11] इति शङ्कते—नन्विति। कात्रानुपपत्तिस्तामाह—यत इति। शब्दश्रोत्रयोः संबन्धो न संभवतीति भिन्नदेशास्थितत्वात्[12]। असंबद्धग्रहणमिन्द्रियाणां प्राप्यकारित्वव्यवस्थापनेन पराकृतमित्यर्थः। भेरीदेशे[13] जातोऽपि शब्दः श्रोत्रपथं प्राप्त एव गृह्यते। अतो नोक्तदोष इति परिहरति[14]—सत्यमिति। अधस्ताज्जायमानः[15] शब्दः

1 A सामान्यमिति
2 B ते ( तै ? ) जसानां
3 A सामान्यमिति
4 B संयोगानपेक्ष्यं
5 A जलसमवेतगुणत्व
6 A अग्निसंयोगशङ्कां; B अग्निसंयोग-त्वशङ्कां
7 B गुणासमवायिकारणं
8 B गुणशब्द इत्यर्थः
9 A संयोगाजन्यजन्य; B संयोगजन्य-जन्याविशेष
10 A आकाशेति
11 A संग ( गं ? ) स्यत; B संगंस्यते
12 A निम्नदेशास्थितत्वात्
13 B भेरीदेशजातोऽपि
14 A परहरति
15 A अधस्ताज्जायमानशब्दः

प्रासादादूर्ध्वदेशस्थितेन पुरुषेण कथमुपलभ्यत इति शङ्कामपाकर्तुमुक्तं **कदम्बेति**। उक्तन्यायमन्यत्र संचारयति—**एवमिति**। ननु यदि[1] भेरीदेशे जातः शब्दो न गृह्यते कथं तर्हि[2] इत्थं व्यवहार इत्याशङ्क्याह—**भेरीति**। शब्दस्याकाशगुणत्वेनाकाशः[3] समवायिकारणमिति स्थितेऽसमवायिनिमित्ते विभजते—**भेरीशब्देति**। आद्यशब्दस्य संयोगविभागयोरन्यतरजन्यत्वे द्वितीयादिशब्दानां शब्दजन्यत्वे सूत्रकारसंमतिमाह[4]—**तथा चेति**। असम-वायिनिमित्तवत्समवायिनो[5] भेदभ्रममपाकरोति[6]— **आद्यादीनामिति**[7]। स्नेहवदक्षणिकत्वशङ्कां[8][9] प्रतिक्षिपति[10]—**कर्मेति**। उत्पत्तिमतः पदार्थस्य विनाशेन भवितव्यं विनाशश्च[11] निर्हेतुको[12] न संभवति। तथा च किमत्र[13] विनाशकारणमित्याह[14]—**तत्रेति**। कार्यपदार्थस्य[15] विनाशेन भवितव्यं विनाशश्चेह निर्हेतुकः। कार्यकारणोभयविरोधित्वं शब्दस्योक्तं **प्रशस्त-पादभाष्ये**[16]। आद्यानामुपान्त्यपर्यन्तानां[17][18] (शब्दानां?) कार्यनाशत्वम्[19]। अन्त्यस्य[20] तु कारणनाश्यत्वमिति कैश्चिद्व्याख्यातं तद्भाष्यमन्यैस्तु प्रथमशब्दश्च: कार्यनाश्यः अन्त्यशब्दः कारणनाश्यो मध्यशब्दः[21] कार्येण कारणेन[22] वा विरुध्यते मध्यवर्तिनां शब्दानां कार्यमात्र-[23]विनाश्यत्वे[स्व?]कारणत्वे (त्वा?)पेक्षया विनाशकत्वेन स्वकार्यमात्रा-[24]

---

1 B omits यदि
2 A तर्हि कथमित्थं
3 A आकाशसमवायकारण
4 A संमतिं प्राह
5 A असमवायनिमित्त
6 A भेदमपाकरोति
7 A अयादीनामिति
8 B स्नेहादिवद्
9 A अक्षणिकत्व
10 A प्रतिक्षिपयाति
11 B विनाशश्चेह
12 A निर्हेतु संभवाति
13 A किमित्र
14 B विनाशकारणं तत्राह
15 A B omit कार्यपदार्थस्य विनाशेन भवितव्यं विनाशश्चेह निर्हेतुकः
16 B प्रशस्तपदभाष्ये
17 B उपान्त्यशब्दपर्यन्तानाम्
18 A adds शब्दानां
19 A कार्यनाश्यत्वं
20 B अन्तस्य तु
21 B मध्यशब्दा (?)
22 A कार्यकारणेन वा
23 A कार्यमात्रनाश्यत्वे कारणत्वेपेक्षया; B कार्यमात्रविनाश्यत्वेऽपि
24 B स्वकारणापेक्षया

पेक्षया विनाश्यत्वेन चोभयथा विरोधसंभवादिति। तत्र प्रथमं पक्षमादायाह-**अन्त्येति**। सुन्दोपसुन्दौ तपःप्रकर्षसंपादितप्रभावावन्यतराविनाश्यावपि परस्परं युद्धेन विनाश्यविनाशकभावमापन्नौ तेन न्यायेनेत्यर्थः। अन्त्यस्योपान्त्यनाशकत्वं न संगच्छत इत्याह—**इदं त्विति**। अत्रोपपत्तिमाह[1]—**उपान्त्येति**[2]। यस्मिन्क्षणे उपान्त्यस्योत्पत्तिस्तस्मिन्क्षणेऽन्त्यस्योत्पद्य[3]मानता[4]। यस्मिन् क्षणे उपान्त्यस्य स्थितिस्तस्मिन् क्षणेऽन्त्यस्योत्पत्तिः। यदोपान्त्यस्य विनाश्यता[5] तदान्त्यस्य स्थितिः। एवं चान्त्यस्य[6] तृतीयक्षणे[7] चासतोपान्त्येन नाशो न संभवति इति भावः[8]। कथं तर्ह्यन्त्यस्य विनाश इत्याशङ्क्योपान्त्यस्य नाशकत्वासंभवात्तन्नाश एवान्त्यस्य[9] नाशक[10] इत्याह—**तस्मादिति**। ननु शब्दस्य नित्यत्वं जैमिनीयैरभ्युपगम्यते तथा च कथमित्थं कथ्यते तत्राह—**विनाशित्वं चेति**। अनुमानं वक्तुं प्रतिजानीते—**तथाहीति**। अनुमानं प्रयुङ्क्ते—**अनित्य[11]मि(इ?)ति**। किमत्र साध्यं तत्राह—**शब्दस्येति**। प्रध्वंसोपलक्षितसत्त्वा[12]योगित्वमनित्यत्वमिति[13] कैश्चिदुक्तं तदव्यापकत्वादलक्षणमिति[14] प्रतिक्षेप्तुं[15] स्वाभिमतलक्षणमाह[16]—**अनित्यत्वमिति**[17]। हेतुगतविशेषणानां[18] व्यावर्त्यानि कीर्तयिष्यन् हेतुस्वरूपमाह—**सामान्यवत्त्वे सतीति**। मीमांसकैर्योगिनो नाङ्गीक्रियन्ते। तन्मतं निराकर्तुमाकाङ्क्षापुरःसरं प्रमाणमाह—**किं पुनरित्यादिना**। सामान्यादौ सामान्यं नास्तीति[19] जातिबाधकसद्भावादित्याशयेनाह—**सामान्यादीति**[20]।

---

1 A B तत्रोपपत्तिमाह
2 B उपान्त्येनेति
3 B अन्यस्य
4 B उत्पत्स (त्स्य?) मानता
5 A विनश्यत्ता; B विनाश्यत्ता
6 A चान्तस्य
7 B तृतीये क्षणे
8 A संमतीति भावः
9 B अन्तस्य
10 A नाश
11 B अनित्य इति
12 B सत्तायोगित्वम्
13 B omits इति
14 A व्यापकत्वालक्षणामिति
15 B इति क्षेप्तुं
16 A स्वाभिमतं
17 A नित्यत्वामिति
18 A व्यावर्त्तिनि; B व्यावृत्त्यानि
19 B omits इति
20 A साष्टमान्यादीनि; B सामान्यादीमि

क्रमप्राप्तां बुद्धिं निरूपयति—**अर्थेति** । बुद्धित्वं नाम प्रयत्नेच्छा-व्यतिरिक्तप्रागभावप्रतियोगित्वरहितविभु[1]विशेषगुणसमवेतगुणत्वसाक्षाद्व्याप्य-जातिः । सुखत्वं नाम प्रध्वंसप्रतियोगित्वरहित[2]समवेतत्वरहितदुःख[3]द्वेष-व्यतिरिक्तप्रत्यक्षात्मगुणसमवेतगुण[4]त्वसाक्षाद्व्याप्यजातिः । एतदेवं[5] दुःख-सुखपदस्थाने सुख(दुःख)पदं प्रक्षे(क्षि)प्य दुःखत्वस्य लक्षणम् । इच्छात्वं नाम प्रध्वंसप्रतियोगित्वरहितविभु[6]विशेषगुणसमवेतप्रध्वंसप्रतियोगिप्रयत्नहेतु-समवेतगुणत्वसाक्षाद्व्याप्यजातिः । द्वेषत्वं नाम नित्यसमवेतत्वरहितातीन्द्रिय[7]त्वाना (न?) धिकरणप्रयत्नकारणसमवेतत्व[8]गुणत्वसाक्षाद्व्याप्यजातिः । प्रयत्नत्वं नाम नित्यविभुविशेषगुणसमवेतानित्यकर्मकारणसमवेतगुणत्व-साक्षाद्व्याप्यजातिः । बुद्ध्यादिषट्के किं प्रमाणमित्याकाङ्क्षायामाह—**बुद्ध्यादय इति** । अवशिष्टं स्पष्टम् ।

क्रमप्राप्तौ धर्माधर्मौ निरूपयति—**धर्माधर्माविति** । सुखस्य साधारण-कारणं धर्मो दुःखस्यासाधारणकारणमधर्म इत्यर्थः । धर्मत्वं नाम सुख-संविज्ञानविनाश्यप्रत्यक्षत्वानधिकरणसमवेतगुणत्वसाक्षाद्व्याप्यजातिः । एवं सुखपदस्थाने दुःखपदप्रक्षेपे अधर्मत्वस्य लक्षणं द्रष्टव्यम् । धर्माधर्मयोः किं प्रमाणमित्याकाङ्क्षायामतीन्द्रियत्वेऽपि अनुमानं क्रमत इत्याह—**तौ चेति** । अनुमानं प्रयुङ्क्ते—**देवदत्तस्येति** । शरीरादिकं विशेषगुणजन्य-मित्युक्ते परमेश्वरविशेषगुणजन्यत्वेन सिद्धसाधनता स्यात्तदर्थं **देवदत्त-स्येति** । व्याघातपरिहाराय पक्षे देवदत्तस्येत्युक्तम् । भोगहेतु[9]त्वादित्युक्त आत्मनि व्यभिचारस्तदर्थं कार्यत्वे सतीति । तथापि यज्ञदत्तभोगसाधने शरीरेन्द्रियादौ व्यभिचारस्तदर्थं **देवदत्तस्येति** । साध्यवैकल्यपरिहाराय

---

1 A विभुविशेषणसमवेत

2 A रहितत्व

3 B दुःखद्वेषादिव्यतिरिक्त

4 A गुणसाक्षाद्व्याप्यजातिः

5 A दुःखपदस्थाने सुखं प्रक्षेप्य;
B एतदेव सुखपदस्थाने दुःखपद-प्रक्षेपे दुःखत्वस्य लक्षणम्

6 A विभुविशेषण

7 B इन्द्रियत्वानधिकरण

8 B समवेतगुणत्वसाक्षाद्व्याप्यजातिः

9 A भोगहेतुत्वादियुक्ते

दृष्टान्ते **देवदत्तेति** । शरीरोत्पत्तेः प्राक् प्रयत्नादीनामसंभवात्प्रयत्नादि-जन्यत्वं शरीरादेरशक्यशङ्कमित्याह—**यश्चेति** ।

क्रमप्राप्तं संस्कारं विभजते—**संस्कार इति** । संस्कारत्वं नाम आत्मविभुविशेषगुणसमवेतसामान्यगुणसमवेतगुणत्वसाक्षाद्व्याप्यजातिः । वेगस्याश्रयमाह—**तत्रेति** । तत्सद्भावे कार्यमेव प्रमाणमित्याह—**कार्येति**[1] । भावनाया[2] आश्रयमाह—**भावनेति** । कारणं प्रमाणं चाह—**अनुभवेति** । ननु संस्कारः कदाचिदेव स्मृतिं जनयति न सर्वदेत्यत्र किं विनिगमकं तत्राह—**स चेति** । उद्बोधस्वरूपमाह— **उद्बोध इति** । के ते सहकारिण-स्तत्राह—**सहकारिणश्चेति** । उक्तेऽर्थे[3] संवादं दर्शयति—**यथोक्तमिति**[4] । स्थितिस्थापकस्याश्रयमाह—**स्थितिस्थापक इति** । स्थितिवत्[5] स्थापयतीति स्थितिस्थापक इति शब्दार्थं हृदि निधायोदाहरणमाह[6]-**अन्यथेति** । बुद्ध्या-दीनामाश्रयस्यानुक्तत्वादिदानीमात्मैवाश्रय इति वक्ति— **एते चेति** ।

गुणपदार्थं सप्रपञ्चं निरूप्य कर्मपदार्थं निरूपयितुकामो वृत्तवर्तिष्य-माणयोः संगतिं दर्शयति[7]—**गुण इति** । गुणनिरूपणानन्तरं कर्मनिरूपण-मुचितमित्यवसरप्राप्तं[8] द्योतयितुमिदानीमित्युक्तम्[9] ।

कर्मस्वरूपं निरूपयति—**चलनेति** । कर्मत्वं नाम गगनसमवेतसमवेतत्वं[10]-रहितसत्तासाक्षाद्व्याप्यजातिः । तस्याश्रयमाह—**गुण इति** । यथा गुणो द्रव्येष्वेव वर्तते नान्येष्वेवं कर्मेत्युपमानार्थः । अन्ययोगव्यवच्छेदार्थो मात्रशब्दः अयोगव्यवच्छेदे न विवक्षितश्चेत्तर्हि केषु द्रव्येषु वर्तत इत्याह[11] —**अविभ्विति**[12] । इयत्तावच्छिन्नपरिमाणयोगित्वं मूर्तत्वमित्यर्थः । मूर्तेषु

1 A कार्ये इति
2 A omits भावनाया आश्रयमाह इत्या-रभ्य उद्बोधस्वरूपमाह इतिपर्यन्तम्
3 B उक्तार्थसंवादं
4 A तथोक्तमिति
5 A स्थिवत्
6 A उदाहरणमाचष्टे
7 B कीर्तयति
8 A अवसरप्राप्तिं
9 A इदानीत्युक्तं
10 B adds मनःसमवेतत्वरहितसत्ता-साक्षाद्व्याप्यजातिः
11 A इति अत आह
12 A अवत्विति

द्रव्येषु वर्तत इत्युक्तं भवति । कर्मणः कार्यमाह—**विभागेति** । कर्म[1] विभजते—**उत्क्षेपणेति** । ननु भ्रमणरेचनस्यन्दनादीनामनेकेषां कर्मणां सत्त्वात्कथं कर्मणः पञ्चप्रकारत्वं तत्राह—**भ्रमणेति** । कर्मपदार्थप्रपञ्चो भाष्ये स्पष्ट इति विस्तरभयादुपरम्यते[2] ।

चतुर्थं पदार्थं निरूपयति[3]—**अनुवृत्तीति**[4] । कथं[5] द्रव्यं सत् गुणाः सन्तः कर्मापि सद्द्रव्यं[6] पृथिवीत्याद्यनुगतव्यवहारकारणं[7] सामान्यमित्यर्थः । तस्याश्रयमाह—**द्रव्यादीति** । तस्य लक्षणमाह—**नित्यमिति** । नित्यमेकमनेक[8]समवेतं सामान्यम् । समवायविशेषपूर्वोत्रिकव्यवच्छेदाय[9] विशेषणानि विभजते[10]—**तच्चेति** । परत्वे युक्तिमाह—**बह्विति**[11] । अत्रत्यो विषयशब्दः[12] आश्रयवचनः । द्रव्यत्वाद्यपेक्षया बह्वाश्रयत्वात् सत्तायाः[13] परत्वमित्यर्थः । ननु किं सत्ताया द्रव्यत्वादिवद्विशेष[14]संज्ञाप्यस्ति[15] नेत्याह—**सा चेति** । चस्त्वर्थः । अनुवृत्तेरेव हेतुत्वात् सामान्यमेवेत्यर्थः । न च सत्ता तद्वन्तं द्रव्यादिकं पदार्थं सत्तारहितात् सामान्यादेर्व्यावर्तयतीति वाच्यम् । तस्या व्यञ्जक[16]व्यक्तिस्वरूपमात्रव्यङ्ग्यतया व्यक्तिनियमाभावात् । कथं तर्हि सामान्यादौ तदभावः । जातिबाधकसद्भावात्[17] सत्तैकार्थसमवायेन सामान्यादौ सत्[18] सदिति प्रत्यययोत्पत्तेश्चेत्यलम्[19] । परमुदाहृत्यापरमुदाहरति[20]—**अपरमिति** । तत्र युक्तिं वक्ति—**अल्पेति** । निमित्तद्वयसंभवात्संज्ञाद्वयस्योपपत्तिरित्याह[21]—**तच्चेति**[22] । चस्त्वर्थः । अपिरनुवृत्तिहेतुत्वं समुच्चिनोति ।

1 B कर्म विभजतेति
2 A विस्तरःभयादुपरम्यते
3 A omits निरूपयति
4 B अनुवर्त्तीति
5 B omits कथं
6 A सद्रव्यं
7 A पृथिवीत्वात्याद्य
8 A omits अनेक
9 A व्युच्छेदाय
10 B विस (भ?) जते
11 A omits बह्विति अत्रत्यो विषयशब्दः
12 B विषयो शब्दः
13 A सत्ताया परत्वमित्यर्थः
14 A विशेषणं
15 B omits अपि
16 A omits व्यञ्जक
17 A सद्भावासत्तैकार्थ
18 A omits सत्
19 A प्रत्ययोपपत्तेः
20 A उदाहृत्यापारमुदाहरति
21 A उपपत्तेरित्याह
22 A omits तच्चेति । चस्त्वर्थः । अपिरनुवृत्तिहेतुत्वं समुच्चिनोति । अपोहवादिनो बौद्धस्य प्रत्यवस्थानमवतारयति । अत्रेति ।

अपोहवादिनो बौद्धस्य प्रत्यवस्थानमवतारयति—**अत्रेति**। व्यतिरिक्तं भावरूपं सामान्यं नास्तीत्यर्थः। परिहर्तुं प्रतिजानीते—**अत्रेति**। परस्परं[1] व्यावृत्तेषु पिण्डेष्वनुवृत्तिविषयत्वेनैकरूपा प्रतीतिस्तावद् दृश्यते सा[2] चानुगतं निमित्तमन्तरेणानुपपद्यमाना अनुगत[3]निमित्तं कल्पयति तदेव सामान्यमित्यर्थः। अन्यथासिद्धिमाशङ्कते—**नन्विति**। सामान्यविशेष[4]-विषयत्वेन भवदभिमताया बुद्धेरेकाकारत्वं[5] व्यावृत्तिनिबन्धनमित्येतत्प्रति-पादयति—**तथाहीत्यादिना**। भावरूपाया बुद्धेर्भाव एवावलम्बनं नापोह इति सयुक्तिकं समाधत्ते—**नैवमित्यादिना**। अपोहवादः परस्पराश्रय-ग्रस्त[6]त्वेन प्रागेव निरस्त इति नेह प्रतन्यते।

पञ्चमं पदार्थं निरूपयति—**विशेष इति**। अन्योन्याभावविरोधित्वे[7] सति समवेतानधिकरणं समवायिकारणं[8] विशेष इति निरुक्तिः। तस्या-श्रयमाह—**नित्येति**। विशेषसंज्ञा[9]व्यपदेशे निमित्तमाह—**व्यावृत्तीति**। मात्रे[10] चानुवृत्तिहेतुत्वं व्यवच्छिद्यते। कानि तानि नित्य[11]द्रव्याणी-त्यत आह—**नित्येति**।

[12]षष्ठं पदार्थं निरूपयति—**अयुतेति**। द्रव्यत्वसमानाधिकरणत्वे सति द्रव्यत्वात्यन्ताभावसमानाधिकरणः सत्तेतरो भावः समवाय इति निर्वचनम्। समवायः कुत्र वर्तत इत्याकाङ्क्षायां प्रागेवोक्तं मा विस्मार्षी[13]रित्याह—**स चेति**। [14]अवयवातिरिक्तमवयविनमनङ्गीकुर्वाणो **बौद्धः** प्रत्यवतिष्ठते—**नन्विति**। उक्तार्थोपजीवनेन प्रत्यवस्थातुमुक्तमर्थ-

---

1 A परस्य व्यावृत्तेषु
2 B सा चानुगतनिमित्तं
3 B अनुगतं निमित्तं
4 A omits विशेष
5 A बुद्धिरेकाकारत्वं
6 A ग्रस्तरस्तत्वेन
7 A विरोधत्वे
8 A omits समवायिकारणं; B सम-वायाधिकरण
9 A विशेषसंज्ञाया
10 A मात्रेवानुवृत्तिहेतुत्वं
11 A B omit नित्य
12 B षष्ठपदार्थ
13 B विस्मार्षी ( र्षी ? )
14 A अयवातिरिक्त

मनुवदति—**अवयवेति** । स[1]मवायाश्रयनिरूपणवेलायामित्थं निरूपितम् । त[2]न्न घटत इत्याह—**न चेति** । कुत इत्यत आह—**अवयवेति** । नन्ववयव्यभावे घटोऽयमिति प्रतीतेः किमालम्बनं तत्राह—**परमाणव इति** । समाधातुं प्रतिजानीते—**अत्रोच्यत इति** । प्रत्यक्षमेव[3] ( वा ) च ( त्र ) प्रमाणमित्याह—**अस्तीति** । अस्त्येव बु[4]द्धिः परं तु तथा तथा पुञ्जीभूतपरमाण्वाल[5]म्बनतयैवोपपन्ना अ[6]वयववावयविनि न प्रमाणमित्यत आह-**त[7]च्चेति** । परमाणुषु स्थू[8]लत्वबुद्धिर्न संभवति । अ[9]नेकेष्वतीन्द्रियेषु घ[10]टं इति प्रतीतिर्नोत्पद्यते तस्मादवयविनिराकरणे प्र[11]त्याशापेक्षया वक्तव्यं गत्यन्तरमिति भावः । अतस्मिंस्तद्बुद्धिरूपत्वेन[12] न भ्रा[13]न्तिरस्त्विति शङ्कते-**भ्रान्तेति** । सति बाधके भ्रान्तित्वं युज्यते । अस[14]त्यापि बाधके भ्रान्तित्वकल्पनायामतिप्रसङ्गः स्यादिति[15] परिहरति—**नेत्यादिना** । महता प्रबन्धेनोपपादितमर्थमुपसंहरति—**तदेवमिति** । तस्मात् कारणादेवमुक्तया रीत्या द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट् पदार्थाः निरूपिता इति भावः । ननु षडेव पदार्था इति कथं कथ्यते अभावस्यापि सप्तमस्य संभवादित्याशङ्क्य भावरूपाः षडेवेत्याह—**ते चेति** ।

नञर्थानुल्लिखितधीविष[16]यत्वेन भावरूपद्रव्यादिनिरूपणानन्तरमभावनिरूपणमुचितमिति प्रघट्टकसंगतिमाह—**इदानीमिति** । अभावो नाम नञर्थोल्लिखित[17]बुद्धिविषयः । असमवायित्वे सत्यसमवायो वा । अभावस्य निषेधमुखप्रमाणगम्यत्वं नास्तीति ज्ञानगम्यत्वम् । तदुक्तं **न्याय**

---

1 A समवायाश्रित
2 B omits तन्न
3 A B प्रत्यक्षमेवात्र
4 A बुद्धिपरं
5 A लम्बनयैवोपपन्ना
6 A अवयवा अवयानिन; B अवयविनः
7 A तवेति; B न चेति
8 B स्थूलबुद्धिः
9 A अनेष्वतीन्द्रियेषु
10 B घट इति नोपपद्यते
11 A प्रत्यासक्तित्कन्यायं; B प्रत्याशा त्यक्तव्या
12 B omits न
13 B भ्रान्तिरस्तीति
14 A असत्यापि
15 B omits इति
16 A विषयत्वेनाभाव
17 B धीविषयः

वार्तिककारेण—'सत्खलु[1] प्रमाणस्यालम्बनं[2] स्वतन्त्रमसत्तु[3] परतन्त्रं प्रतिषेधमुखेनेति विशेषतो[4] निरूपयितुमभावं विभजते—अभावेति[5]। इत्थं क्रोडीकारे द्वैविध्यमन्यथा चातुर्विध्यमिति भावः। संसर्गाभावं विभजते-संसर्गेति। प्रागभावस्य लक्षणमाह—उत्पत्तेरिति। कार्यस्याभावः[6] प्रागभाव इत्युक्तेऽन्योन्याभावेऽतिव्याप्तिः। अत उक्तं—कारणेति[7]। अन्योन्याभावस्य स्वप्रतियोगिकारण एव वृत्तिरिति नियमो नास्ति तस्य स्वप्रतियोगिव्यतिरिक्तसर्वपदार्थवृत्तेः। प्रागभावस्य तु स्वप्रतियोगिकारण एव वृत्तिः। तथाऽपि प्रध्वंसेऽतिव्याप्तिः प्रागभाववत् प्रध्वंसस्यापि प्रतियोगिसमानदेशत्वात्। अत उक्तं—उत्पत्तेः प्रागिति[8]। तदनेनात्यन्ताभावस्यापि[9] व्यवच्छेदः कृतस्तस्य[10] त्रैकालिकत्वात्स्वप्रतियोगि[11]कारणे वृत्त्यभावाच्चेति भावः। लक्षितं प्रागभावमुदाहरति—यथेति[12]। प्रागभावस्य लक्षणान्तरमाह—उत्पत्तेरिति[13]। अनादिरनित्यः[14] प्रागभावः। घटादिव्यवच्छेदार्थमनादिरिति गगनादिव्यवच्छेदार्थमनित्य इति। प्रागभावस्यानित्यत्वे युक्तिमाह-कार्यस्येति। कार्यस्योत्पत्तिरेव तत्प्रागभावस्य विनाशः। अविनाशे[15] तु (न?) भावाभावयोर्विरोधात् कार्योत्पत्तेरित्य[16]नुपपत्तेरिति भावः। प्रध्वंसाभावस्य लक्षणमाह—उत्पन्नस्येति। कारण इत्यनेनात्यन्तान्योन्याभावयोर्व्यवच्छेदः। उत्पन्नस्येति प्रागभावस्य निरास इति भावः[17]। निष्कर्षं[18] करोति-विनाश इति। उदाहरति-यथेति। उत्पत्तिमानविनाशीति लक्षणान्तरं वक्ष्यति तत्र समवाय्यसमवाय्यभावे

---

1 A स खलु
2 A आलम्बने
3 B अश्र (स?) त्तु
4 A विशेषयतो
5 A omits अभावेति
6 A कार्यस्य भावः
7 B कारण इति
8 A उत्पत्तेरिति। प्रागिति
9 B अत्यन्ताभावा (व?) स्यापि
10 A omits कृतः
11 A तस्यात्रैकालिकत्वात्
12 A तथेति
13 A adds प्रागभावस्य नित्यत्वे युक्तिमाह
14 A अनित्यप्रागभावः
15 B आविनाशेन
16 B कार्योत्पत्त्यनुपपत्तेरिति भावः
17 A विनाश इति भावः
18 A निकर्ष

कथमस्योत्पत्तिरिति शङ्कां प्रथममपाकरोति—**स चेति** । अयं नियमो भावविषयः । अभावस्तु निमित्तमात्राद्[1]उत्पद्यत इति भावः । तथा च लक्षणान्तरं निष्पन्नमित्याह—**स चेति** । **उत्पत्तिमानिति** गगनादेर्व्यवच्छेदः । **अविनाशीति** घटादेरित्यर्थः । [3]अविनाशित्वे युक्तिमाह-**पुनरिति।** प्रध्वंसस्य विनाशित्वे भावस्य पुनरुत्पत्तिप्रसङ्ग इति भावः । अत्यन्ताभावस्य लक्षणमाह--**त्रैकालिक इति**। अन्योन्याभावस्यापि नित्य[4]त्वेन तत्रातिव्याप्तिपरिहारार्थं संसर्गेति द्रष्टव्यम् । उदाहरति—**यथेति** । अन्योन्याभावं निरूपयति—**अन्योन्याभाव इति**। वैषम्यद्योतनार्थस्तुशब्दः । उदाहरति—**यथेति** । इयता ग्रन्थसंदर्भेण साधितं चतुर्थं प्रमेयं निगमयति-**तदेवमिति** ।

प्रपञ्चितस्य पदा[5]र्थस्य सत्यत्वमसहमानौ सौगतब्रह्मवादिनौ प्रत्यवतिष्ठेते—**नन्विति**। समस्तं वस्तुजातं [6]क्षणिकं विज्ञाने परिकल्पितम्। विज्ञानव्यतिरेकेण तस्य स[7]त्त्वमेव नास्ति तत्सत्त्वे प्रमाणाभावात् बा[8]धकसद्भावाच्च । व्यवहारस्तु स्वप्नव्यवहारवदनाद्यविद्यावशादुपपद्यत इति विज्ञानवादिनो मतम् । ब्रह्मवादिनस्तु सच्चिदा[9]नन्दस्वरूपे ब्रह्मणि मायासचिवे वियदा[10]दिप्रपञ्चोऽध्यस्तः । तस्य ब्रह्मव्यतिरेकेणामृषात्मकत्वं सदसद्विलक्षणत्वापरपर्यायं [11]ख्यातिवादाभ्यामुपपद्यत इति[12] । तदुक्तम्—

'असत्त्वं व्यतिरेकेण मतं विज्ञानवादिनः ।
मृषात्वं व्यतिरेकेण मतं वेदान्तवादिनः' ॥ इति ।
'यथा स्वप्नप्रपञ्चोऽयमपि मायाविजृम्भितः ।
एवं जाग्रत्प्रपञ्चोऽयमपि मायाविजृम्भितः' ॥ इति च ।

---

1 B उद्यत्पद्यते ( उत्पद्यते ? )
2 A omits इति
3 B अविनाश्यत्वे
4 A निमित्यत्वेन
5 B पदार्थजातस्य
6 A क्षणिकविज्ञानोपरि
7 A सत्यमेव नास्ति । तत्सत्यप्रमाणाभावात् ।
8 B बाधकस्य सद्भावाच्च
9 B सच्चिदानंव ( द ? ) रूपे
10 B वेदादिप्रपञ्चो
11 A B ख्यातिबाधाभ्यां
12 A omits इति

तस्माद् द्रव्यादिपदार्थसार्थस्य सत्यत्वं नास्तीत्यभिप्रायं परिहरति—**नेति**। तत्र युक्तिमाह—**अर्थानामिति**। अयमाशयः। न तावदसत्त्वपक्षः[1] शोभते। गगनकुसुमवदपरोक्षतया भावनायोगात्[2]। नापि स्वप्नव्यवहारसादृश्यं तद्वदत्र बाधाभावात्। नाप्यनिर्वचनीयपक्षः 'परस्परविरोधे हि न प्रकारान्तरस्थितिः' इति न्यायेन सत्त्वासत्त्वव्यतिरिक्तस्य तृतीयप्रकारस्य गगनकुसुमकल्पत्वात्[3]। तस्मात्पदार्थानां प्रत्यक्षादिप्रमाणसिद्धं सत्यत्वमकामेनाप्यभ्युपगमनीयमिति।

क्रमप्राप्तां बुद्धिं निरूपयति-**बुद्धिरिति**। सत्त्वरजस्तमोगुणात्मिकायाः प्रकृतेः सत्त्वप्रधानप्रथमविकारो महदाख्यश्चित्तान्तःकरणादिशब्दितो बुद्धिर्बुद्धेर्विषयाकारः[4] परिणामभेदो घट इत्यादिरूपो ज्ञानम्। विषयाकारेण परिणममानायां बुद्धौ प्रतिबिम्बितस्य चैतन्यात्मनः पुरुषस्य बुद्धिवृत्त्यनुकार उपलब्धिः। बुद्धेर्विषयः[5] सुखाद्याकारपरिणातिभेदः प्रत्यय इति। बुद्ध्यादिशब्दानामर्थभेदप्रतिपादनपरं **सांख्यमतं** प्रत्याख्यातुं पर्याय[6]शब्दानाख्यातुं[7] बुद्ध्यत उपलभते[8] जानाति प्रत्येतीति समानार्थतया प्रयोगदर्शनात्प्रदर्शिता[9] प्रक्रिया परिभाषा[10]मात्रमित्यलम्। ज्ञानस्य स्वजन्यज्ञाततादिपदवेदनीयप्रकाशानुमेयत्वं मन्यन्ते **मीमांसकाः**। तन्मतमपाकर्तुमाह—**अर्थप्रकाश इति**। ज्ञाततायाः प्रागेव प्रतिक्षिप्तत्वादित्यर्थः। बुद्धिं विभजते—**सा चेति**। साक्षात्कृत्यनुमित्यादिभेदेन बहुविधेति सूचयितुं संक्षेपत इत्युक्तम्। अनुभवोऽपि तथेति द्विविध इत्यर्थः। यथार्थानुभवस्य लक्षणमाह—**तत्रेति**[11]। अविसंवादित्व[12]-

---

1 B असत्वपक्षं
2 A भावयोगात्; B भानायोगात्
3 A कल्पनात्
4 B विषयाकारपरिणामभेदो
5 B विषयसुखाद्याकारपरिणतिभेदः
6 B पर्यायशब्दान्वाख्यानं
7 A व्वाख्यातुं
8 B उपलंभते
9 B दर्शिता
10 A परिभाणमात्रं
11 A यथार्थ इति; B omits तत्रेति-इत्यारभ्य स चेति इति पर्यन्तम्
12 A omits अविसंवादित्वमबाधितत्वमित्यर्थः। तस्य कारणमाह स चेति

मबाधितत्वमित्यर्थः । तस्य कारणमाह—स चेति[1] । प्रत्यक्षादिप्रमाणजन्यं ज्ञानमबाधितानुभवः प्रमेति यावत् । सा प्रमा चतुर्विधा साक्षात्कृतिरनुमितिरुपमितिराप्तिश्चेति । एषामनुभवानां क्रमेणोदाहरणमाह—यथेत्यादिना । अयथार्थानुभवस्य स्वरूपमाह[2]—अयथार्थस्त्विति । वैषम्यार्थस्तुशब्दः । अर्थव्यभिचारित्व[3]मर्थसंस्पर्शराहितत्वं[4] बाधितत्वमिति यावत् । तस्य कारणमाह—अप्रमाणज इति । दुष्टेन चक्षुरादिना जायत इत्यर्थः । भेदमभिधत्ते—स इति । संशयतर्कौ यथोद्देशं वक्ष्येते[5] इति भावः । विपर्ययं निरूपयति—विपर्यय इति । निष्कर्षं करोति—भ्रम इति । उदाहरति—यथेति । स्मरणं विभजते—स्मरणमिति । अनुभववत्स्मरणमपि[6] द्विविधमित्यपेरर्थः । कदाचिद् द्विविधमपि संभवतीत्याह—जागर इति । स्वापे त्वेकप्रकारमेवेत्याह—स्वाप इति[7] । तत्र युक्तिमाह—दोषवशेनेति । स्वप्नज्ञानस्य संस्कारमात्रजन्यत्वेन स्मृतित्वम् । (अ?) ननुभूतेऽर्थे[8] स्वप्नज्ञानस्यानुदयात्[9] । अयथार्थत्वं च[10] तत्रासंनिहितानां गजादीनां संनिहितत्वेन भासमानादिति[11] भावः । ज्ञानस्य साकारतां निराकर्तुं निराकारतां प्रतिजानीते—सर्वमिति । तत्र हेतुमाह—साकारेति । साकारज्ञानवादस्य तीर्थकारैः प्रत्यादिष्टत्वादित्यर्थः । एवं चार्थानामपि नित्यानुमेयत्वं पराकृतमित्याह—अत एवेति । अतःशब्दपरामृष्टहेतुं स्पष्टयति—प्रत्यक्षेति । अयं भावः । इन्द्रियसंबद्धो[12] विषयः स्वजन्ये ज्ञाने स्वाकारं समर्प्य नश्यति । तेन चाकारेणार्थोऽ[13]नुमीयत इति सर्वविषयानुमेयवादिनः सौगतस्य मतम् । तदयुक्तम् ।

---

1 B य इति
2 B अयथार्थानुभवस्वरूपमाह
3 A अर्थव्यभिचारत्वं
4 A राहित्वं
5 B वक्ष्यते
6 A अनुभवस्मरणमपि
7 A omits स्वाप इति
8 A B अननुभूतेर्थे
9 B स्वप्नज्ञानानुदयात्
10 A omits च
11 A भासमानत्वादिति भावः; B भासनादिति
12 A इन्द्रियसंबन्धे ; B इन्द्रियसंबद्धोऽपि
13 A चाकरेणार्थो

अतीतानागतविषयाणां ज्ञानानां स्वविषयार्पिताकारत्वासंभवेन साकार-त्वायोगात् सर्वविषयानुमेयत्वे [1]प्रत्यक्षदृष्टार्थदृष्टान्तासंभवाच्च । तस्मात्परि-दृश्यमानप्रवृत्त्यादिबलात् प्रत्यक्षसिद्धा घटादय इत्यकामेनाप्युररी[2]कर्तव्य-मिति । ननु ज्ञानस्य साकारत्वाभावे कथं प्र[3]तिविषयं भेद [4]उपपद्येतेत्याशङ्क्य अर्थेनैव वि[5]षयो हि निराकारतया धियामिति न्यायेनोपपद्यत इत्याह—[6]सर्वं ज्ञानमित्यादिना । तस्माज्ज्ञानस्य साकारत्वं न युक्तमित्यर्थः ।

क्रमप्राप्तं मनो निरूपयति—[7]**अन्तरिति** । किमत्र प्रमाणमित्याशङ्क्य प्रागेव निरूपितमित्याह—**तच्चेति** । तन्मनः प्रमाणवत्तया द्रव्यनिरूपण-वेलायामुक्तमित्यर्थः ।

क्रमप्राप्तां प्रवृत्तिं निरूपयति—**प्रवृत्तिरिति** । ननु प्रवृत्तिशब्देन कथं धर्माधर्मावुच्येते इत्या[8]शङ्क्य तत्रोप[9]पत्तिमाह—[10]**प्रवृत्तेरिति** । आयुर्घृत-मित्यादिवत्सा[11]ध्यवाचिना साधनं [12]लक्ष्यत इत्यर्थः ।

आत्मानं दूषयन्तीति दोषा इत्यर्थं हृदि निधायाह—**दोषा इति** । रागादीनां स्वरूपमाह—**राग इत्यादिना** । मृत्वोत्पत्तिः प्रेत्यभाव इत्याह—**पुनरिति** । ननु नित्यस्यात्मनः कथमयं [13]घटते तत्राह—**स चेति** । फलदुःखयोः स्वरूपमाह—**फलमित्यादिना** । आ[14]त्यन्तिकी दुःखनिवृत्तिरपवर्ग इत्याह—**मोक्ष इति** । निवृत्तेरात्यन्तिकत्वं नाम नि[15]वृत्त-सजातीयस्य [16]पुनस्तत्रानुत्पाद इत्यर्थः । ननु दुःखस्य [17]जात्याकारेणैकत्वाद् [18]व्यक्त्याकारेणानन्तत्वात्कथमेकविंशतिभेदभि[19]न्नत्वमित्याशङ्क्य दुःखशब्दस्य

---

1 B प्रत्यक्षदृष्टान्तासंभवाच्च
2 B प्युररीकरणीयामिति
3 B प्रत्याविषयं
4 A उपपद्यतेत्याशङ्क्या; B उपपद्यते इत्याशङ्क्य
5 B विशेषो यो हि
6 B सर्वज्ञानमित्यादिना
7 B आन्तरमिति
8 A इत्यशङ्क्य
9 A तत्रोपपत्तिमात्रवृतेरिति
10 B प्रवृत्तिरिति
11 A साधवाचिना
12 B लक्ष ( क्ष्य? ) त इत्यर्थः
13 A घंटेन
14 B आत्यान्तिकदुःखनिवृत्तिः
15 A निवृत्य; B निवर्त्तसजातीयस्य
16 A पुनरनुत्पाद; B पुनस्तत्वानुत्पाद इत्यर्थः
17 A B जात्याकारणैकत्वाद्
18 A व्यक्त्याकारेणानन्तत्वात
19 B भेदभिन्नमित्याशङ्क्य

शरीरादिपरतयोपपद्यत इत्याह— **एकविंशतीति** । घ्राणरसनचक्षुःश्रोत्र-
त्वङ्मनांसि षडिन्द्रियाणि विषयास्तु रूपरसगन्धस्पर्शशब्देच्छादयः । एतेषां
बुद्धयः । शेषं[1] स्पष्टम् । ननु दुःखादत्यन्तभिन्नानां[2] शरीरादीनां कथं दुःख-
शब्दवाच्यत्वमित्याशङ्क्य **दुःखपीडात्मकत्वेन[3]** मुख्यया वृत्त्या दुःखव्यप-[4]
देशयोग्यं शरीरं दुःखायतनत्वेन षट्कत्रयं[5] तत्साधनत्वेन[6] गौणवृत्त्येत्याह-
**गौणेति** । ननु सुखस्य दुःखत्वं प्रतीतिविरुद्धमित्यत आह—**सुखमिति** ।
अनुषङ्गशब्दार्थमाह— **अनुषङ्ग इति** । तत्संबन्धेन[7] तच्छब्दस्योपचारात्
प्रयोगः कुत्र दृष्टस्तत्राह— **स चेति** । आकाङ्क्षापूर्वकमोक्षोत्पत्तिप्रक्रियां[8]
प्रपञ्चयति—**स[9] पुनरित्यादिना सोऽपवर्ग[10] इत्यन्तेन** । नन्वनादिभव-
परंपरासंपादितस्य कर्मजातस्य सद्भावे कथं शरीरादिविगमस्तत्राह[11]—
**पूर्वोपात्तमित्यादिना** । तदुक्तम्[12]—

**'आत्मनो वै शरीराणि बहूनि[13] मनुजेश्वर ।**
**प्राप्य योगबलं कुर्यात्तैश्च सर्वां महीं चरेत् ॥**
**भुञ्जीत विषयान् कैश्चित्कैश्चिदुग्रं तपश्चरेत् ।**
**संहरेच्च पुनस्तानि सूर्यस्तेजोगणानिव[14]** '॥ इति ।

ननु पूर्वोपात्तस्य कर्मजातस्य भोगेन क्षयेऽपि संप्रति[15] संपद्यमानस्य
संभवात् कथं सुखदुःखहानिरित्यत आह— **निष्कामेति** । सकामस्य कथं
निष्कामकर्मानुष्ठानं तत्राह—**क्लेशेति** । क्लेशा[16] रागद्वेषमोहा इत्यर्थः । क्लेश-
हीनता कथं संजायेतेत्यत[17] आह—**मुमुक्षोरित्यादिना** । एतावन्तं काल-
मविद्यमानं मुमुक्षुत्वं कथमिदानीं स्यात्तत्राह—**शास्त्रादित्यादिना** ।

1 B अवशेषं स्पष्टम्
2 B दुःखात्यन्तभिन्नानां
3 B दुःखं पीडात्मकत्वेन
4 B दुःख वि (व्य?) पदेशयोग्यं
5 A षट्कं त्रयं
6 B [त?] त्साधनत्वेन
7 B तत्संबन्धे
8 B आकाङ्क्षापूर्वकम्
9 A omits स; B अपुनरित्यादिना
10 B सोऽयं मु(यमप?) वर्ग इत्यन्ते
11 A विरामः
12 A omits तदुक्तम्; B अत उक्तम्
13 B बहु (हू?) नि
14 A तेजोगणानिव
15 B संप्रति पद्यमानस्य
16 A क्लेशरागद्वेषमोहा
17 B संजायतेत्यत आह

इत्थं सप्रपञ्चं प्रमेयं निरूप्य बाल[1]प्रबोधाय निरूपयिष्यमाणस्य संशय[2]स्य संगतिं निरूपयति—**इदानीमिति** । तदत्य[3]न्तविमोक्षोऽपवर्ग इत्येतदनन्तरं संशयं समा[4][ ना ? ] नेकधर्मेत्यादिना सूत्रेण सूत्रकारः प्रतिपादयति । तदनुसारिणा मयापि प्रतिपाद्यत इत्यर्थः । प्रमाणभूतस्य न्यायस्य प्रवृत्तौ प्रथमा[5]पेक्षितत्वेन प्रधानस्य न्यायाङ्गस्य संशयस्य निरूपणमवसरप्राप्तमिति द्योत[6]यितुमुक्तमिदानीमिति । लक्षणमाह—**एकस्मिन्निति** । एकत्र विरुद्धकोटिद्वयावलम्बि ज्ञानं संशय इत्यर्थः । सामग्रीभेदात्संशयस्य भेदमाह—**स चेत्यादिना** । [7]नित्येत्येव संशय इत्यन्तेन । साधारणधर्मः समानधर्मः विरुद्धार्थप्रतिपादकवच[8]नद्वयी विप्रतिपत्तिः । सजा[9]तीयविजातीयव्यवच्छेदकधर्मोऽसाधारणधर्मः । विशेषादर्शनविशेष[10] (षा?) स्मरणसहितेभ्यः समानधर्मविप्रतिपत्त्यसाधारणधर्मेभ्यस्त्रिप्र[11]कारः संशयो जायते ।

तदेतदर्थजातं संग्रहविवरणाभ्यां क्रमेण प्रदर्शितम् । संदिग्धं सप्रयोजनं [12]प्रतिपित्सागोचरो भवतीति कृत्वा प्रयोजनस्य चाकाङ्क्षितत्वात् प्रयोजनं लक्षयति—**येन प्रयुक्त इति**। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् । सुखा[13]वाप्तिदुःखनि[14]वृत्त्योः प्रेक्षावत्प्रवृत्तिसाध्यत्वेन प्रयोज[15]नमुपपादयति—**तदर्थेति** । स्वस्थस्य वातपित्तश्लेष्मदोषरहितस्यारोगस्येति यावत् । तदुक्तम्—

'रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता' इति ।

---

1 A B बालप्रबोधनाय
2 B शंस (संश?) यस्य
3 A तदत्यन्तद्यो मोक्षः
4 A B समानानेक
5 B प्रथमापेक्षित्त (त?) त्वेन
6 A B द्योतय (यि?) तुं
7 A B नित्येत्येवं
8 A B वचनद्वयं
9 A सजातीयव्यवच्छेदको
10 B विशेषास्मरण
11 A त्रिप्रकासरः
12 A विप्रतिपित्सा
13 A सुखावाक्तिः
14 A दुःखनिवृत्तौ
15 B प्रयोजनत्वम्

प्रयोजनार्थे प्रवृत्तिर्दृष्टान्तप्रधानप्रमाणसाध्यत्वाद् दृष्टान्तो निरूपणीय इत्यभिप्रायेण दृष्टान्तस्वरूपं निरूपयति—**वादीति**। साध्यसाधनयोर्यत्र साहचर्यं दृश्यते स साधर्म्यदृष्टान्तः[1]। तदभावयोः साहचर्यं यत्र स वैधर्म्यदृष्टान्तः। तद् द्वयमुदाहरणमुखेन[2] प्रपञ्चयति—**यथेत्यादिना**। प्रामाणिकप्रवृत्तेः सिद्धान्ते[3] भेदसापेक्षत्वात् सिद्धान्तस्य लक्षणमाह—**प्रामाणिकत्वेनेति**। तदवान्तरभेदान् दर्शयति—**स चतुर्धेत्यादिना**[4]। तन्त्र्यन्ते[5] व्युत्पाद्यन्ते पदार्था अनेनेति[6] व्युत्पत्त्या तन्त्रशब्दः शास्त्रवचनः[7]। अत एवोक्तं न्यायभाष्ये-'तन्त्रमितरेतराभिसंबद्धस्यार्थसमूहस्योपदेशः[8] शास्त्रमिति[9]। सर्वतन्त्राविरुद्धः[10] सर्वतन्त्राधिकृतश्च[11] सर्वतन्त्रसिद्धान्तः[12]। स्वतन्त्रसिद्धः[13] परतन्त्रासिद्धः[14] प्रतितन्त्रसिद्धान्तः। अनुभयानुषक्तसिद्धिरधिकरण[15]-सिद्धान्तः। अपरीक्षिताभ्युपगमात्[16] तद्विशेषणपरीक्षणमभ्युपगमसिद्धान्तः[17]। उदाहरणानि स्पष्टानि[18]। सिद्धान्तभेदस्य पञ्चावयवरूपपरार्थानुमानसाध्यत्वादपेक्षितान्पञ्चावयवान् दर्शयति—**अनुमानेति**। प्रतिज्ञाद्यवयवानां लक्षणोदाहरणे व्यक्ते। तर्कानुगृहीतस्य[19] प्रमाणस्य साधनत्वादनुग्राहकं तर्कं निरूपयति—**तर्क इति**। अनिष्टप्रसङ्गस्तर्क इत्यर्थः। तदेव व्युत्पादयति—**स चेति**। उदाहरणं दर्शयति—**यथेति**। प्रागेव व्याख्यातम्। पक्षे विपक्षजिज्ञासाविच्छेदस्तदनुग्राहक इत्युक्तां रीतिं[20] प्रपञ्चयति—**तथाहीत्यादिना**[21]।

---

1 A साधर्मदृष्टान्तः
2 B तद्व (द्व?) यं
3 B सिद्धान्तभेदसापेक्ष्यत्वात्
4 A स चतुर्विधेत्यादिना
5 B त्यन्त्र्यंते ( तन्त्र्यन्ते? )
6 A अनयेति
7 B शास्त्रवचनस्
8 A संबन्धस्यार्थसमूहोपदेशः
9 A सास्त्रमिति
10 B सर्वतन्त्राविरुद्धस्
11 B स्वतन्त्राधिकृतश्च सर्वतन्त्रसिद्धान्तः
12 B सतन्त्रसिद्धान्तः
13 B स्वतन्त्रसिद्धं
14 A परतन्त्रसिद्धः
15 B सिद्धेः
16 A अपरीक्षिताक (?) भ्युपगमात्
17 B अभ्युगमसिद्धान्तः
18 B स्पष्टे
19 B तर्कानुग्र (गृ?) हीतस्य
20 A B तदनुग्रह इत्युक्तां रीति
21 A यथाहीत्यादिना

संशयान्तर्भावं वारयति—**अत्रेत्यादिना** । कोटिद्वयावलम्बित्वाभावादिति[1] भावः । तर्कसहकृतप्रमाणसाध्यं फलमभिधत्ते—**निर्णये**[2] इति । प्रमाणतर्काभ्यां क्रियमाणस्य[3] निर्णयस्य कथायामेव संभावितत्वात् कथानिरूपणम्[4] । तत्रापि तत्त्वनिर्णयफलत्वाद्वादस्य प्राथम्यं पक्षद्वयसाधनत्वा(व?)ज्जल्पस्य[5] तदानन्तर्यं कथाविक्षेपत्वाद्वितण्डायास्तदुत्तरत्वम् । ग्रन्थार्थः[6] स्पष्टः । कथात्रयेऽपि वर्जनीयानां हेत्वाभासानां स्वरूपं निरूपयति[7]—**उक्तानामित्यादिना** । यद्यपि पुरस्तादेव[8] तदुपन्यस्तं तथापि तत्रानुक्तविशेषनिरूपणाय पुनरारम्भः । उदयनोदीरितासिद्धि[9]लक्षणमादाय[10] सांकर्यशङ्का[11]मङ्कुरयति[12]—**तत्रेत्यादिना**[13] । पुरःस्फूर्तिकस्यैकस्यैव[14] विरोधादेर्दूषणत्वमवलम्ब्य समाधानं विदधाति—**तथापीत्यादिना** । तत्र युक्तिमाह[15]— **तेनैवेति** । एकेन कृतकत्वादि[16]तरानर्थक्यमिति न्यायेनैकेनैव[17] दूषणेन दुष्टत्वे ज्ञापितेऽपि दूषणान्तराभिधानेऽनवस्था वैयर्थ्यं च । तथा च कथायाः पर्यवसानं न स्यादिति तात्पर्यम् । फलितमाह—**तथा चेति** । तर्हि कदानैकान्तिकत्व[18]दोषानु(ष उ?)द्भावनीयस्तत्राह—**व्यभिचारादेरिति**[19] । यदा व्यभिचारः पुरः[20] परिस्फुरति तदानैकान्तिको हेतुर्भवति[21] । एवं बाधप्रतिरोधयोरपीत्यर्थः । तर्हि एते हेतवः कदासिद्धा[22] भविष्यन्ति तत्राह—**ते पुनरिति** । असिद्धं

---

1 A कोटिद्वयलम्बित्वाभावादिति
2 A निर्णयति
3 B क्रियमाणनिर्णयस्य
4 A omits कथानिरूपणम्
5 A साधनत्वाज्जल्पस्य; B साधनवत्वात्
6 A तदुत्तरग्रन्थार्थः
7 A दर्शयति
8 A पुरस्तादेतदुपन्यस्तं
9 A उदयनोदीरितोसिद्धि
10 B लक्षणमाह-अत्रेति
11 B स ( श ? ) ङ्का
12 A अङ्कूरयति
13 A तच्चेत्यादिना; B तत्र चेत्यादिना
14 A पुनस्फूर्तिकस्य; B पुरस्फूर्तिकस्येव
15 A adds स्वरूपसिद्धस्य लक्षणोदाहरणे दर्शयति-स्वरूपेति भागासिद्धस्य स्वरू ...... ( ? )
16 B कृतत्वात्
17 B omits एकेन
18 B अनैकान्तिकत्वादिदोष उद्भावनीयः
19 A व्यभिचारादिभिरिति
20 A पुन पुरस्फुरति
21 B हेतुभवति
22 A कदा अपासिद्धेतर्भादा भविष्यन्ति

विभजते—**तथाभूत इति**। आश्रयासिद्धस्य लक्षणोदाहरणे क्रमेण दर्शयति—**तत्रेति**। ननु सिद्ध[1]साधनो हेत्वाभासः कुत्रान्तर्भविष्यतीत्याशङ्क्याश्रयासिद्ध एवान्तर्भविष्यतीति वक्तुं प्रसङ्गं संपादयति—**अयमित्यादिना**। [2]स्वरूपासिद्धस्य लक्षणोदाहरणे दर्शयति—**स्वरूपेति**। भागासिद्धस्य स्वरूपासिद्धेऽन्तर्भावमाह—**भागेत्यादिना**। उक्तन्यायमन्यत्रापि संचारयति—**तथेत्यादिना**। विशेषणासिद्धस्योदाहरणमाह—**तत्रेति**। द्रव्यत्वमात्रं न[3] नित्यता[4]साधकं द्व्यणुकादावनैकान्तिकत्वात् नाप्यस्पर्शवत्त्वमात्रं तद्गतगुणादावनैकान्तित्वात्। तस्माद्विशिष्टस्यैव हेतुत्वमेष्ट[5]व्यम्। तथा च विशेषणं द्र[6]व्यत्वमसिद्धं शब्दस्य गुणत्वादित्येतदाह—**तत्रेति**। **द्रव्यत्वेत्यादिना**। ननु विशेषणविशेष्ययोर्मध्ये विशेष्[7]यस्य प्रधानत्वात्तत्सद्भाव एवापेक्षितः किमुपसर्जनीभूतविशेषणसद्भावेनेत्याशङ्क्याह—**न चेत्यादिना**। विशेषणाभावे विशिष्टस्या[8]भावमुदाहरणमुखेन स्फोर[9]यति—**यथेति**। **पुरुषमात्रभाव इति**। दृष्टान्तार्थफलितमाह—**तेनेति**। विशे[10]ष्यासिद्धस्योदाहरणमाह—**विशेष्येति**। असमर्थविशेषणस्योदाहरणमभिधत्ते। **असमर्थेति**। [11]असमर्थविशेषणस्यासामर्थ्यमेव [12]समर्थयते—**अत्रेत्यादिना**। [13]ननु शब्दे [14]गुणत्वासिद्धिः कथं कथ्यते तस्य गुणत्वेन प्रसिद्धत्वादित्याभिप्रायेण [15]शङ्कते—**नन्विति**। [16]अस्त्येव शब्दे गुणत्वं तत्[17]तु विशेषणं न भवति। प्रयोजनवता विशेषणेन भवितव्यं तदभावादसमर्थ-

---

1 B सिद्धिसाधनो
2 A omits स्वरूपासिद्धस्य लक्षणोदाहरणे दर्शयति-स्वरूपेति। भागासिद्धस्य स्वरूपासिद्धेरन्तर्भा
3 A omits न
4 A नित्यत्वसाधकं; B नित्यत्वसाधनं
5 A एवैष्टव्यम्
6 A द्रवित्व
7 A विशेषस्य
8 B विशिष्टि (ष्ट?) स्याभावम्
9 A स्फारयाति
10 A विशेष्यस्यासिद्धस्य
11 B omits असमर्थ
12 A सामर्थयते
13 B omits ननु
14 A B गुणत्वस्यासिद्धिः
15 B आशङ्कते
16 B अस्ति च
17 A तत्वविशेषणं

मिति परिहरति—**सत्यमिति** । असमर्थविशेष्यासिद्धस्योदाहरणमाचष्टे-**असमर्थेति** । नन्वयं हेतु[1]रसमर्थविशेष्यो भवतु स्वरूपासिद्धस्तु कथं स्यात्तत्राह—**स्वरूपेति** । [2]व्याप्यत्वासिद्धं निरूपयति—**व्याप्यत्वेति** । विभजते—**स द्विविध इति** । व्याप्तिग्राहकप्रमाणाभावनिबन्धनं व्याप्यत्वासिद्धमुदाहरति-**तत्रेति** । द्वितीयस्योदाहरणमाह-**इदानीमिति** । तद्यथेत्यादयो दर्शित इत्यन्ता ग्रन्थाः प्रागेव व्याख्यातप्राया इत्युपेक्षितम् । विरुद्धहेत्वाभासं वक्तुं प्रतिजानीते-**संप्रतीति** । लक्षणोदाहरणे दर्शयति-**साध्येति** । [3]अनैकान्तिकत्वं निरूपयति—**संशयेति** । एकान्ते नि[4]पात ऐकान्तिकः विपर्ययादनैकान्तिकः । तथा च तस्य संशयहेतुत्वमुक्तं भवति साध्यवत्तदभावस्यापि गमकत्वादिति भावः । भाष्योक्तं लक्षणान्तरमाह—**सव्यभिचार इति** । विवि[5]धमभितश्चरणं व्यभिचारस्तेन सह वर्तत इति सव्यभिचार इत्यर्थः । विभजते—**स इति** । द्विविधस्यापि लक्षणोदाहरणे दर्शयति—**तत्रेत्यादिना** । ननु साधारणस्यानैकान्तिकत्वं युज्यते सपक्ष[6]वद् विपक्षेऽपि वर्तमानत्वात् । असाधारणस्य तु[7] सपक्षवृत्तित्वमेव नास्ति तत्कथं सव्यभिचारित्वमित्याशङ्क्याह—**तस्येति** । नियमाभावश्च द्वे[8]धा घटते । उभयवृत्तेरुभयतो व्यावृत्तेश्च । तत[9]श्च द्विविधस्यापि व्यभिचारित्वमुपपद्यत इति भावः । प्रकरणसमस्य लक्षणमाह—**यस्येति** । उदाहरति-**तद्यथेति** । अपेक्षितं प्रतिपक्षस्वरूपं निरूपयति— **अत्र हीति** । समानबलग्रहणस्योपयोगमाह— **यत्पुनरिति** । ननु सर्वस्याप्यनुमानस्य [10]व्याप्तिपक्षधर्मतावत्तया समान[11]त्वादसमानबलत्वं न संग[12]च्छत इत्याशङ्क्य तदुपपादयितुं प्रतिजानीते—**तथाहीति** । [13]साध्याभावे साधकानुमानस्य त्रैविध्यं

---

1 A हेतुसमर्थविशेष्यो
2 A निबन्धनव्याप्यत्वासिद्धं
3 B अनैकान्तिकं
4 A B नियत
5 B विव ( वि? ) धं
6 B सपक्षे विपक्षेऽपि वर्तनात्
7 A omits तु
8 A द्विधापि
9 A तवश्चिद्विविधस्यापि
10 A व्याप्तिपक्षधर्मतया; B व्याप्तिपक्ष-धर्मवत्तया
11 A समानत्वासमानबलत्वं न संग-स्यते
12 B संगस्यते
13 A B साध्यभावसाधकानुमानस्य

दर्शयति—विपरीतेति । उपजीव्यस्यानुमानस्याधिकबलत्वेन बाधकत्वमभिधत्ते—न हीत्यादिना । अनित्या परमाणवः मूर्तत्वात् घटवदिति प्रयुञ्जानेन परमाणूनप्रतिमा (प्रमि ?)न् पक्षीकृत्य प्रयोगः क्रियते आहोस्वित्प्रमितान् । नाद्यः आश्रयासिद्धेः । द्वितीयेऽनुमानेन सिद्ध्यन्तः परमाणवो नित्यत्वेनैव सिद्धा इति कृत्वा तदुपजीवनेनानित्यत्वसाधनमयुक्तमिति भावः । बाधकमवगतं किं वा बाध्यं भविष्यति तत्राह—उपजीवक इति । दृष्टान्तमाचष्टे—यथेति । उपजीव्योपजीवकत्वाभावेन प्रबले दुर्बलत्वाभावात्समबलत्वेन सत्प्रतिपक्षत्वं तृतीयस्य युज्यत इत्यत आह—तृतीय इति । कालात्ययापदिष्टस्य लक्षणोदाहरणे दर्शयति—यस्येत्यादिना । विषयव्याप्त्यर्थं कालात्ययापदिष्टस्योदाहरणान्तरमाह—तथेति । पक्षीकृते घटादावक्षणिकत्वाभावस्य पूर्वापरकालयोरेकत्वावगाहिनी (ना ?) प्रत्यभिज्ञाप्रत्यक्षेण प्रमितत्वेन क्षणिकत्वसाधनं सत्वं कालात्ययापदिष्टमिति स्पष्टयति—तस्येत्यादिना । इयता प्रबन्धेन साधितमर्थं निगमयति—एतं इति । तस्मादिति विशेषः । ननु हेत्वाभासानां पञ्चविधत्वमुक्तं तदयुक्तम् । लक्षणस्य केवलव्यतिरेकितया तद्दूषणानामतिव्याप्त्यादीनां संभवादित्याशङ्क्याह—येऽपीत्यादिना । तदेतदुपपादयति—तथाहीत्यादिना । जातिनिग्रहस्थानापेक्षया छल-

---

1 B उपजीवस्य
2 A आधिकत्वेन बलाधिकत्वमभिधत्ते
3 A प्रमितनेनवयुंजान्यक्षीकृत्य
4 B अप्रमितान्
5 A अहोस्वितन् अप्रमिताप्रमितान्
6 B आश्रि (श्र ?) यासिद्धेः
7 A द्वितीयेषु त्व (त्व ?) नुमानेन B द्वितीये तु अनुमानेन सिद्ध्यन्तः
8 B omits वा
9 A उपजीवकमिति
10 A अथेति
11 B उपजीव्योपजीवकभावाभावेन-प्रबलदुर्बलत्वाभावात्
12 A दुर्बले
13 A समबलत्वे
14 A कालात्ययापदिष्टलक्षणोदाहरणे
15 B घटादौ क्षणिकत्वाभावस्य
16 B क्षणिकत्वाभावपूर्वापरकालयोः
17 B एकत्वावगाहिना
18 B प्रत्यभिज्ञानप्रत्यक्षेण
19 A एतादिति
20 B शेषः
21 A अतिव्याप्तानां
22 B संभवेदित्याशङ्क्य

स्यात्म( ल्प ? )त्वात् सूचीकटाहन्यायेन छलं प्रथमतो निरूपयति—**अभिप्रायान्तरेणेति** । अर्थान्तराविवक्षया प्र[1]युक्तशब्दस्यार्थान्तरं प्रकल्प्य क[2]ल्पितस्य प्रतिषेधा[3]भिप्रायश्छलमित्यर्थः । लक्षणस्यासंभवपरिहारार्थमुदाहरणमाह—**यथेत्यादिना** । छलवज्जातेरपि निरनु[4]योग्यतया जातेर्लक्षणमाचष्टे—**असदिति** । उत्तरस्यासत्त्वं प्रयु[5]क्ते हेतौ दूषणासामर्थ्यम् । तदुक्तम्—

**'प्रयुक्ते स्थापनाहेतौ दू[6]षणाशक्तमुत्तरम् ।**
**जातिमाहुर ( था ) न्ये तु स्वव्याघातकमुत्तरम्** ' ॥ इति

जातिभेदानां साकल्येनानिरूपणे निमित्तमाह—**सा चेति** । रीतिप्रदर्शनार्थमुभौ जातिभेदौ दर्शयति-**तत्रेति** । यथा कृतकत्वमनि[7]त्यत्वव्याप्तं तथा सा[8]वयवत्वं व्याप्तं न भवति किं तु क्व[9]चित् घटपटादौ सा[10]वयवत्वं (त्व?) सहचरितं कृतकत्वमिति कृत्वा पक्षे तद्वशेनाविद्यमान[11]स्य सावयवत्वस्योपादानमुत्कर्षस[12]मः । विद्य[13]मानस्य निराकरणमपकर्षसमः । उदाहरणार्थस्तु स्पष्टः ।

कथावसाननिमित्तं निग्रहस्थानमन्ते निरूपयति—**पराजयेति** । [14]साकल्येना [ न? ] भिधानकारणमाह—**त[15]च्चेति** । न्यूनाधिकादीनां क्रमेण ल[16]क्षण ( णान्या ? ) माह—**यत्रेत्यादिना** । एतेषामुदाहरणानि न्यायसारादौ स्पष्टानीत्युपेक्षि[17]तानि । न[18]नु तत्रिविधं वाक्छलं सामान्य-

---

1 A प्रयुक्तस्य
2 A प्रकल्पितस्य
3 A प्रतिषेधाभिधानं छलमित्यर्थः
4 A निरनुयोज्यानियोगरूपत्वात्; B निरनुयोज्यानुयोगरूपतया
5 A प्रयुक्तं
6 A दूषणासक्त
7 A अनित्यत्वं
8 A सावयवत्वव्याप्तं
9 A घटपटादौ क्वचित्
10 A B क्वचित्सावयवत्वसहचरितकृतकत्वैकत्वामिति
11 A विद्यमानस्यासावयवत्वस्यापादानमुत्कर्षसम
12 B उत्कर्षसमा
13 A B omit विद्यमानस्य निराकरणमपकर्षसमः
14 A साकल्येनानभिधाने कारणमाह; B साकल्येनानभिधानकारणमाह
15 A तच्चेति
16 A लक्षणमाह; B लक्षणान्याह
17 A उपेक्षितम्
18 B ननु तत्र ( त्रि? ) विधं

त्वमुपचारच्छलं चेति । तथा साधर्म्यवैधर्म्यो[1]त्कर्षापकर्षवर्णा[2]वर्णविकल्प-सा[3]ध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृ[4]ष्टान्तानुपपत्तिसंशयप्र[5]करणहेत्वर्थापत्त्यविशेषो-पपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा इति । तथा प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थक-मविज्ञातार्थकमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरु[6]क्तमननुभाषणमज्ञान-मप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्या[7]नुयोगोप-सिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानीति । छलादीनां रूपभेदा बहवो विद्यन्ते । ते[8] च कथायां स्ववाक्येषु परिवर्जनीयतया परवाक्येषू[9]द्भाव-नीयतया वि[10]ज्ञातव्याः । अतस्तेषां निरूपणमुचितमित्याशङ्क्याह—**इहेति**। [11]स्वरूपभेदज्ञानं ग्रन्थान्तरपरिशीलनेन भाविष्यति । इ[12]ह तु उ ( त्वनु? ) पयुक्तं रूपभेदनिरूपणं बालव्युत्पादनार्थं प्रवृत्तत्वात् । बालव्युत्पादनं च[13] सामान्यनिरूपणेनैव जातमिति रू[14]पभेदनिरूपणस्यानवकाशः । सर्वमवदातम् ।

इति श्रीह[15]रिदत्त(हर?) महाराज[16]परिपालितेन सहजसर्वज्ञविष्णुदेवा[17]-राध्यतनूजेन सर्वज्ञानुजेन चि[18]न्नभट्टेन ।विरचितायां त[19]र्कभाषाव्याक्रियायां तर्कभाषा[20]प्रकाशिकायां प्रमेयादिपरिच्छेदः समाप्तः ॥

---

1 B **वैधर्मो ( र्म्यो? ) त्कर्ष**
2 A B **वर्ण्यावर्ण्य**
3 A **साध्याप्राप्त्यप्राप्ति**
4 B **प्रतिदृष्टान्तानुत्पत्ति**
5 A **प्रकरेण**
6 A **पुनरुक्तभाषण**
7 A **निरनुयोज्यानुयोगापसिद्धान्तो**
8 B **तेषु**
9 B has twice **परवाक्येषूद्भावनीयतया**
10 A **च विज्ञातव्याः**
11 A B **रूपभेदज्ञानं**
12 A B **इह त्वनुपयुक्तं**
13 A omits **च**
14 A **रूपभेदानिरूपणस्यानौचिती-नास्तीति सर्वमवदातम्** B **रूपभेदानि-रूपणस्यानौच्यत्वं नास्ति** ( ? )
15 A **हरिहर**
16 B **परिपालनेन**
17 B **विष्णुदेवराध्यतनूजेन**
18 A **विन्निभट्टेन**
19 A omits **तर्कभाषाव्याक्रियायां**; B **तर्कपरिभाषा**
20 A **तर्कपरिभाषा**

# शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३० | १४ | गणाश्रयो | गुणाश्रयो |
| ६४ | १० | एकस्थानां | एकस्यानां |
| ७६ | ८ | स्फुरणाद् विशेषो | स्फुरणात्। विशेषो |